# तन्त्र-यात्रा

तन्त्रागमदर्शन-विचार-संस्कृति-साहित्य-यात्रावर्णनपराणां
निबन्धानां निर्झरी

# TANTRA-YĀTRĀ

**Essays on Tantra-Āgama Thoughts and Philosophy, Literature, Culture & Travel**

**व्रजवल्लभद्विवेदः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वाराणसेये
सांख्य-योग-तन्त्रागमविभागाध्यक्षचरः

**Vraj Vallabha Dwivedi**
*Former Professor & Head*
*Department of Sāṅkhya-Yoga-Tantrāgama*
Sampurnananda Sanskrit University, Varanasi

**रत्ना पब्लिकेशन्स, वाराणसी**

**RATNA PUBLICATIONS, VARANASI**

# प्रस्तावना

अथायं प्रकाश्यते तन्त्रयात्राख्यः संग्रहो निबन्धानां १९७२ ई० वर्षं यावल्लिखितानां प्रकाशितानां चास्मदीयानामुत्तरप्रदेश-संस्कृत-अकादमीसंस्थाया निर्दिष्टेन आर्थिकेन साहाय्येन। तन्त्रागमदर्शनम्, संस्कृतिसाहित्यम्, विचार-विप्रुषः, यात्रावर्णनमिति चतुर्षु विभागेषु विभक्ता इमे निबन्धाः प्रायः सारस्वती सुषमा, पुराणपत्रिका, सूर्योदय इत्यादिषु पत्रपत्रिकादिषु, अभिनन्दनग्रन्थादिषु च प्रकाशिता इति तेषां विवरणं विषयानुक्रमण्यां द्रष्टव्यम्। प्रथमं तन्त्रागमदर्शन-विषयका अन्ते च यात्रावर्णनपरा. निबन्धाः सन्त्यत्र संगृहीता इति संग्रहस्यास्य "तन्त्रयात्रा" इति नामधेयं सार्थकमेव। अथ च तन्त्रशास्त्रस्य विशेषाध्ययनार्थं कृतानां यात्राणामत्र वर्णनं वर्तते, पर्यन्ततोऽस्मदीया विद्यायात्राऽपि तन्त्रागमशास्त्रयोः पर्यव-सितेत्येतेषां त्रयाणामर्थानां संसूचकोऽयं तन्त्रयात्राशब्द इति विभावनीयं विपश्चिद्भिः।

अत्रत्ये संस्कृतिसाहित्यमिति द्वितीये विभागे संगृहीतः "महाकविभासस्य कालः" इति शीर्षको निबन्धश्छात्रावस्थायां मध्यमाकक्षामधीयानेन मया निबद्धः, सूर्योदयपत्रेण च १९४० ई० वर्षे जनवरीमासे प्राकाश्यं नीत इति वैशिष्ट्याभावेऽपि प्रकाश्यते पुनः। "तेषां मोहः पापीयान्" (४।१।६) इति ह स्माह भगवानक्षपादः। स्वत्वे व्यामूढा भवन्ति योगिनोऽपीति क्षन्तव्यो मेऽपराधः। अन्येषामपि निबन्धानां प्रकाशनकालो विषयानुक्रमणीतो ज्ञायेत। तदवलोकनेनेदमपि ज्ञायेत यद् बाहुल्येन निबन्धानां लघुग्रन्थानां च प्रकाशनं सारस्वत्यां सुषमायां काशिकराजकीयसंस्कृत-महाविद्यालयस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य चानुसन्धानपत्रिकायां त्रैमा-सिक्यां संजातमिति। पत्रिकाया अस्या हि मया १९५१ ई० आरभ्य १९६७ ई० पर्यन्तं सम्पादनं कृतमिति तत् स्वाभाविकमेव।

नवसु खण्डेषु "सुरभारतीसुरभितम्" इति नाम्ना ग्रन्थ एष प्रकाशनीय इत्यासीन्मनीषा लेखकस्य। नाम्नि परिवर्तनं प्रकाशकानुरोधेन प्रोक्तया संस्थयाऽ-ङ्गीकृतम्। मूल्यनिर्धारणं संस्थया क्रियेतेति परिज्ञाय पलायितः सः। परमसुहृदः श्रीमतो डॉ० एन० एच० चन्द्रशेखरस्वामिनः प्रोत्साहनेन प्रवृत्तोऽहमस्य ग्रन्थस्य मुद्रापणे। हन्त ! साम्प्रतं सोऽपि शिवसायुज्यमापन्नः। अस्तु, गवेषणात्मका निबन्धा एवात्र संनिवेश्या इति संस्थाया निदेशमनुपाल्य तान् चतुर्षु खण्डेषु विभज्य यथाकथञ्चिद् ग्रन्थोऽयं समुपस्थाप्यते विदुषां करकमलयोः। वर्णनात्मका निबन्धा

अन्या च बहुविधा सामग्री नात्र स्थानमलभन्त इति ग्रन्थस्य प्रकाशने सौकर्यमिव संजातम् । रचनाकालव्यत्ययेऽपि सर्वप्रथममत्र तन्त्रागमदर्शनविषयका निबन्धाः संनिवेशिताः । अभ्यर्हितं पूर्वमिति हि भगवतः पाणिनेः समयः । विचारविप्रुष इति विभागे च समये समये सारस्वत्याः सुषमाया विभिन्नेष्वङ्केषु सम्पादकीयटिप्पणी-रूपेण प्रकाशिता विशिष्टा विचारात्मका लघुकाया निबन्धाः सूचनाप्रदाष्टिप्पण्यश्च संगृहीताः सन्ति । तत्रैव प्रकाशिता अस्मत्संपादितास्त्रयो लघुग्रन्थाः प्राचीनं निर्णय-पत्रं चात्र पुनः प्रकाश्यन्ते । गुणदोषविवेचका विपश्चित एवात्र प्रमाणम् ।

१९७२ ई० वर्षानन्तरं लिखित एक एव निबन्धोऽत्र तृतीयविभागस्यान्ते संनिवेश्यते "किमर्थमध्येयं संस्कृतम्" ? इति शीर्षकः । महाभाष्यकारस्य पतञ्जले-र्व्याकरणाध्ययनप्रयोजनप्रदर्शकप्रकरणस्य आदिमध्यावसानवाक्यानुकारं रचितः सोऽयं लघुनिबन्धः प्रियतरो ह्यस्माकम् । मन्ये भवतामपि मनोऽनुरञ्जनाय प्रकामं प्रवीणः स्यात् । निबन्धेषु यत्रकुत्रचित् कालपर्ययादन्यथा वा परिवर्धनानि संशोधनानि चापेक्षितानि, तानि सर्वान्तेऽत्र सावधानं संयोजितानि । ग्रन्थानां ग्रन्थकाराणां मतमतान्तराणां नामानुक्रमणी चात्र स्थापिता । पाठकानां सौविध्याय विशिष्ट-विषयानुक्रमणी संनिवेशनीयाऽऽसीत् । वित्तकार्श्यान्न तथा कर्तुमपार्यतेति सोढव्येयं त्रुटिः श्रीमद्भिः । सति समादरेऽस्य ग्रन्थस्य द्वितीये संस्करणे सा पराकृता स्यात् ।

**प्राच्यपाश्चात्यज्ञानराशये गुरुवराय श्रीमते गोपीनाथकविराजमहोदयाय, तत्प्रियशिष्याय सुहृत्प्रवराय अकालकालकवलितकलेवराय डॉ० एन० एच० चन्द्र-शेखरस्वामिने च ग्रन्थोऽयं सादरं सस्नेहं समर्प्यते ।**

रत्नामुद्रणाध्यक्षः श्रीमान् विनयशंकरः पंड्या च धन्यवादशतैः सभाज्यते, येन हि कियन्मात्रं कर्गजमूल्यं गृहीत्वा सम्पूर्णोऽयं ग्रन्थो मुद्रितः । अन्यथा ग्रन्थस्यास्य प्रकाशनं सुदुष्करमेवासीत् । अतः स एवाधुनाऽस्य ग्रन्थस्य मुद्रकः प्रकाशकश्च विद्यते । तदस्मिन् पावने कर्मणि पंड्यामहोदयं डॉ० वैद्यनाथः सरस्वती ह्यस्माकं कल्याणमित्रं प्रवर्तयति स्मेति सोऽप्यत्र सादरं स्मर्यते । उत्तरप्रदेशसंस्कृत-अकादमी च साभारं पुनः स्मर्यते आर्थिकसाहाय्यप्रदानाय । ईक्ष्य(प्रूफ)संशोधने सहायकः पण्डितश्रीहरिवंशत्रिपाठी साधुवादेन, पाण्डुलिप्यादिसज्जीकरणे संलग्ने सुपुत्र्यौ सौ० शोभना त्रिपाठी (एम० ए०, बी० एड०), सौ० आशात्रिवेदी (एम० ए०) इति नाम्न्यौ, ग्रन्थग्रन्थकार-मतमतान्तरनामसूचीसंयोजने कृतसहायश्च चि० तरुणकुमारद्विवेदी शुभाशीर्वचनैः सभाज्यन्ते ।

गुरुपूर्णिमा, २०३९ वि०
६-७-८२ ई०, काशी ।

विदुषां वशंवदः
**व्रजवल्लभद्विवेदः**

# विषयानुक्रमणी



## १—तन्त्रागमदर्शनम्



## २—संस्कृतिसाहित्यम्

## ३—विचारविप्रुषः

## ४—यात्रावर्णनम्



## परिशिष्टम्

# कति तत्त्वानि

भारतीयदर्शनेषु यैः पदार्थैर्जगद्रचना भवति, सृष्टेरारम्भो विकासश्च भवति, तेषां तत्त्वमिति पारिभाषिकी संज्ञा वर्तते। तत्त्वदेवताप्रमाणादि-भेदेन भिन्नेषु भारतीयेषु दर्शनेषु तत्त्वानां संख्यादिविषयेऽतीव वैषम्यं विद्यते। अस्यां परिस्थितौ विभिन्नवादाटवीव्यामूढानां जिज्ञासूनां प्रातिनिध्यमिव कुर्वन्नुद्धवो भागवते भगवन्तं श्रीकृष्णं पृच्छति—

> कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो।
> नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम॥
> केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम्।
> सप्तैके नव षट् केचिच्चत्वार्येकादशापरे॥
> केचित् सप्तदश प्राहुः षोडशैके त्रयोदश।
> (भाग० ११।१२।१-३)

इतः परमस्याध्यायस्य आ पञ्चविंशतिश्लोकं श्रीकृष्णेनैते उद्धवप्रश्नाः समाहिताः। "नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा" (११।२२।५) इत्यभिमान एव वादानामेषां प्रवृत्तिहेतुरित्याह श्रीकृष्णः। मतभेदेन तत्त्वसंख्याविषयं विशदं व्याख्याय प्रकरणोऽयमित्थमुपसंहृतः—

> इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम्।
> सर्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम्॥
> (भाग० ११।१२।२५)

एवमेव अहिर्बुध्न्यसंहितायां अष्टमाध्यायारम्भे तत्त्वसंख्यामनुरुद्ध्य प्रवृत्ता विभिन्ना वादाः संक्षेपेण चर्चिताः सन्ति—

> केचित् त्रैभूतिकीं सृष्टिं ब्रुवते तत्त्ववादिनः।
> चतुर्भूतमयीमन्ये केऽप्यन्ये पाञ्चभौतिकीम्॥
> तां षड्धातुमयीमेके सप्तधातुमयीं परे।
> अष्टप्रकृतिकां केचिन्नवप्रकृतिकां परे॥
> दशतत्त्वमयीमेके केचिदेकादशात्मिकाम्।
> एवमुच्चावचां संख्यां तत्त्वप्रकृतिगोचराम्॥
> वदन्ति मुनयः सिद्धा देवा वेदास्तथैव च।
> (अहि० ८।२-५)

अत्र भागवतेऽहिर्बुध्न्यसंहितायां च विभिन्नाभिः संख्याभिः सह भूतधातुप्रकृतितत्त्वशब्दा व्यवहृताः। पर्यायवाचिन एते शब्दाः। तथापीमे तेषां तेषां वादानां पारिभाषिकीं परम्परां सूचयन्ति—तत्त्वानि कस्मिंश्चिद् वादे भूतनाम्ना, अपरत्र धातुनाम्ना, अन्यत्र च प्रकृतिनाम्ना उच्यन्त इति। अत्रोभयोरपि स्थलयोः परम्परैषा सुरक्षिता तिष्ठति। चरक-संहितायां शारीरस्थाने प्रथमेऽध्याये पुरुषः षड्धातुमयश्चतुर्विंशतिधातु-मयश्चोक्तः। अत्र धातुशब्दप्रयोगस्तत्त्वार्थक एव।

"एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः" (११।२२।५) इति स्पष्ट-तरायामुक्तौ सत्यामपि भागवतटीकाकारैरपि समन्वयात्मिका भागवतदृष्टि-र्नानुपालिता। भागवतसंमतानि कति तत्त्वानीति विषयेऽपि विवदन्ते ते। भागवतस्य बहूनि व्याख्यानानि समुपलभ्यन्ते। तानि प्रायशो रामानुज-निम्बार्क-मध्व-वल्लभ-चैतन्यानां प्रथितानां वैष्णवाचार्याणां मतान्य-नुसरन्ति। अस्य प्रकरणस्यैतन्मतानुयायिभिष्टीकाकारैः स्वस्वसम्प्रदाया-नुरोधि व्याख्यानं विहितम्। अतः किमत्र भागवतसंमतमिति प्रथमं परीक्ष्यते।

भागवतेऽन्यत्र—

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै।
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम्॥
(११।१९।१४)

इत्यष्टाविंशतितत्त्वानि निर्दिशितानि। एषैव भागवतसंमततत्त्वानां संख्या। अत एव प्रकृताध्यायस्यारम्भे—"नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम" इत्यत्र त्वमात्थ = उक्तवानसीति प्रोवाच उद्धवः। अत्रोभयोरपि स्थलयोः—प्रकृतिपुरुषौ, महदहङ्कारौ, पञ्च तन्मात्राणि, एकादश इन्द्रियाणि, पञ्च भूतानि, त्रयो गुणाश्चेत्यष्टाविंशतितत्त्वाना-मुल्लेखो वर्तत इति प्रायशः सर्वे टीकाकाराः समानाभिप्रायाः।

चैतन्यमतानुयायी विश्वनाथः "नवैकादश" (११।१९।१४) इत्यस्य व्याख्यायाममुमेव क्रमं स्वीकरोति, अन्यत्र (११।२२।१) तु प्रकृतिस्थाने ईश्वरं गणयित्वा आह—"अत्र प्रकृतिस्थाने त्रयो गुणा एव गृहीताः" इति। एवं चात्र तन्मते त्रयो गुणा एव प्रकृतिस्थानीयाः, तस्याः पृथक् सत्ता नास्ति। एतच्च मतं पाञ्चरात्रसंमतं वर्तते। पाञ्चरात्रसंहितासु

प्रकृतिः सांख्यदर्शनवन्न नित्या । तत्र हि सत्त्वरजस्तमसां गुणानां क्रमेणोत्पत्तिर्भवति । उत्पन्नानामेषां गुणानां साम्यावस्था प्रकृतिः । इत्थं च त्रिगुणरूपैव प्रकृतिरनित्या च, न पृथङ्नित्यं प्रकृत्याख्यं तत्त्वं तस्मिन् मते । एतदेवात्र विश्वनाथेनाप्युक्तम् । पूर्वत्र (११।१९।१४) तु तेन प्रकृतेस्त्रिगुणानां च पृथगुल्लेखः कृतः, ईश्वरतत्त्वं च तत्र न परिगणितम् । परस्परविरुद्धमेतत्स्थलद्वयीयं व्याख्यानम् । भागवते—"पुरुषः प्रकृतिः" (११।२२।१४) इत्यत्र प्रकृतेरेव ग्रहणं विद्यते न त्वीश्वरस्य । एवं च विश्वनाथचक्रवर्तिनः प्रकृतिस्थाने ईश्वरस्य ग्रहणं भागवतविरुद्धमेव प्रतीयते । पाञ्चरात्रसिद्धान्तानुसरणेनैव तस्य परिहारः कथञ्चित् कर्तुं शक्येत ।

विशिष्टाद्वैतिना वीरराघवाचार्येण श्लोकोऽस्य (११।२२।१) इत्थं व्याख्यातः—"कैश्चिदृषिभिस्तत्त्वानि नव संख्यातानि, कैश्चित्त्वेकादश, कैश्चित् पञ्च । त्वं तु मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यतीति त्रीणि तत्त्वान्यात्थ" इति । ११।१९।१४ इत्यस्य व्याख्यानावसरे चाष्टाविंशतिभावाः परिगणिताः । आद्येषु नवसु भावेष्वनेन सुदर्शनाचार्येण च शब्दस्पर्शरूपरसगन्धा विसर्गशिल्पगत्युक्तयश्च संख्याताः । "रेतउत्सर्गो मूत्रपुरीषोत्सर्गश्चेत्युत्सर्गद्वयस्यैककोटित्वप्रापणेन नवेति निर्देशः, अन्यथा दशेति स्यात्" इति समाधानं चोपस्थापितम् ।

परवर्तिभिर्वैष्णवाचार्यैः प्रस्थानत्रयीवद् भागवतस्यापि प्रामाण्यमङ्गीकृत्य प्रस्थानचतुष्टयी संस्थापिता । यद्यपि रामानुजाचार्येण स्वकीयग्रन्थेषु कुत्रापि भागवतस्योल्लेखो न विहितः, किन्तु तदनुयायिभिर्भागवतस्यापि विशिष्टाद्वैतानुसारी व्याख्यानं कृतम् । उक्तश्लोकव्याख्यानावसरे तस्यैव परिदर्शनं भवति ।

भागवते (११।२२।३-४) श्लोकयोः २६,२५,७,९,६,४,११,१७,१६,१३ संख्याकानां तत्त्वानामुल्लेखः, परवर्तिषु श्लोकेषु तेषां निरूपणं च विद्यते । अहिर्बुध्न्यसंहितायामपि तत्त्वत्रयत आरभ्य एकादशतत्त्वं यावत् परिगणितानि, किन्तु तेषां विवरणं तत्र नास्ति । भागवते तेषां सत्यपि संक्षिप्ते विवरणे विभिन्नसंख्याकानां तत्त्वानामेषामङ्गीकर्तार आचार्याः सम्प्रदाया दर्शनानि वा कानीति न परिज्ञायते । अन्यत्र च २७,३१,३२,३६ संख्याकान्यपि तत्त्वान्युपलभ्यन्ते । सर्वेषामेषां विषये संक्षेपेणात्र विचारः प्रस्तूयते ।

अद्वैतवादिन एकमेव परमतत्त्वमङ्गीकुर्वन्ति। तद् ब्रह्म, परवासुदेवः, शिवः, शक्तिः, शून्यं वेति दर्शनभेदेन भिद्यते।

द्वैतवादिनां मते ईश्वरो जीवश्चेति द्वे तत्त्वे स्तः। स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वमिति श्रीपूर्णप्रज्ञाचार्यास्तत्त्वसंख्याने प्राहुः। जीवाजीवाख्ये द्वे तत्त्वे [१]इत्यार्हताः।

जीवेश्वराभ्यां सह प्रकृतेः संमेलनेन त्रीणि तत्त्वानि जायन्ते। [२]मन्त्रिकोपनिषदि—"अद्वैतं द्वैतमित्याहुस्त्रिधा तम्" इत्युक्तम्। [३]चूलिकोपनिषद्यपि पाठभेदेनैतद्वचनमुपलभ्यते। छान्दोग्योपनिषदि (६।४) पृथिव्यप्तेजांसि सृष्टिकारणत्वेन व्याख्यातानि। एतदेव वेदान्तसिद्धायाास्त्रिवृत्करणप्रक्रियाया आधारस्थलम्। अन्यत्र च—"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुनश्चैकादशः स्मृतः" (७।२६।२) इत्युक्तम्। [४]केचन आचार्यास्त्रयो गुणा एव जगत्कारणानीति मन्वते। रामानुजनिम्बार्काचार्ययोर्मते ब्रह्मचिदचिन्नामकानि त्रीणि तत्त्वानि सन्ति। रामानुजमतानुयायिनौ सुदर्शनसूरिवीरराघवाचार्यौ निम्बार्कानुयायी शुकदेवश्च भागवतस्यैतस्य प्रकरणस्य तत्त्वत्रयप्रतिपादनपरमेव व्याख्यानं कृतवन्तः। अपरे रामानुजीया द्रव्याद्रव्यभेदेन द्विविधं तत्त्वमङ्गीकुर्वन्ति।

चार्वाकाश्चतुर्भूतमयीं सृष्टिमातन्वते। एभिराकाशं नाङ्गीकृतम्। पालिवाङ्मयेऽपि महाभूतेषु धातुषु वा आकाशो न परिगणितः। तत्रापि चत्वार्येव महाभूतानि। परवर्तिनि बौद्धसाहित्येऽस्यासंस्कृतधातुषु समावेशः कृतः। बुद्धकालीनाः केचन जडवादिनो दार्शनिका अपि चत्वारि भूतानि मन्यन्ते स्म। भागवते—"चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः" (११।२२।२१) इति चत्वारि भूतानि परिगणितानि। अत्र छान्दोग्योपनिषद्वर्णिततत्त्वत्रयैः साकं चतुर्थमात्मतत्त्वं समावेशितम्।

पञ्चभूतात्मिका सृष्टिरुपनिषत्सु नैकत्र परिवर्णिता। वेदान्तस्य पञ्चीकरणप्रक्रियाऽमुं सिद्धान्तमेवावलम्बते। भागवतस्य प्रस्तुते प्रकरणे पञ्चभूतसिद्धान्तः पृथङ् न निर्दिष्टः। अष्टाविंशतितत्त्वपरिगणनावसरे पञ्चशब्देन

---

१. सर्वदर्शनसंग्रहे, पृ० २७ आनन्दाश्रमीये द्वितीये संस्करणे।
२. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ० २५२
३. आनन्दाश्रमीयोपनिषदां समुच्चये, पृ० २७२
४. तत्रैव टीकायाम्, पृ० २७३

पञ्चतन्मात्राणां पञ्चभूतानां वोल्लेखष्टीकाकारैः कृतः। "सत्त्वं ज्ञानम्" (११।२२।१३) इति पद्यव्याख्यायां शुकदेवेन ब्रह्मचिदचिद्भिः साकं कालस्वभावयोः परिगणनेन पञ्च तत्त्वानि स्वीकृतानि। वीरराघवेण च "इति नाना" (११।२२।२५) इत्यत्र तेजः, जलम्, अन्नम्, आत्मा, वायुश्चेति पञ्च तत्त्वानि परिदर्शितानि। जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्च तत्त्वानीत्याहुर्तैकदेशिनः[1]।

"षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्" (११।२२।२०) इति वर्तन्ते षट् तत्त्वानि। अयं च सिद्धान्त आत्मषष्टवादत्वेन प्रसिद्धयति। चरकसंहितायाः शारीरस्थाने चैष—"खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः" (१।१६) इत्यादिना व्याख्यातः। पञ्चमाध्याये च—"षड्धातुसमुदायो हि सामान्यतः सर्वलोकः" इत्युक्तम्। अहिर्बुध्न्यसंहितायाम्—"तां (सृष्टिं) षड्धातुमयीमेके" (८।३) इति षाड्धातुकसृष्टिवाद उपस्थापितः। नागार्जुनेन माध्यमिककारिकायां चत्वारि भूतानि, आकाशविज्ञाने चेति षड्धातवः प्रतिपादिताः। षाड्धातुकवाद आयुर्वेदविदां बौद्धानां वा स्यात्। सुश्रुतसंहितायाः शारीरस्थाने—"वैद्यके तु [2]स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा। [3]परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥" इति षट् तत्त्वानि परिगणितानि। स्वभावेश्वरकालनियतयो दर्शनान्तरेष्वपि तत्त्वानि स्वीकृतानि। "कालः स्वभावो नियतिर्यदृच्छा" (१।२) इति श्वेताश्वतरोपनिषदि यदृच्छातत्त्ववादिनामुल्लेखो वर्तते।

"सप्तैव धातव इति तत्रार्थाः पञ्च खादयः। ज्ञानमात्मा" (११।२२।१४) अत्र सप्तधातुवादः समुपस्थापितः। व्याख्यातृभिश्च ज्ञानमात्मा चेति जीवात्मपरमात्मानावङ्गीकृतौ। वस्तुतस्त्वेतदपि मतमायुर्वेदविदां प्रतीयते। चरकसंहितायाः पूर्वोद्धृते स्थले यद्यपि चेतनाधातुरेव पुरुषोऽङ्गीकृत-

---

१. सर्वदर्शनसंग्रहे, पृ० २८

२. म०म० गोपीनाथकविराजमहोदयेन "Theism in Ancient India" शीर्षके निबन्धे स्वभाव-नियति-काल-यदृच्छावादानां सम्यक् परिचय उपस्थापितः। द्रष्टव्यम्—Sarasvati Bhavan Studies, Vol. II. P. 93-111.

३. "प्रधानमेव महदहङ्कारादिरूपतया परिणतं सर्वस्य निमित्तमिति परिणामवादिनः" इति डल्हणाचार्यो व्याचख्यौ।

स्तथाप्यात्मनः पृथग् ज्ञानमङ्गीकुर्वतामपि तत्र कश्चन मतविशेषः स्यादिति संभाव्यते। भागवते—"सत्त्वं ज्ञानं[1] रजः कर्म तमोऽज्ञानमिहोच्यते। गुणव्यतिकरः कालः स्वभावः सूत्रमेव च॥" (११।२२।१३) इत्यत्रान्येषां तत्त्वानां परिगणितेष्वष्टाविंशतितत्त्वेषु समावेशः कृतः। अतो ज्ञायते केषाञ्चन मते एतानि तत्त्वान्तराण्यासन्निति। श्लोकोऽयं व्याख्यातृभिरनेकधा व्याख्यातः। अनेकैरत्र केवलं कालस्वभावौ चर्चितौ। केचन कालमेव मतान्तरेण पृथक् तत्त्वमङ्गीकृत्य तस्य गुणेषु समावेशं कुर्वन्ति। अपरे सूत्रमपि पृथक्तत्त्वमङ्गीकुर्वन्ति। श्रीधरस्वामिनात्र ज्ञानादीनां यथायथमन्तर्भावः प्रदर्शितः। राधारमणगोस्वामिनैकादशश्लोकव्याख्यायां ज्ञानतत्त्वस्य पार्थक्याशङ्कोपस्थापिता। त्रयोदशः श्लोको यद्यपि श्रीधरस्वामिना न विशदं व्याख्यातस्तथापि तत्प्रदर्शितया पद्धत्या श्लोकस्यास्य—ज्ञानस्य सत्त्वे, कर्मणो रजसि, अज्ञानस्य तमसि समावेशः, कालो गुणानां व्यतिकर एव, स्वभावः सूत्रमर्थान्महत्तत्त्वमित्यर्थः संपद्यते। वराहमिहिरेण बृहत्संहितायाम्—"कालं कारणमेके स्वभावमपरे परे जगुः कर्म" (१।७) इत्युक्तम्। तद्व्याख्यायां भट्टोत्पलेनैतानि मतानि संक्षेपेण निरूपितानि। वल्लभमतानुयायी पुरुषोत्तमः प्रस्थानरत्नाकरे प्रमेयप्रकरणे (पृ० १६४-१६५) प्रमेयस्य स्वरूपकोटौ अक्षरेण सह कालस्वभावकर्मणां समावेशं करोति। एवमेव ज्ञानाज्ञाने तत्त्वान्तरे इत्यङ्गीकुर्वाणा आसन् केचन। ज्ञानं तत्त्वान्तरमित्यङ्गीकुर्वाणा आयुर्वेदविद एव स्युः, यतो हि भागवतेऽहिर्बुध्न्यसंहितायां चात्र धातुशब्दप्रयोगो विद्यते। बौद्धानां वैतन्मतं स्यात्। नागार्जुनेन माध्यमिककारिकायां पञ्च महाभूतानि विज्ञानं चेति षड्धातवोऽभिहिताः। विज्ञानं चात्र ज्ञानस्वरूपमेव। शिवोपनिषदि—"पञ्चविंशकमज्ञानम्" (१।१२) इत्यज्ञानं पञ्चविंशतितमं तत्त्वमङ्गीकृतम्। "अज्ञानमेव मुमुक्षुणा मुक्तिपथप्रवृत्तेनाभ्युपगन्तव्यम्, न तु ज्ञानम्" इत्यज्ञानवादिनां मतं गुणरत्नेन [2]षड्दर्शनसमुच्चयटीकायां प्रपञ्चितम्। पालिवाङ्मये पकुधकच्चायनस्यान्येषां दार्शनिकानां च सप्तकायवाद उपस्थापितः। अत्र चत्वारि महाभूतानि, आत्मा, सुखदुःखे चेति सप्त तत्त्वान्यङ्गीकृतानि। जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानीत्यपरे [3]आर्हतैकदेशिनः।

१. "सत्त्वात् संजायते ज्ञानम्" (भगवद्गीतायाम्, १४।१७)

२. द्रष्टव्यम्—पृ० १६-१८

३. सर्वदर्शनसंग्रहे, पृ० २४

अष्टतत्त्ववादिनः सिद्धान्तस्य भागवते नोल्लेखः, अहिर्बुध्न्यसंहितायां तु वर्तते। अनया संख्यया सह तत्र प्रकृतिशब्दप्रयोगो वर्तते। एष च सिद्धान्तो गीतायाम्—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥" (७।४) इत्येवमुपलभ्यते। चरकसंहितायां शारीरस्थाने—"प्रकृतिश्चाष्टधातुकी" (१।१७) इत्युक्तम्। शिवपुराणे[1] च प्रकृतिमहदहङ्कारपञ्चतन्मात्रारूपा अष्टौ प्रकृतय उक्ताः। गीतायामत्र सांख्यसंमतमूलप्रकृतेः परिगणनं नास्ति। तस्य स्थाने मनः परिगृहीतम्। संमिलितानामेषामष्टधा भिन्ना प्रकृतिरिति च निरूपणं कृतम्। इय चापरा प्रकृतिः। भागवते—"अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ" (११।२२।२४) इति नवतत्त्वपरिगणनेऽष्टप्रकृतीनामुल्लेखोऽस्ति। एतच्च गीतासम्मतमेव प्रतीयते, यतो हि तत्राष्टप्रकृतिभ्योऽतिरिक्तं नवमं तत्त्वमात्मा। एतदेव—"इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम्" (७।५) इति गीतायां जीवभूता परा प्रकृतिरित्युक्तम्। [2]महाभारते शान्तिपर्वणि सप्तर्षयः स्वायंभुवो मनुश्चेत्यष्टौ प्रकृतयः उक्ताः। आभ्योऽष्टाभ्यः प्रकृतिभ्यश्चेदं विश्वं जगज्जातमिति। प्राचीनबौद्धजैनग्रन्थेभ्यः प्रतीयते यत्तदा सर्वैरपि दार्शनिकैश्चत्वारि तत्त्वानि निर्विवादं स्वीकृतान्यासन्। आकाशकालदिशः पृथक् तत्त्वानि सन्ति न वेत्यत्र महान् विवादः प्रचलति स्म। पृथक्तत्त्ववादिनः प्रबलाभिर्युक्तिभिस्तान्यसाधयन्। एभिः सप्तभिर्द्रव्यैः सहात्ममनसोः संयोगेन वैशेषिकैः प्राभाकरैश्च नव द्रव्याणि स्वीकृतानि। षड्दर्शनसमुच्चये—"जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ। बन्धश्च निर्जरामोक्षौ नवतत्त्वानि तन्मते॥" (४७ का०) इति जैनमते नवतत्त्वानि प्रदर्शितानि।

दशतत्त्ववादी सिद्धान्तो भागवते नोपलभ्यते, अहिर्बुध्न्यसंहितायां च दृश्यते। अत्र कानि दश तत्त्वानि? के चास्य सिद्धान्तस्यानुयायिनः संस्थापका वेति विचारार्होऽयं विषयः। कुमारिलभट्टेन वैशेषिकाणां नवद्रव्येषु शब्दतमसी समाविष्टे, अथ चैकादश द्रव्याण्यङ्गीकृतानि। मीमांसका वेदापौरुषेयवादिनः। तत्र शब्दस्य नित्यत्वमत एव द्रव्यत्वं चाङ्गीक्रियते। वैशेषिकमीमांसकयोर्मध्ये तमोद्रव्यवादिनोऽथ च शब्दगुणवादिनो दार्शनिकाः सभाव्यन्ते। तमोद्रव्यवादस्य वैशेषिकग्रन्थेषु महता आडम्बरेण खण्डनं दरीदृश्यते।

---

1. शिवपुराणे वायवीयसंहितायां पूर्वभागे, १०।३६
2. शान्तिपर्वणि ( मोक्षधर्मे ), ३४०।३४-३६, पृ० ५३५६-५३५७

अहिर्बुध्न्यसंहितायामेकादशतत्त्वेभ्योऽधिकानि न परिगणितानि। भागवते—"एकादशत्वे आत्मासौ महाभूतेन्द्रियाणि च" (११।२२।२४) इत्येकादश तत्त्वानि सन्ति। तथैव—"भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश" (११।२२।२३) इति त्रयोदश तत्त्वानि कथितानि। अत्रात्मनो जीवात्मपरमात्मानौ द्वौ भेदौ विधाय टीकाकारैस्त्रयोदशसंख्या संपादिता।

"संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च। पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः॥ तद्वत् षोडशसंख्याने आत्मैव मन उच्यते।" (११।२२। २२-२३) अत्र सप्तदशतत्त्वानां षोडशतत्त्वानां च परिगणनमस्ति। नैयायिकानां प्रमाणप्रमेयादयः षोडश पदार्थाः [1]प्रमाणसमुच्चये तद्वृत्तौ च षोडशतत्त्वरूपेण परिगणिताः। प्रश्नोपनिषदि—"षोडशकलः पुरुषः" (६।१) इत्युक्तम्। षोडशकलाश्च—"स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः। अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च॥"(६।४) इति परिगणिताः। आभिः कलाभिः सह वर्तमानः पुरुषः स्वयं सप्तदशः स्मृतः। भागवतीयनिरूपणस्य तु कश्चनान्य एवाधारः स्यात्।

निम्बार्कमतानुयायिना शुकदेवेन "पुरुषः प्रकृतिर्व्यक्तम्" (११।२२।१४-१५) इत्यादिश्लोकद्वयव्याख्यायां विंशतितत्त्वपक्ष उपस्थापितः, न केनाप्यन्येन टीकाकारेण। वस्तुतस्त्वत्राध्यायारम्भे परिगणितानां नवतत्त्वानामथ चैकादशतत्त्वानां परिगणनमस्ति, पञ्च तत्त्वानि (पञ्च महाभूतानि), त्रीणि तत्त्वानि (त्रिगुणानि) च प्रसिद्धानि, अतस्तानि नोल्लिखितानि। अग्रिमे श्लोके ज्ञानेन्द्रियकर्मेन्द्रियाणां दश विषया निरूपिता वर्तन्ते। अस्य श्लोकस्य व्याख्याकारैरन्यथैव व्याख्यानं विहितम्। श्रीधरस्वामिना पूर्वार्द्धे पञ्चतत्त्वानि, उत्तरार्द्धे च कर्मेन्द्रियाणां फलानि प्रदर्शितानि। चैतन्यमतानुयायिना जीवगोस्वामिना विश्वनाथेन चाप्यमेवार्थः प्रकटीकृतः। विजयध्वजेन शुकदेवेन चोपरि प्रदर्शितो यथार्थ एवात्र प्रकटीकृतः, पूर्वत्र (११।१४।१४) तु नवैव विषयाः परिगणिताः। माध्वमते—परमात्मलक्ष्मीजीवाव्याकृताकाशप्रकृतिगुणत्रयमहत्तत्त्वाहङ्कारतत्त्वबुद्धिमनइन्द्रियमात्राब्रह्माण्डाविद्यावर्णान्धकारवासनाकालप्रतिबिम्बभेदाद् विंशतिद्रव्याण्यङ्गीकृतानि सन्ति।

---

१. "तत्त्वानि षोडशामुत्र" ( १४ कारि० )।

प्रकृत्यादिचतुर्विंशतिजडतत्त्वानि चेतनं पुरुषतत्त्वं च स्वीकृत्य सांख्यकारिकायां पञ्चविंशतितत्त्वानि निरूपितानि। पुराणेषु प्रतिपादिते निरीश्वरसांख्ये एतेषां विस्तरेण प्रपञ्चो विद्यते। योगसूत्रे, महाभारते, पुराणेषु च प्रदर्शिते सेश्वरसांख्ये ईश्वरेण सह षड्विंशतितत्त्वानि सन्ति। [1]माण्डूक्यकारिकायां [2]मण्डलब्राह्मणोपनिषदि चैतानि चर्चितानि। [3]महोपनिषदि, [4]नारदपरिव्राजकोपनिषदि, [5]नारायणपूर्वतापिन्यां च पञ्चविंशतितत्त्वानि निरूपतानि। [6]सामरहस्योपनिषदि महाविष्णुः षड्विंशं तत्त्वं निगदितम्। [7]मन्त्रिकोपनिषत् [8]चूलिकोपनिषच्च षड्विंशं सप्तविंशं च तत्त्वमङ्गीकुरुतः। शिवोपनिषदि—"गुणो बुद्धिरहङ्कारस्तन्मात्राणीन्द्रियाणि च। भूतानि च चतुर्विंशदिति पाशाः प्रकीर्तिताः॥ पञ्चविंशकमज्ञानं सहजं सर्वदेहिनाम्। पाशजालस्य तन्मूलं प्रकृतिः कारणाय नः॥ षड्विंशकश्च पुरुषः पशुरज्ञः शिवागमे। सप्तविंश इति प्रोक्तः शिवः सर्वजगत्पतिः॥" (१।११-१३) इत्येवं तत्त्वानि निरूपितानि। चूलिकोपनिषद्व्याख्याता [9]नारायणः—"मात्रा भूतानीन्द्रियाणि मनो बुद्धिरहङ्कृतिः। महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः॥ चित्तेन साहित्ये सप्तविंशः" इत्येवं सप्तविंशतितत्त्वानि परिगणयति। "सप्तविंशमथापरे" इति श्रुतिव्याख्यानावसरे [10]वीरराघवाचार्यः [11]सुदर्शनाचार्यश्च सप्तविंशतितत्त्वसंख्यां कालं पृथक्तत्त्वमङ्गीकृत्य पूरयतः। [12]वेदान्तदेशिकेनापि—"तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इति श्रुतिं समुद्धृत्य कालः परमव्योम (नित्यविभूतिः) च पृथक्तत्त्वे परिगणिते। सर्वमेतदुपर्युद्धृतशिवोपनिषद्वचनापरिचयसूचकं प्रतीयते।

भागवतसंमतान्यष्टाविंशतितत्त्वानि पूर्वं निरूपितानि। पुरुषोत्तमेन प्रस्थानरत्नाकरे प्रमेयप्रकरणे (पृ० १६४) प्रमेयस्य स्वरूपकोटि-कारणकोटि-

---

१. मा० का० २।२६ २. म० ब्रा० उ० १।४ ३. म० उ० १।१
४. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ० ३२१
५. अड्यारसंस्करणे, पृ० ७८ ६. तत्रैव, पृ० २४१
७. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ० २५२
८. आनन्दाश्रमीयोपनिषदां समुच्चये, पृ० २७२
९. तत्रैव, पृ० २७३
१०. भागवतव्याख्यानम्, ११।२२।१३-१६ ११. तत्रैव, ११।२२।१७
१२. वेदान्तदेशिकग्रन्थमालायां तत्त्वमुक्ताकलापे, पृ० १६३

कार्यकोटिनामानस्त्रयो भेदाः कृताः। स्वरूपकोटौ अक्षर-काल-कर्म-स्वभावानां परिगणनमस्ति। कारणकोटौ भागवतसंमतानामष्टाविंशतितत्त्वानामन्तर्भावो विद्यते। अपूर्ण एवायं ग्रन्थ उपलब्धः, अतः कार्यकोटौ केषां परिगणनमिति न परिज्ञायते।

अहिर्बुध्न्यसंहितायां शुद्धेतरसृष्टिप्रकरणे षष्ठेऽध्याये कूटस्थपुरुषस्य त्रिगुणानां च मध्ये शक्तिनियतिकालानां त्रयाणां तत्त्वानां परिगणनं वर्तते। कालात् क्रमशः सत्त्वरजस्तमसामुत्पत्तिः। एषां साम्यावस्था प्रकृतिः। प्रकृतिश्च त्रिगुणेभ्यो न पृथक् तत्त्वान्तरम्। भागवते तु प्रकृतिस्त्रिगुणानि च पृथक् तत्त्वान्तराणि सन्ति। एवं च अहिर्बुध्न्यसंहिताया त्रिंशत्तत्त्वानि प्रतिपादितानि। अत्र च शुद्धसृष्टेः समावेशो नास्ति।

माण्डूक्यकारिकायाम्—"एकत्रिंशक इत्याहुः" (२।२६) इत्येकत्रिंशतत्त्ववादी सिद्धान्त उल्लिखितः। अत्र भाष्ये—"पाशुपतास्तु रागाविद्यानियतिकालमायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते" इत्युक्तम्। शैवागमेषु षट्त्रिंशत्तत्त्वानि प्रतिपादितानि। उक्तेष्वेकत्रिंशत्तत्त्वेषु शिवशक्तिसदाशिवेश्वरशुद्धविद्यानामकानां पञ्चतत्त्वानां संयोजनेनैषा संख्या संपद्यते।

माध्वमतानुयायी विजयध्वजः "सर्गादौ" (११।२२।१७) इति पद्यव्याख्यायाम्—"चतुस्त्रिंशत्तत्त्वानीति भागवतं मतम्" इत्याह।

षड्दर्शनसमुच्चयटीकायां गुणरत्नकृतायाम्—"सूत्रकृदाख्ये द्वितीयेऽङ्गे परप्रावादुकानां त्रीणि शतानि त्रिषष्ट्यधिकानि परिसंख्यायन्ते। तदर्थसंग्रहगाथेयम्—

[1]असिइसयं किरियाणं अकिरियवाईण होइ चुलसीई।
अन्नाणिअ सत्तट्ठी वेणइयाणं च बत्तीसं॥" (पृ० १०)

इत्युक्तम्। अन्यान्यपि नानामतानि बौद्धनिकायेषु महाभारतपुराणादिषु च दरीदृश्यन्ते। अस्यां परिस्थितौ विविधास्वासु दृष्टिषु सामञ्जस्यं सम्पादयता भागवतकारेण युक्तमेवोक्तम्—"इति नानाप्रसंख्यानं तत्त्वाना-

---

१. अशीत्यधिकं शतं क्रियावादिनामक्रियावादिनां भवति चतुरशीतिः।
अज्ञानिनां सप्तषष्टिर्वैनयिकायां च द्वात्रिंशत्॥ इति च्छाया।

मृषिभिः कृतम् । सर्वं न्याय्यम्" (११।२२।२५) इति। इयमेव भागवतानां समन्वयात्मिका दृष्टिः कालक्रमेण पल्लविता। एतत्प्रभावितानामेव—"यं शैवाः समुपासते शिव इति" इत्यादयः पद्यबन्धाः समुपलभ्यन्ते। अत एव [1]केनचिच्चिरन्तनेनार्हतेनाप्युक्तम्—

श्रोतव्यः सौगतो धर्मः कर्तव्यः पुनरार्हतः।
वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः॥

॥ इति शम् ॥

---

१. षड्दर्शनसमुच्चयटीकायां मणिभद्रकृतायाम्, पृ० ६५ (तृतीये संस्करणे)।

# वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

## शब्दब्रह्म

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

पुराणेष्वागमेषु चैष श्लोको नैकत्र दरीदृश्यते। व्याकरणे विशेषतो वाक्यपदीये ब्रह्मकाण्डे शब्दब्रह्म प्रतिपादितम्, तत् परब्रह्मस्थानीयमेव। आगमेषु तदनुवर्तिषु पुराणेषु च शब्दब्रह्म विशेषतः, संक्षेपतश्च परब्रह्म निरूप्यते। शैवशाक्तवैष्णवेषु सर्वेष्वागमेषु स्वस्वप्रक्रियया चर्चितोऽयं विषयः।ताननुरुद्ध्य षडध्वभिन्नस्य शब्दब्रह्मणोऽत्र विचारः प्रस्तूयते।

## आगमप्रतिपाद्यम्

सर्वेष्वागमेष्वविशेषेण चत्वारः प्रतिपाद्या विषया भवन्ति ज्ञानक्रिया-चर्यायोगनामानः। तत्र शिवपुराणे इत्थं वर्तन्ते लक्षणान्येतेषाम्—

पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते।
षडध्वशुद्धिर्विधिना गुर्वधीना क्रियोच्यते ॥
वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च।
ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते ॥
मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः।
वृत्त्यन्तरनिरोधो हि योग इत्यभिधीयते ॥[1] इति।

अत्र ज्ञानं विहायान्येषां लक्षणानि सर्वत्र समानान्येव। क्रियाया लक्षणस्यावलोकनेन परिज्ञायते यद् कियद् वर्तते षडध्वपरिज्ञानस्य प्रयोजनम्।

## वैष्णवागमाः

"पाञ्चरात्रं भागवतं तथा वैखानसाभिधम्"[2] इत्यत्र वैष्णवागमानां भेदत्रयं निर्दिष्टम्। तत्र वैखानसागमः प्रसिद्धचरः, दक्षिणभारते तिरुपति-

---

१. शि० पु०, ७।२।१०।३१-३३

२. नित्याषोडशिकार्णवसेतुबन्धे भास्कररायरचिते उद्धृतम्। द्रष्टव्यम्—पृ० ५

क्षेत्रे भगवतः श्रीनिवासस्य पूजोत्सवादिकं वैखानसागमप्रक्रिययैव भवति। तत्रत्यवेङ्कटेश्वरशोधसंस्थानतश्चानेके ग्रन्थास्तदागमप्रतिपादकाः प्रकाशिताः। तत्र दक्षिणभारतेऽन्येषु स्थलेषु च तदागमीया नैका मातृका अद्यावध्यप्रकाशिताः सन्ति। पाञ्चरात्रस्य भागवतस्य च मतस्य पृथक्त्वेनोल्लेखो हर्षचरिते[1] बाणभट्टरचिते दृश्यते। हयशीर्षपञ्चरात्रे[2] पाञ्चरात्रसंहितानां भागवतसंहितानां च पृथक् पृथगुल्लेखो वर्तते। अत्रत्यं भागवततन्त्रं मध्वाचार्येण भागवततात्पर्यप्रकाशे[3] जीवगोस्वामिना च षट्सन्दर्भे[4] उद्धृतम्। एवं सत्यपि साम्प्रतं भागवतागमस्य कापि संहिता सम्प्रदायो वा नोपलभ्यत इव।

## पाञ्चरात्रागमः

पाञ्चरात्रमतं महाभारते शान्तिपर्वणि नारायणीयोपाख्याने विस्तरेण चर्चितम्। "सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः"[5] इत्यत्र पाञ्चरात्रागमस्य प्रधानतमायाः सात्वतसंहिताया एवोल्लेख इति प्रतिभातीव। अस्यागमस्य सिद्धान्तानां साहित्यस्य च विशिष्टः परिचयः शर्मण्यदेशीयेन विदुषा डॉ॰ श्रादरमहोदयेन अहिर्बुध्न्यसंहिताया भूमिकायां विस्तरेण प्रदत्तः। हयशीर्षपञ्चरात्र-अग्निपुराण-कपिञ्जलसंहिता-विष्णुतन्त्र-पाद्मतन्त्राख्येषु ग्रन्थेषु संकलितानां संहितानाम्नामन्येषां च कतिपयग्रन्थानां साहाय्येन[6] श्रादरमहोदयेन २१५ संख्याकानां संहितानाम्नां संकलनं कृतम्। मार्कण्डेयसंहितायां भारद्वाजसंहितायामपि च संहितानामान्युट्टङ्कितानि सन्ति। तानि च नामानि लक्ष्मीतन्त्रभूमिकायां[7] द्रष्टव्यानि।

---

१. ····भागवतैः····पाञ्चरात्रिकैः····पृ० २३६-२३७ निर्णयसागरसंस्करणम्।

२. द्रष्टव्याः २।२-९ श्लोकाः। अत्र प्रथमं पाञ्चरात्रसंहितानां २५ संख्याकानामुल्लेखः (इमानि च नामानि पाठभेदेन सहाऽग्निपुराणेऽपि ३९ अध्यायारम्भे दृश्यन्ते), तदनन्तरं भागवतसंहितानामथ च सामान्यसंहितानां नामानि सन्ति। अत्र डॉ॰ श्रादरमहोदयेन अहिर्बुध्न्यसंहिताभूमिकायां सर्वा एताः संहिताः पाञ्चरात्रस्यैवेत्युक्तम्।

३. द्रष्टव्यम्—पृ० १, सर्वमूल-निर्णयसागरसंस्करणम्।

४. द्रष्टव्यम्—पृ० १७,२२ इत्यादिकम्।

५. महाभारते भीष्मपर्वणि, ६६।४० गीताप्रेससंस्करणम्।

६. द्रष्टव्यम्—पृ० ६-१२

७. द्रष्टव्यम्—पृ० १०-१३

[1]अनिरुद्धसंहिताभूमिकायामद्यावधि २७५ संख्याकाः पाञ्चरात्रसाहित्य-ग्रन्था विस्तृते संस्कृतवाङ्मये उद्धृता उपलभ्यन्त इति संसूचितम्। अस्य च विस्तृतस्य साहित्यस्य परिचयः सत्यवसरे पश्चादुपस्थापयिष्यते। उत्पलवैष्णवकृतायां स्पन्दप्रदीपिकायां[2] पाञ्चरात्रश्रुतय उद्धृताः सन्ति। पाञ्चरात्रागमाधारभूत एकायनो वेदः सुबहुशस्तत्र तत्र चर्च्यते। सोऽय-मागमः कदाचित् काश्मीरेषु लब्धप्रचार आसीत्। साम्प्रतं तु दक्षिणभारते एवास्य दृश्यते विशिष्टा मान्यता, यत्र श्रीरङ्गक्षेत्रे श्रीविष्णुकाञ्च्यादिषु च पाञ्चरात्रागमप्रक्रिययैव शेषशायिनो भगवतः पूजोत्सवादिकं सम्पाद्यते।

**पाञ्चरात्रदर्शनम**

रामानुज-निम्बार्क-मध्व-वल्लभ-चैतन्यानां वैष्णवदर्शनानां विकासो वैष्णवागममूलक एव। सर्वदर्शनसंग्रहकारेण[3] माधवेन रामानुजमध्वयोः पाञ्चरात्रप्रामाण्याङ्गीकाररूपं साम्यं प्रदर्शितम्। निम्बार्कमतीया विचार-सरणिः पाञ्चरात्रमूलिकैव प्रायशः। चैतन्यदर्शने भागवततन्त्र-नारदपाञ्च-रात्र-ब्रह्मसंहितादीनां विशिष्टः प्रभावः, वल्लभवेदान्ते च प्रायशो भागवत-पुराणस्य। एवं सत्यपि सर्वेषामेषां दर्शनानां विकासो ब्रह्मसूत्रव्याख्यानपद्ध-त्या समजायतेति पाञ्चरात्रपद्धत्या कियद्वैषम्यमिवावलोक्यते।[4]दर्शनानामेषां प्रचारेण पाञ्चरात्रागम उत्तरभारते विद्वत्सभासु साम्प्रतं विस्मृत इव दृश्यते, अथापि वैयाकरणमूर्धन्येन भट्टोजिदीक्षितेन [5]तन्त्राधिकारिनिर्णयाख्ये ग्रन्थे पाञ्चरात्रप्रामाण्यं व्यवस्थापितम्। शक्तिसङ्गमाख्ये तन्त्रे[6], यस्य

---

१. द्रष्टव्यम्—पृ० ३ २. द्रष्टव्यम्—पृ० २,८,२२,२९,४० इत्यादिकम्।

३. पाञ्चरात्रोपजीव्यत्व''''साम्येऽपि''''पृ० ४९ (पूनासं०)

४. रामानुजशिष्याणां कूरेशप्रभृतीनां परम्परासु पश्चात् 'टैंगलै' इत्याख्यया प्रसिद्धे विभागे आलवारोपदिष्टस्य द्रविडवेदस्य प्राधान्येन प्रामाण्यमङ्गी-क्रियते। दक्षिणदेशे लोकाचार्यप्रभृतीनां ग्रन्थेषु, उत्तरभारते च कूरेश-शिष्यपरम्परायामाविर्भूतस्य रामानन्दस्य ग्रन्थेषु वैशद्येन दृश्यते पाञ्च-रात्रागमप्रभावः। अद्यापि च तत्राधीयन्ते पाञ्चरात्रसंहिताग्रन्थाः।

५. वाराणस्यां नेपालीसौभाग्यपुस्तकालयतः प्रकाशितः।

६ वैखानसो भवेदादौ श्रीराधावल्लभस्तथा।
गोकुलेशो महेशानि तथा वृन्दावनी भवेत्॥
पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः।
रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि॥
ततो भागवतो देवि दश भेदाः प्रकीर्तिताः। (१।८।३८-४०)

रचना प्रायः पातशाहअकब्बरराज्यकाले समजायत, दशविधवैष्णवदर्शनेषु पाञ्चरात्रस्याप्युल्लेखो वर्तते। महिम्नस्तोत्रे उल्लिखितस्य "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति"[1] इति सिद्धान्तपञ्चकस्य पुराणवाङ्मये विस्तरेण विवेचनं दृश्यते[2]। तत्र वैष्णवपदेन पाञ्चरात्रमेवाङ्गीकुर्वन्ति सूरयो मधुसूदनसरस्वतीप्रभृतयः। शैवशाक्तागमेषु, स्मृतिग्रन्थेषु, धर्मशास्त्र-निबन्धेषु च प्राचीनार्वाचीनेषु दृश्यते पाञ्चरात्रचर्चा। "अन्तः शाक्ताः, बहिः शैवाः, लोके वैष्णवाः"[3] इति कौलोपनिषदुक्तिर्वैष्णवागमेषु रहस्य-शून्यत्वं सन्देहातीतत्वं सर्वविधदोषशून्यत्वं च ख्यापयति।

महाभारतीये नारायणीयोपाख्याने दृश्यते पाञ्चरात्रसिद्धान्तस्योल्लेख इत्युक्तं प्राक्। सात्वत-पौष्कर-जयाख्यसंहिताः पाञ्चरात्रागमेषु रत्नत्रय-नाम्ना प्रसिद्धाः। ईश्वर-पारमेश्वर-पाद्मसंहिताः क्रमश आसां संहिताना-मुपबृंहिकाः। अहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रं च दार्शनिकसामग्रीपरिपूर्णे प्रथिते संहिते। परमसंहिता श्रीमता रामानुजाचार्येण [4]श्रीभाष्ये स्मृता। अगस्त्यसंहिता-सुदर्शनसंहिता-सनत्कुमारसंहिता दक्षिणे उत्तरे च भारते समानरूपेण सम्मानार्हाः। नारदपाञ्चरात्रस्य ब्रह्मसंहितायाश्च वर्तते वङ्गेषु विशेषतश्चैतन्यदेवानुयायिषु प्रभावः। हयशीर्षपञ्चरात्रं वर्तते प्राचीनः संहिताग्रन्थः सर्वत्र लब्धप्रसरः। अग्निपुराणस्था अनेकेऽध्याया एतत्समानानुपूर्वीका दृश्यन्ते, अथ च तत्र ३९ अध्याये उद्धृतेषु पाञ्च-रात्रसंहितानामस्वस्यैव नाम प्रथमं दृश्यते। प्रायः सर्वे एते संहिताग्रन्था मुद्रिता उपलभ्यन्ते, तथापि ज्ञान-योग-क्रिया-चर्याख्यविषयचतुष्टयप्रति-पादकेषु शैवशाक्तागमेष्विव वैष्णवागमेष्वपि ज्ञानभागस्याल्पीयानेवांश उपलभ्यते। तत्र सात्वतसंहितां लक्ष्मीतन्त्रं चाधृत्य षडध्वविचारः शैवशाक्तागमाभ्यां तुलनात्मिकया पद्धत्योपबृंहित उपस्थाप्यते।

डॉ० श्रादरमहोदयेन अहिर्बुध्न्यसंहिताभूमिकायां पाञ्चरात्रागमस्य दार्शनिकाः सिद्धान्ताः सुविशदं व्याख्याताः। परं तत्र तेषां सिद्धान्ताना-

---

१. द्रष्टव्यम्—श्लो० ७

२. द्रष्टव्यः—पुराणपत्रिकायां डॉ० वासुदेवशरण-अग्रवालमहोदयस्य 'षट्कुलीयाः' इति शीर्षको निबन्धः। व० २, अ० १-२, जुलाई १९६०, पृ० २३-४२

३. द्रष्टव्या—भास्कररायभाष्योपबृंहिता कौलोपनिषद्, पृ० ६

४. द्रष्टव्यम्—२-२-४२ सूत्रम्।

मागमेतरदर्शनैरेव मुख्यतस्तौलनिकी परीक्षा वर्तते। आगमेषु शब्दब्रह्म-विषयको विद्यते महान् प्रपञ्चः। स च परित्यक्तः श्नादरमहोदयेन। अत एव तत्र षडध्वविषये न किमप्युक्तम्। डॉ० उडरफमहोदयेन आगमिक-दर्शन-साधनापद्धत्योर्गहनमनुशीलनमाचरितम्, विशेषतः शाक्तागमानाम्। अनेके ग्रन्थाश्च निबद्धास्तेन महानुभावेन। तत्र "गारलैण्ड आफ लेटर्स" (वर्णमाला) नाम्नि ग्रन्थे सप्तविंशे परिच्छेदे शैवशाक्तदर्शनपद्धत्या षडध्वविचारः समुपस्थापितः। शिवपुराणे, अभिनवगुप्तरचितयोस्तन्त्र-सारतन्त्रालोकयोः, स्वच्छन्दतन्त्रादिषु च चर्चितया चर्चयोपबृंहितः सोऽप्यत्रोपस्थाप्यते।

### पाञ्चरात्रागमे षडध्वानः

सात्वतसंहितायाः १९ परिच्छेदे १२६-१५९ श्लोकेषु संक्षेपेण, लक्ष्मी-तन्त्रस्य १८-२२ अध्यायेषु विस्तरेण षडध्वप्रक्रिया प्रतिपादिता। साऽत्र प्रथमं प्रस्तूयते—

[1]वार्णः कलामयश्चैव तात्त्विको मान्त्रिकस्तथा।
पादिको भौवनश्चैव षडध्वानः प्रकीर्तिताः॥

[2]वेद्यवेदकनिर्मुक्तं परंब्रह्माखिलजीवानां मुक्तये स्वशक्त्या स्वयमेव शब्दब्रह्मभावेनोदेति। तत्रेयं प्रक्रिया—

[3]व्यापकं यत्परंब्रह्म नारायणमनामयम्।
शान्तता नाम यावस्था साहं शान्ताखिलप्रसूः॥
तस्या मे य उदेति स्म सिसृक्षाख्योऽल्प उद्यमः।
स शब्दार्थविभेदेन शान्त उन्मेष उच्यते॥
शब्दोदयपुरस्कारः सर्वत्रार्थोदयः स्मृतः।
अर्थशब्दप्रवृत्त्यात्मा शब्दस्य स्थूलता हि सा॥
बोधोन्मेषः स्मृतः शब्दः शब्दोन्मेषोऽर्थ उच्यते।
उद्यच्छब्दोदयः शक्तेः प्रथमः शान्ततात्मनः॥
स नाद इति विख्यातो वाच्यतामसृणस्तदा।
नादेन सह शक्तिः सा सूक्ष्मेति परिगीयते॥

---

१. लक्ष्मीतन्त्रे, २२।१०-११ २. सात्वतसंहितायाम्, १९।१२७-१२८
३. लक्ष्मीतन्त्रे १८।१९-२७

नादात् परो य उन्मेषो द्वितीयः शक्तिसंभवः।
बिन्दुरित्युच्यते सोऽत्र वाच्योऽपि मसृणः स्थितः॥

पश्यन्ती नाम सावस्था मम दिव्या महोदया।
ततः परो य उन्मेषस्तृतीयः शक्तिसंभवः॥

मध्यमा सा दशा तत्र संस्कारयति संगतिम्।
वाच्यवाचकभेदस्तु तदा संस्कारतामयः॥

चतुर्थस्तु य उन्मेषः शक्तेर्माध्यमिकात् परः।
वैखरी नाम सावस्था वर्णवाक्यस्फुटोदया॥

एवं वैखर्यात्मना परिस्फुरितस्य शब्दब्रह्मणः[1] प्रथम उन्मेषो वर्णाध्वा परिकीर्त्यते। वर्णाध्वन आद्या मध्यमा चरमा च रीतिः सूक्ष्मस्थूलवर्णानां मातृकायाश्च स्वरूपप्रदर्शनमुखेन व्याख्याता लक्ष्मीतन्त्रे १९-२० अध्याययोर्द्रष्टव्या। [2]ततः स शब्दमूर्तिर्भगवान् ज्ञानाद्येन कलाध्वना विवर्तते। पारमेश्वरा ज्ञानादयः[3] षड् गुणा अत्र कलापदेनोच्यन्ते। [4]अनन्तरं तमिममुपादाय शब्दब्रह्म वासुदेवादिरूपेण तत्त्ववर्त्मना प्रवर्तते। [5]ज्ञानादीनां षड्गुणानां समष्ट्या व्यूहवासुदेवस्य[6] द्वयोर्द्वयोर्गुणयोस्त्रिकेण च सङ्कर्षणादिव्यूहत्रयस्याविर्भावो भवति।

[7]व्यूहाश्च [8]विभवाश्चैव यच्चान्यद् भगवन्मयम्।
तत्त्वाध्वनो विवृत्तिः सा कीर्तिता परमात्मनः॥

[9]ततस्तेभ्य आराधनस्य सिद्ध्यर्थं मनसालम्बनाय च परमोदारो मन्त्राध्वा वर्णव्यक्तिक्रमुखेन प्रवर्तते। असौ मन्त्राध्वा वासुदेवादिदेवानां मूर्तिभावं व्रजति। [10]स च क्वचिद्बीजरूपेण क्वचित् पिण्डरूपेण, क्वचित्

---

१. ल० त० २२।११-१२ २. ल० त० २२।१३
३. ल० त० २१।७; ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड् गुणाः।
४. ल० त० २२।१५ ५. ल० त० २।५३-५४
६. अहिर्बुध्न्यसंहितायाम्, ५।२५-२८,१७-१८
७. ल० त० २२।१६
८. विभवा एकोनचत्वारिंशत्संख्याकाः सात्वतसंहितायां ९।७७-८३, अहिर्बुध्न्यसंहितायां ५।५०-५६ च द्रष्टव्याः।
९. ल० त० २२।१९-२० १०. ल० त० २१।१०

संज्ञारूपेण, क्वचित् पदरूपेणेति चतुर्द्धा प्रवर्तते। [1]जाग्रत्स्वप्नौ सुषुप्तिस्तुर्यं चेति चतुष्टयं पदाध्वनो रूपं ज्ञेयम्। तत्र जाग्रत्स्वप्नसुषुप्तयः प्रसिद्धाः। तुर्यं च पदम्—"[2]तमसानभिभूतस्य सत्त्वस्थस्य विपश्चितः। बाह्यान्तः-करणस्थाया वृत्तेरुपरमे सति॥ शुद्धसत्त्वप्रसादस्य सन्ततिस्तुर्यसंज्ञिता॥" इति लक्षणलक्षिता तुरीयावस्था। [3]मायादिक्षितिपर्यन्ता भुवनपद्धति-र्भुवनाध्वा विज्ञेयः। प्राकृतोऽसौ भुवनाध्वा [4]चतुर्दशविभागवान्।

[5]एतेषु षडध्वसु भुवनाध्वा, तुर्यपदं विहाय पदाध्वा च हेयौ, शेषा अध्वान उपादेयाः। हातव्यहानाय प्राप्तव्योपादानाय च मुमुक्षुणा षडध्व-शोधनं विधेयम्। [6]तत्रेश्वरेच्छया लब्धगुरुकरुणाकटाक्षस्य मुमुक्षोर्मन्त्राः प्रसादसुमुखाः सन्तो भुवनाध्वन उत्तार्य पदाध्वनश्च पदे पदे वैराग्यं जनयन्त आज्ञाप्रतीक्षका अवतिष्ठन्ते, मायीयाध्वद्वयादुत्तार्य च तमणि-मादीनां भोगानां प्राप्तये स्वस्थानं नयन्ति। अणिमादीनां भोगाद्विरतं तं पश्चादमृतोपमे तत्त्वाध्वनि प्रेरयन्ति। ततस्तत्र [7]सङ्कर्षणादयोऽनुग्रहपराः सन्तस्तं शाश्वते कलाध्वन्यप्ययतां नयन्ति। तत्रस्थः षाड्गुण्यमयो वासुदेवस्तं पश्चात्[8] शब्दब्रह्माभिधेऽध्वनि नित्ये स्वात्मनि योजयति। तत्परिज्ञानाच्च मुमुक्षुः सुशान्तं भगवत्पदमधिगच्छतीति। एवमत्र चिदचिदीश्वरविषयकः, बन्धमोक्षविषयकः, उपायोपेयविषयकश्च सर्वोऽपि दार्शनिकः प्रपञ्चोऽन्तर्भवति।

## शिवपुराणे तन्त्रसारे च षडध्वानः

[9]शिवपुराणेऽयं वर्तते षडध्वक्रमोद्देशस्तत्तल्लक्षणपुरस्सरः—

कलां तत्त्वं च भुवनं वर्णं पदमतः परम्।
मन्त्रश्चेति समासेन षडध्वा परिपठ्यते॥

---

१. ल० त० २३।२२-२४ २. ल० त० २२।२५-२६

३. ल० त० २२।२७-२८

४. सा० सं० १९।१३८; ल० त० २१।१५ अत्र चतुर्दशभुवनानि पुराणादि-प्रसिद्धान्येव प्रतीयन्ते।

५. सा० सं० १९।१३९-१४०; ल० त० २१।२५

६. ल० त० २१।२६-२७; २२।२८-३१; सा० सं० १९।१४५-१४८

७. सा० सं० १९।१४९-१५० ८. सा० सं० १९।१५०-१५२

९. द्रष्टव्यम्—७।२।१७।२-७

[1]निवृत्त्याद्याः कलाः पञ्च कलाध्वा कथ्यते बुधैः ।
व्याप्ताः कलाभिरितरे त्वध्वानः पञ्च पञ्चभिः ।
शिवतत्त्वादिभूम्यन्तं तत्त्वाध्वा समुदाहृतः ।
षड्विंश[ट्त्रिंश]संख्ययोपेतः शुद्धाशुद्धोभयात्मकः ।
आधाराद्युन्मनान्तश्च भुवनाध्वा प्रकीर्तितः ।
विना भेदोपभेदाभ्यां षष्टिसंख्यासमन्वितः ।।
पञ्चाशद् रुद्ररूपास्तु वर्णा वर्णाध्वसंज्ञिताः ।
अनेकभेदसंपन्नः पदाध्वा समुदाहृतः ।।
सर्वोपमन्त्रैर्मन्त्राध्वा व्याप्तः परमविद्यया ।
कलाध्वनो व्यापकत्वं व्याप्यत्वं चेतराध्वनाम् ।। इति ।

पाञ्चरात्रागमे सात्वतसंहितायां (पृ० १९।१५०-१५९) वर्णाध्वनः शब्दब्रह्मापरपर्यायस्य प्राधान्यमन्येषां च गौणत्वं प्रतिपादितम्, अत्र तु कलाध्वनो व्यापकत्वमन्येषां च व्याप्यत्वमिति। तत्र कलाध्वनि पारमेश्वरस्य गुणषट्कस्य समावेशः, अत्र तु निवृत्त्यादिकलापञ्चकस्य । यद्यपि— "निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च । शान्त्यतीताऽभिमाना च प्राणा गुणवती तथा ।।" [1]इत्यत्र निवृत्त्यादिपञ्चकस्यापि समावेशो वर्तते, तथापि शैवशाक्तेष्वागमेष्विव नासामत्र तथाविधं प्रतिपादनम् । शिवपुराणे[2] पराशक्तेश् चिद्-आनन्द-इच्छा-ज्ञान-क्रियाशक्तयः संजाताः । एताभ्य एव निवृत्त्याद्याः कलाः समुत्पन्नाः । अनुग्रह-तिरोभाव-सृष्टि-स्थिति-संहाराख्यपञ्चकृत्यकारित्वं भगवति निवृत्त्यादिकलावशादेवेत्युक्तम् । [3]तन्त्रसारेऽभिनवगुप्तेन कलासामान्यस्य निवृत्त्यादीनां च लक्षणान्येवं निरूपितानि—

---

१. लक्ष्मीतन्त्रे, ३५।१५-१६; ५३।११-१२

२. पराशक्तेस्तु संजाता चिच्छक्तिस्तु तदुद्भवा ।
आनन्दशक्तिस्तज्जा स्यादिच्छाशक्तिसमुद्भवा ।।
ज्ञानशक्तिस्ततो जाता क्रियाशक्तिस्तु पञ्चमी ।
एताभ्य एव संजाता निवृत्त्याद्याः कला मुने ।।
अनुग्रहादिकृत्यानां हेतुः पञ्चकमिष्यते ।
(शि० पु० ६।१६।५४-५५,६१)

३. त० सा०, पृ० १०९-११०

"तत्त्वेषु वर्गंशो यदनुगामि रूपं तत् कला, एकरूपकलनासहिष्णुत्वात्। तद्यथा—पृथिव्यां निवृत्तिः, निवर्तते यतस्तत्त्वसर्ग इति। जलादिप्रधानान्ते वर्गे प्रतिष्ठा, कारणतयाऽऽप्यायनपूरणकारित्वात्। पुमादिमायान्ते विद्या, वेद्यतिरोभावे संविदाधिक्यात्। शुद्धविद्यादिशक्त्यन्ते शान्ता, [1]कञ्चुकतरङ्गोपशमात्। एतदेवाण्डचतुष्टयं पार्थिव-प्राकृत-मायीय-शाक्ताभिधम्। पृथिव्यादिशक्तीनामत्रावस्थानेन शक्तितत्त्वे[त्वं] यावत् परस्पर्शो विद्यते, स्पर्शस्य च सप्रतिघत्वमिति तावति युक्तमण्डत्वम्। शिवतत्त्वे शान्त्यतीता, तस्योपदेशभावनार्चादौ कल्यमानत्वात्। स्वतन्त्रं तु परं तत्त्वम्। तत्रापि यदप्रमेयं तत्कलातीतम्। एवं पञ्चैव कलाः षट्त्रिंशत्तत्त्वानि" इति।

शिवादिभूम्यन्तानि [2]शुद्धाशुद्धाध्वमयानि षट्त्रिंशत्तत्त्वानि शैवशाक्तागमेषु प्रसिद्धानि। "यत्तु कतिपयकतिपयभेदानुगतं रूपं तत् तत्त्वम्" इति तत्त्वलक्षणमुक्तं तन्त्रसारे[3]।

अभिनवगुप्तेन तन्त्रसारे षष्ठाह्निके कालाध्वा, सप्तमाह्निके देशाध्वा, अष्टमनवमाह्निकयोस्तत्त्वाध्वा, दशमाह्निके च कलाद्यध्वा निरूपितः। "तत्र वर्णमन्त्रपदाध्वनः कालाध्वनि स्थितिः, परसूक्ष्मस्थूलरूपत्वात्। देशाध्वस्थितिस्तु तत्त्वपुर(भुवन)कलात्मना" (पृ० ४७) इति षष्ठाह्निकोक्त्या, "मेयांशगामी स्थूलसूक्ष्मपररूपत्वात् त्रिविधो भुवनतत्त्व-

---

१. कञ्चुकपञ्चकं शिवपुराणे इत्थं प्रतिपादितम्—
नियतिः कालो रागश्च विद्या च तदनन्तरम्।
कला च पञ्चकमिदं मायोत्पन्नं मुनीश्वर॥
एतत्पञ्चकमेवास्य पञ्चकञ्चुकमुच्यते। (६।१३।२८,३०)
तन्त्रसारेऽभिनवगुप्तेन मायामत्रैवान्तर्भाव्य कञ्चुकषट्कं प्रतिपाद्यते। द्रष्टव्यम्—तन्त्रसारे, पृ० ८३। अत्र विशेषजिज्ञासुभिः "काश्मीर शैविज्म" नामको ग्रन्थो द्रष्टव्यः, डॉ० श्रादरनिर्मिताया अहिर्बुध्न्यसंहिताभूमिकायाः ६४,९०,११५ पृष्ठानि च।

२. अत्र "सारस्वत्याः सुषमायाः" १५ व०, १-४ अ०, २४५-२६२ पृष्ठेषु प्रकाशितः श्रीरघुनाथपाण्डेयमहोदयस्य "शुद्धाध्वस्वरूपविमर्शः" इति शीर्षको निबन्धोऽवलोकनीयः।

३. द्रष्टव्यम्—पृ० ६९

कलात्माध्वभेदो मातृविश्रान्त्या तथैव त्रिविधः । तत्र प्रमाणतायां पदाध्वा, प्रमाणस्यैव क्षोभतरङ्गशाम्यत्तायां मन्त्राध्वा, तत्प्रशमे पूर्णप्रमातृतायां वर्णाध्वा । स एवासौ तावति विश्रान्त्या लब्धस्वरूपो भवतीत्येकस्यैव षड्विधत्वं युक्तम्" (पृ० १११-११२) इति दशमाह्निकोक्त्या च कालाध्वा देशाध्वा च न पृथगध्वानौ, किन्तु षडध्वसु पृथक्स्वभावीयत्रिकद्वययोरेकैका संज्ञेति सूच्यते ।[1]

शिवपुराणे तु प्रकारान्तरेण प्रतिपादितोऽयं विषयः । "इयं सृष्टिः परब्रह्मपरिणामः"" । सा च सृष्टिर्द्वेधा—अर्थमयी शब्दमयी चेति ।"""" सा च द्विविधापि सृष्टिः समकालिकोत्पत्तिका समकालिकाभिवृद्धिशालिनी

---

१. सरस्वतीभवनस्य २४९१८ संख्याकसौभाग्यकल्पद्रुमसौरभमातृकायां २३ तमे पत्रे उद्धृतेन त्रिपुरारहस्यवचनेन निम्नस्थेनायमर्थः स्फुटीभवति—

दृश्यं तु द्विविधं प्रोक्तं कालदेशविभेदतः ।
कालः क्रियामयो ज्ञेयो देशो मूर्तिमयः स्मृतः ॥
वर्णः पदं तथा मन्त्र इति कालस्त्रिधा स्थितः ।
कला तत्त्वं च भुवनमिति देशोऽपि वै त्रिधा ॥
षडध्वनाम्ना चैतत्तु प्रोक्तं षट्सङ्घरूपतः ॥
स्वकारणात्मकं कार्यं तरोर्बीजात्मता यथा ।
तेन वर्णादयः कालः कलादिर्देश उच्यते ॥
द्रष्टुस्तद्द्वयनिर्भानाद् द्रष्ट्रात्मकमुदीरितम् ।
तस्मादखिलमेतद्वै द्रष्टृरूपं प्रकीर्तितम् ॥ इति ।

(माहात्म० ९।८९-९३)

अभिनवगुप्तरचिते तन्त्रालोकेऽपि—"द्विधा च सोऽध्वा क्रियया मूर्त्या च प्रविभज्यते" (६।२२) इति । "मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ । क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥" (२।१५) इतीश्वरप्रत्यभिज्ञायाम् । "तत्र क्रियाभासनं यत् सोऽध्वा-कालाह्व उच्यते । वर्णमन्त्रपदाभिख्यमत्रास्तेऽध्वत्रयं स्फुटम् ॥ यस्तु मूर्त्यवभासांशः स देशाध्वा निगद्यते । कलातत्त्वपुराभिख्यमन्तर्भूतमिह त्रयम् ॥ त्रिकद्वयेऽत्र प्रत्येकं स्थूलं सूक्ष्मं परं वपुः । यतोऽस्ति तेन सर्वोऽयमध्वा षड्विध उच्यते ॥" (६।३४-३६) इत्यपि तन्त्रालोक एव । "पदानि मन्त्रारब्धानि मन्त्रा वर्णैकविग्रहाः । वर्णाः स्वनिष्ठा इत्येषां स्थूलसूक्ष्मपरात्मता ॥" (६।३६) इति च तन्त्रालोकटीकायाम् ।

च, यथा बीजादङ्कुरतच्छाये·······'वागर्थाविव संपृक्तौ' इत्याद्यभियुक्तोक्तेश्च" इत्युक्तं भास्कररायेण वरिवस्यारहस्यप्रकाशे[1]। "स वागर्थमयश्चाध्वा षड्विधो निखिलं जगत्। अस्यैव विस्तरं प्राहुः शास्त्रजातमशेषतः ॥" इति च [2]शिवपुराणम्। अपि च—

शब्दात्मिका विभूतिर्या सा त्रिधा कथ्यते बुधैः।
स्थूला सूक्ष्मा परा चेति स्थूला या श्रुतिगोचरा ॥
सूक्ष्मा चिन्तामयी प्रोक्ता चिन्तया रहिता परा।
या शक्तिः सा परा शक्तिः शिवतत्त्वसमाश्रया ॥
ज्ञानशक्तिसमायोगादिच्छोपोद्बलिका तथा।
सर्वशक्तिसमष्ट्यात्मा शक्तितत्त्वसमाख्यया ॥
समस्तकार्यजातस्य मूलप्रकृतितां गता।
सैव कुण्डलिनी माया शुद्धाध्वपरमा सती ॥
सा विभागस्वरूपैव षडध्वात्मा विजृम्भते।
तत्र शाब्दास्त्रयोऽध्वानस्त्रयश्चार्थाः समीरिताः ॥
मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः।
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात्[3] ॥ इति।

---

१. द्रष्टव्यम्—पृ० ४७, अड्यारपुस्तकालयद्वितीयसंस्करणम्।

२. द्रष्टव्यम्—७।१।२९।३६-३७

३. द्रष्टव्यम्—७।१।२९।४-८,११-१२; गोरक्षनाथापरनामधेयमहेश्वरानन्दनाथेन महार्थमञ्जर्यां तद्व्याख्याने परिमले च अनन्तशयनसंस्कृतग्रन्थमालायां मुद्रिते प्रकारान्तरेण प्रतिपादितोऽयमर्थः। तदेवम्—
यदध्वनां च षट्कं तत्र प्रकाशार्धलक्षणमर्थम्।
विमर्शशब्दस्वभावमर्धमिति शिवस्य यामलोल्लासः ॥ २७ ॥
एवं च सति यदेतदध्वनामुक्तरूपाणां षट्कम्, तत्र यदेकमर्धं भुवनतत्त्वकलास्वभावम्। अन्यत्तु मन्त्रपदवर्णात्मकम्। प्रत्येकं च स्थूलसूक्ष्मपरप्रक्रियया त्रैविध्यम्। तत्र प्रथममभिधेयभूतं द्वितीयमभिधानमिति विभागः। तथा च सति वाच्यवर्गः सर्वोऽपि प्रकाशपरमार्थः, वाचकोल्लेखस्तु विमर्शवपुरिति शिवस्य प्रकाशविमर्शात्मनः परमेश्वरस्य यामल उभयविसर्गारणिस्वभाव उल्लासः। उन्मेषनिमेषशक्तिद्वितययौगपद्यानुभूतिचमत्कार इत्यर्थः। एष एव चार्थः पर्यन्तपञ्चाशिका-विरूपाक्षपञ्चाशिका-चिद्गगनचन्द्रिका-सौभाग्यहृदयस्तोत्रादिषु प्रकाशितः। स चात्रैव परिमले उद्धृतो द्रष्टव्यः।

## उडरफप्रतिपादितः षडध्वा

अयमेव चार्थः "गारलैण्ड आफ लेटर्स" इत्यत्रापि २५० पृष्ठे प्रतिपादितः। तदित्थम्—वर्णपदमन्त्राध्वानः शब्दात्मकाः, कलातत्त्वभुवनाध्वानोऽर्थात्मकाः। पदाध्वा वर्णाध्वानमपेक्षते, मन्त्राध्वा च पदाध्वानम्। कलातत्त्वभुवनाध्वानस्तु परस्परनिरपेक्षा इति।

टी०ए०गोपीनाथरावविरचिते "एलिमेण्ट्स आफ हिन्दु आइकॉनोग्राफी"[1] नाम्नि ग्रन्थे सिद्धान्तसारावलीप्रभृतीनां ग्रन्थानामाधारेण षडध्वानो विवेचिताः। तदाधारेण च डॉ० उडरफमहोदयेन स्वकीये "गारलैण्ड आफ लेटर्स" नाम्नि ग्रन्थे २५०-२५७ पृष्ठेषु [2]शाम्भवदर्शनदृष्ट्या षडध्वपरिचयश्चित्रादिपुरस्कारेणोपस्थापितः। संक्षेपेणात्र तस्योद्धारः क्रियते कृतज्ञताज्ञापनपुरःसरम्।

तत्र वर्णपदमन्त्राध्वनां क्रमशः ५१, ८१, ११ भेदाः कलातत्त्वभुवनाध्वनां च ५, ३३, २२४ भेदा निरूपिताः। [3]एकपञ्चाशद्वर्णा आगमेषु प्रसिद्धा एव। एकाशीतिपदानामुल्लेखस्तन्त्रसारे ६१ पृष्ठे वर्तते। ५ कलाः, ३६ तत्त्वानि च पूर्वं निरूपितानि। तत्र शुद्ध-शुद्धाशुद्ध-अशुद्धभेदेन तत्त्वानां त्रयो विभागाः शिव-विद्या-आत्मनामानः। अविनाभावेनावस्थितौ शक्तिशिवौ शिवाख्यं प्रथमं तत्त्वम्, सदाशिवतः शुद्धविद्यापर्यन्तं शुद्धाशुद्धतत्त्वानि विद्याख्यानि, मायातः पृथिवीपर्यन्तमशुद्धतत्त्वान्यात्मनामधेयानि। योगिनीहृदये मन्त्रसंकेतप्रकरणे षड्विधमन्त्रार्थनिरूपणावसरे त्रीणीमानि तत्त्वानि व्याख्यातानि।

भवत्यस्मादिति भुवनमिति व्युत्पत्त्या भुवनशब्दो जगत्पर्यायः। भुवनान्यपि शुद्ध-शुद्धाशुद्ध-अशुद्धभेदेन विभागत्रयवन्ति। इमानि २२४ संख्याकानि भुवनानि ५ कलाभिः, ३६ तत्त्वैश्च यथायथं संयोज्य सारणी-

---

१. द्रष्टव्यम्—भा० २, ख० २, पृ० ३९२-३९७

२. शैवशाक्तदर्शनयोः संमेलनेन शाम्भवदर्शनस्योद्भवः, यत्र हि शिवशक्तिसामरस्यमाराध्यते। द्रष्टव्यमत्रैव, पृ० २५०

३. वर्णानां ५१ भेदाः शाक्तागमेषु। शैवागमेषु तु सर्वत्र ५० वर्णानि निरूपितानि। वर्णाद्यध्वपञ्चकस्य सभेदस्य पञ्चभेदभिन्ने कलाध्वनि समावेशः संक्षेपेण रत्नत्रये प्रदर्शितस्तत एव विलोकनीयो मनीषिभिः। एकाशीतिपदविषये चात्रैवाग्रे विशेषो द्रष्टव्यः।

| कलाः | तत्त्वानि | भुवनसंख्या | भुवननामानि |
|---|---|---|---|
| | (क) शुद्धतत्त्वानि | | |
| १. शान्त्यतीतकला | १. शिवतत्त्वम् | १० | अनाश्रित - अनाथ - अनन्त-व्योमरूपिणी-व्यापिनी-ऊर्ध्वगा-मोचिका - रोचिका-दीपिका-इन्धिकाख्यानि ( एतेषु पञ्च शाक्तभुवनानि, अवशिष्टानि पञ्च नादोर्ध्वभुवनानि )। |
| | २. शक्तितत्त्वम् | ५ | शान्त्यतीत-शान्ति-विद्या-प्रतिष्ठा - निवृत्ति - भुवनानि (एतानि वैन्दवपुरनाम्ना प्रसिद्धानि)। |
| | योगः | १५ | |
| | ३. सदाशिवतत्त्वम् | १ | सदाशिवाख्यम्। |
| | ४. ईश्वरतत्त्वम् | ८ | शिखण्डि - श्रीकण्ठ- त्रिमूर्ति-एकरुद्र - एकनेत्र - शिवोत्तम-सूक्ष्म-अनन्तेशाख्यानि। |
| | ५. शुद्धविद्यातत्त्वम् | ९ | मनोन्मनी - सर्वभूतदमनी-बलप्रमथिनी - बलविकरणी-कलविकरणी- काली - रौद्री-ज्येष्ठा-वामाख्यानि। |
| | योगः | १८ | |
| | (ख) शुद्धाशुद्धतत्त्वानि | | |
| | ६. माया | ८ | अङ्गुष्ठमात्र - भुवनेश-ईशान-एकनेत्र-एकपिङ्गल - उद्भव - वामदेव-महादेवाख्यानि। |
| २. शान्तिकला | ७. कालः | २ | शिवद-एकवीराख्ये। |
| | ८. कला | २ | पञ्चान्त-सूकराख्ये। |
| | ९. विद्या | २ | संवर्त-ज्योतिषी इत्याख्ये। |
| | १०. नियतिः | २ | चण्ड-क्रोधाख्ये। |
| | ११. रागः | ५ | एकरुद्र-अनन्त-अज-उमापति-प्रचण्डाख्यानि। |
| | १२. पुरुषः | ६ | एकवीर-ईशान-भव-उग्र-भीम-वामाख्यानि। |
| | योगः | २७ | |
| | (ग) अशुद्धतत्त्वानि | | |
| ३. विद्याकला | १३. प्रकृतिः | ८ | श्रीकण्ठ-औम-कौमार-वैष्णव-ब्राह्म-भैरव-कृत-अकृताख्यानि। |
| | १४. बुद्धिः | ८ | ब्राह्म-प्राजेश - सौम्य - ऐन्द्र-गान्धर्व-याक्ष-राक्षस-पैशाचाख्यानि। |

| कला: | तत्त्वानि | भुवनसंख्या | भुवननामानि |
| --- | --- | --- | --- |
| ४. प्रतिष्ठाकला | १५. अहङ्कारः | १ | स्थलेश्वरम् । |
| | १६. मनस् | | |
| | १७. श्रोत्रम् | | |
| | १८. त्वक्<br>१९. चक्षुः<br>२०. जिह्वा<br>२१. नासा | १ | शङ्कुकर्णम् । |
| | २२. वाक् | | |
| | २३. पाणिः<br>२४. पादः<br>२५. पायुः<br>२६. उपस्थः | १ | दारुवनम् । |
| | २७. शब्दः | | |
| | २८. स्पर्शः | | |
| | २९. रूपम्<br>३०. रसः<br>३१. गन्धः | ५ | कालञ्जर-मण्डलेश्वर-माकोट-द्विरण्ड-छगलण्डाख्यानि । |
| ५. निवृत्तिकला | ३२. आकाशः | ८ | स्थाणु स्वर्णाक्ष-भद्रकर्ण-गोकर्ण-महालय - अविमुक्त-रुद्रकोटि-वस्त्रापदाख्यानि । |
| | ३३. वायुः | ८ | भीमकेश्वर-महेन्द्र-अट्टहास-कनखल-नोखल-कुरुक्षेत्र-गयाख्यानि । |
| | ३४. तेजस् | ८ | भैरव-केदार-महाकाल-मध्यमेश-आम्रातकेश्वर-जल्पीश-श्रीशैल-हरिश्चन्द्राख्यानि । |
| | ३५. जलम् | ८ | भारभूति-मुण्डि-डिण्डि-आषढी-पुष्कर-नैमिष-प्रभास-अमरेशाख्यानि । |
| | योगः | ५६ | |
| | ३६. पृथिवी | १०८ | भद्रकालीतः कालाग्निपर्यन्तानि । |
| | सर्वेषां योगः | २२४ | |

रूपेण स्थापितानि पूर्वंचर्चितयोरुभयोरपि ग्रन्थयोः। तत्रत्या सारणी स्वच्छन्दतन्त्र-ईशानशिवगुरुदेवपद्धति-तन्त्रालोक- रत्नत्रयादिग्रन्थसाहाय्येन परिष्कृत्य समुद्धृताऽत्र २६-२७ पृष्ठयोः।

शिवतत्त्वेन शक्तितत्त्वेन च संयुक्तानि अनाश्रित-अनाथ-अनन्त-व्योमरूपिणी - व्यापिनी-ऊर्ध्वगामिनी-मोचिका-रोचिका-दीपिका-इन्धिकाख्यानि भुवनानि सन्ति। इमानि शान्त्यतीतकलामयानि। एतेषु पञ्च शाक्तभुवनानि, अवशिष्टानि पञ्च च नादोर्ध्वभुवनानि। अन्यैस्तत्त्वैः संयुक्तानि शान्त्यादिकलामयानि भुवनानि तत्तद्देवताविग्रहनाम्ना प्रसिद्धानि। सर्वाणीमानि भुवनानि परमशिवेन तत्रत्यानां प्राणिनामुपभोगाय सृष्टानि।

शुद्धादिभुवनेषु विद्यमाना जीवा अपि शुद्ध-शुद्धाशुद्ध-अशुद्धभेदेन त्रिविधाः। मल-माया-कर्मभेदेनाविद्या त्रिविधा। मलावृता जीवा विज्ञानाकलाः, मलमायावृताः प्रलयाकलाः, मलमायाकर्मावृताश्च सकला उच्यन्ते। विज्ञानाकला एव मन्त्राख्याः। येषां जीवानां मलावरणं परिपाकावस्थायामवतिष्ठते ते विज्ञानाकला अष्टौ विद्येश्वराः। विद्येश्वरेभ्य ऊर्ध्वं मन्त्रेश्वरा अवतिष्ठन्ते। शुद्धतनुकरणभुवनभोगा इमे सर्वथा मलरहिताः। मन्त्रेश्वरेभ्य ऊर्ध्वं मन्त्रमाहेश्वराः, एभ्यश्चोर्ध्वं शक्तिशिवौ विराजेते। मन्त्रमाहेश्वराः सदाशिवापरपर्याये सादाख्ये तत्त्वे, माहेश्वरा मन्त्रेश्वरा वा ईश्वराख्ये तत्त्वे, मन्त्राश्च शुद्धविद्याख्ये तत्त्वे तिष्ठन्ति (अष्टौ विद्येश्वरा मन्त्राख्येभ्यो भिन्नाः)। विज्ञानाकलाः शुद्धविद्यातो नीचैर्मायातश्चोर्ध्वं तिष्ठन्ति। प्रलयाकलाः, मुक्तेभ्यो भिन्नाः सकलाश्च मायायामवतिष्ठन्ते। एष चार्थोऽग्रे स्थितया सारण्या स्फुटीभविष्यति।

## शैवागमेषु षडध्वा

तत्त्वप्रकाशस्य अनन्तशयनसंस्कृतग्रन्थमालायां मुद्रितायां कुमाररचितायां व्याख्यायां गुरुदेवपद्धतिमनुसृत्य ३३-४२ पृष्ठेषु षडध्वनां विस्तृतः परिचयः समुट्टङ्कितः। गुरुदेवपद्धतिश्चेयमनन्तशयनसंस्कृतग्रन्थमालायामेव ईशानशिवगुरुदेवपद्धतिनाम्ना चतुर्षु भागेषु मुद्रिता। तत्र तृतीये भागे १४९-१७० पृष्ठेषु षडध्वनिर्णयो नाम सप्तदशः पटलो वर्तते। अत्रत्या सामग्री संक्षिप्य कुमारटीकायां संगृहीता। एकाशीतिपदानां नामान्यस्मिन् पटले न सन्ति। तानि मन्त्रपादात्मके द्वितीयभागे १७२-१७४ पृष्ठेषु सन्ति। कुमारेण त्वत्रैकाशीतिपदानां नामान्यन्यस्मादेव कस्माच्चिद

ग्रन्थाद् गृहीतानि। तदेतत्सर्वं विस्तरेण तत्रैव द्रष्टव्यम्। अत्र केवलं गुरुदेवपद्धत्यनुसारिणी षडध्वोद्देशलक्षणे दीयेते—

अथ निर्वाणदीक्षादिक्रियानिष्पत्तिसाधनम्।
यथावदध्वनां षण्णां स्वरूपं तु निगद्यते॥
तत्त्वाध्वा चैव वर्णाध्वा मन्त्राध्वाऽध्वा च भौवनः।
पदाध्वा च कलाध्वा च षट्प्रकारोऽध्वनिर्णयः॥
व्याप्यास्तत्त्वादयः पञ्च [1]मलाद्या व्यापकास्त्रयः।
पुनर्मलादयो व्याप्याः कलाध्वा व्यापकः स्मृतः॥
तत्र तत्त्वानि षट्त्रिंशत् तत्त्वाध्वा स्याद्विलोमतः।
क्षकारादिरकारान्तो वर्णाध्वाऽक्षरसन्ततिः॥
सद्यादिकानि ब्रह्माणि मन्त्राश्च हृदयादयः।
मूलमन्त्रश्च मन्त्राध्वा प्रागेवात्र प्रदर्शितः॥
कालाग्न्यादीनि शक्त्यन्तं भुवनानि शतद्वयम्।
सचतुर्विंशतिपुरं भुवनाध्वेति कथ्यते॥
व्योमव्यापिपदान्यत्र यान्येकाशीतिसंख्यया।
विलोमतः पदाध्वा स्यान्मन्त्रोद्धारे स चोदितः॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी।
शान्त्यतीतेति हि कलाः कलाध्वा सोऽपि दर्शितः॥
तन्त्रेऽस्मिन् प्रागनुक्तत्वाद् भुवनाध्वाऽथ कथ्यते।[2] इति।

तदयमत्र निष्कर्षः—

मुक्तानां शिवताव्यक्तिकारणं विश्वमेव हि॥
शिवताव्यक्तिमार्गत्वात् ते सर्वेऽपि कलादयः।
अध्वशब्देन कथ्यन्ते ते सर्वे बन्धना अपि॥

इति [3]महार्थमञ्जरीपरिमलधृतस्वच्छन्दतन्त्रनीत्या,

अमूर्तायाः सर्वगत्वान्निष्क्रियायाश्च संविदः।
मूर्तिक्रियाभासनं यत् स एवाध्वा महेशितुः॥
अध्वा क्रमेण यातव्ये पदे संप्राप्तिकारणम्।

---

१. मलं कर्म माया च।

२. द्रष्टव्यम्—ई० गु० प०, भा० ३, पृ० ५०

३. द्रष्टव्यम्—पृ० ७३

इति [1]तन्त्रालोकनीत्या च विश्वमेव शिवताव्यक्तिमार्गत्वादध्वशब्देनोच्यते। अत एवोच्यते शिवपुराणे[2]—"षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः" इति। अयं च षड्विधाध्वा संविदो मूर्तिक्रियाभासनमेव, नान्यत् किञ्चित्। तदुक्तम्—

अध्वा समस्त एवायं षड्विधोऽप्यतिविस्तृतः।
यो वक्ष्यते स एकत्र प्राणे तावत् प्रतिष्ठितः॥[3] इति,

"प्राक् संवित् प्राणे परिणता"[4] इति,

अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः।
यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते॥
संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च।
नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः॥[5] इति,

वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि॥[6] इति च।

अध्वशुद्धिप्रक्रियया च षडध्वसु शिवताव्यक्तिकारणत्वमायाति। तदुक्तं विज्ञानभैरवे—

भुवनाध्वादिरूपेण चिन्तयेत् क्रमशोऽखिलम्।
स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः॥
अस्य विश्वस्य सर्वस्य पर्यन्तेषु समन्ततः।
अध्वप्रक्रियया तत्त्वं शैवं ध्यात्वा महोदयः॥[7] इति।

अध्वशुद्धिप्रक्रिया च—

ज्ञात्वा समस्तमध्वानं तदीशेषु विलापयेत्।
तान् देहप्राणधीचक्रे पूर्ववद् गालयेत् क्रमात्॥

---

१. द्रष्टव्यम्—६।२९-३०  २. द्रष्टव्यम्—७।१।३।१८

३. तन्त्रालोके, ६।५  ४. तन्त्रालोके, ६।१२ उद्धृतं कल्लटवचनम्।

५. तन्त्रालोके, ८।३-४

६. चिद्वल्ल्यां (पृ० १८) कामकलाविलासटीकायामुद्धृतं सौभाग्यहृदयस्तोत्र वचनम्।

७. द्रष्टव्यम्—श्लो० ५६-५७ अत्रत्या शिवोपाध्यायनिर्मिता टीकापि द्रष्टव्या। शिवोपाध्यायेन चैषा टीका क्षेमराजकृतविज्ञानभैरवोद्योतमनुसृत्य निर्मिता। अत एवात्रत्यः—"अस्य सर्वस्य अध्वग्रन्थस्यायं पिण्डार्थः" इत्यादिको ग्रन्थः क्षेमराजकृतस्वच्छन्दतन्त्रोद्योतेऽप्युपलभ्यते। द्रष्टव्यम्—४।९७

तत्समस्तं स्वसंवित्तौ सा संविद् भरितात्मिका।
उपास्यमाना संसारसागरप्रलयानलः ॥[1] इति,
श्रीदेव्यायामले चोक्तं षट्त्रिंशत्तत्त्वसुन्दरम्।
अध्वानं षड्विधं ध्यायन् सद्यः शिवमयो भवेत् ॥[2] इति च।

## उपसंहारः

एतच्च षडध्ववर्णनं सिद्धान्तादितन्त्रेष्वत्यन्तं वितत्योपपादितम्[3]। सिद्धान्तशब्दश्च पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः[4]। अङ्गोपाङ्गभेदेन[5] नानाशाखोऽयं शैवागमः साम्प्रतमत्यल्पमुपलभ्यते। उपलब्धा अपि सिद्धान्तशैवागमग्रन्था बाहुल्येन दक्षिणभारतीयलिपिषु मुद्रिता न देवनागर्याम्। अतः षडध्वशुद्धिप्रक्रियाया न वैशद्येन प्रतिपादनमत्र संभवति, तथापि रत्नत्रय-ईशानशिवगुरुदेव-पद्धत्यादिषु, स्वच्छन्दतन्त्रे ४, १० पटलयोः, तन्त्रालोके ६-१२ आह्निकेषु, शिवपुराणादिषु च कृतस्य षडध्वप्रसङ्गस्य साहाय्येनात्र किमप्युक्तम्। पाञ्चरात्रागमेषु सात्वतसंहितायामतीव संक्षेपेण, लक्ष्मीतन्त्रे च किञ्चि-द्विस्तरेण षडध्ववर्णनं कृतम्। शैवशाक्तागमेषु दार्शनिकी परम्परा बहु-कालव्यापिनी यथा दृश्यते, न तथा वैष्णवागमेषु। वैष्णवागमेषु संहिता-ग्रन्थेभ्योऽतिरिक्ता दार्शनिका ग्रन्था नैवोपलभ्यन्ते। पाञ्चरात्रप्रामाण्य-मङ्गीकृत्यैव यद्यपि रामानुजमध्वादीनां वैष्णवदर्शनानि प्रवृत्तानि, तथापि तानि प्रस्थानत्रयीमेव प्राधान्येनाङ्गीकुर्वन्ति। अत एव तत्रत्यकर्मकाण्डेषु पाञ्चरात्रागमानुसरणे सत्यपि दार्शनिकचिन्तनधारायां प्रस्थानत्रय्या एव प्राधान्यम्। फलतो वैष्णवागमेषु प्रतिपादितानां दार्शनिकसिद्धान्तानां प्रतिपादकः कोऽपि स्वतन्त्रो ग्रन्थः साम्प्रतं नोपलभ्यते। रामानुजशिष्य-कूरेशपरम्परायां लोकाचार्यप्रभृतयः केचन आचार्याः प्राधान्येन पाञ्च-रात्रसंहिताप्रामाण्यवादिनोऽथ च तमिलवेदानुयायिन आसन्, तथापि शैवशाक्तागमग्रन्थवन्न दृश्यते तत्र षडध्वचर्चा। अथापि यावदुपलब्धा-मत्रोद्धृतां सामग्रीमाकलय्य किमप्यत्र निष्कृष्यते।

---

१. तन्त्रालोके, ८।७-८ २. तन्त्रालोके, ८।१६-१७
३. महार्थमञ्जरीपरिमले, का० ३७
४. रत्नत्रयोल्लेखिन्यामघोरशिवाचार्यकृतायाम्, पृ० ५
५. पाण्डिचेरीनगरे प्रकाशिते रौरवागमे २०७ उपागमानां नामानि सारणी-पद्धत्या प्रदर्शितानि।

शब्दब्रह्मणः सकाशात् षडध्वोन्मेष इति पाञ्चरात्रा आहुः। परब्रह्मणः सिसृक्षाख्य उद्यमः शब्दार्थभेदेनोन्मिषति। तत एव षडध्वभेदभिन्नस्य जगतः प्रादुर्भाव इति। कुण्डलिनी विभागस्वरूपा सती षडध्वात्मना विजृम्भत इति शिवपुराणेऽपि प्रकारान्तरेणायमेवार्थः प्रतिपादितः। त्रयोऽध्वानः शाब्दाः, त्रयश्चार्था इति विभागः शिवपुराणेऽन्यत्र च दृश्यमानः पाञ्चरात्रसंहितासु न दृश्यते। महार्थमञ्जरीकारेण प्रकाशविमर्शरूपेणायं विभागः प्रदर्शितः। वाच्यवर्गः सर्वोऽपि प्रकाशपरमार्थः, वाचकोल्लेखस्तु विमर्शवपुरिति वदता तेन शब्दान्तरैः स एवार्थ उक्तः। तन्त्रालोक-तन्त्रसार-त्रिपुरारहस्यादिषु तु शब्दार्थविभागयोः स्थाने कालदेशविभागोऽङ्गीकृतः। क्रियात्मके काले वर्णमन्त्रपदात्मनो वाचकवर्गस्य, मूर्तिमये देशे च कलातत्त्वभुवनात्मनो वाच्यवर्गस्यात्र समावेशो वर्तते। अस्य समस्तस्यापि षड्विधस्याध्वनः संविदि चिदात्मनि वा, संविद्द्वारेण शून्ये, धियि, मरुत्सु, नाडीचक्रानुचक्रेषु, बहिर्देशे चावस्थितिस्तन्त्रालोके षष्ठाऽष्टमाह्निकयोर्विस्तरेण प्रतिपादिता तत एव द्रष्टव्या। एतच्च तन्त्रालोकप्रतिपादितं व्याख्यानमन्यत्र न दृश्यते।

कलादयः षडध्वानः शिवताऽभिव्यक्तिमार्गत्वादध्वशब्देनोच्यन्ते। यद्यपि जगदन्तःपातित्वादेषां बन्धनत्वमेव, तथापि युक्त्या योजितं सद् विश्वमेव हि शिवताभिव्यक्तिकारणं भवति। यतो हि निष्क्रियाया अमूर्तायाश्च संविदो मूर्तिक्रियाभासनं देशकालरूपेण परिणतिरेव खलु। तदेव चाध्वशब्देनोच्यते। अध्वा च क्रमेण यातव्ये पदे संप्राप्तिकारणं भवति। एतच्च षडध्वशुद्धिप्रक्रियया साध्यते। षडध्वशुद्धिसंपादनार्थं प्रथममेतेषां व्याप्यव्यापकभावः परिचिन्तनीयः। तत्र सात्वतसंहितायां शब्दब्रह्मस्थानीयस्य वर्णाध्वनो व्यापकत्वमन्येषां व्याप्यत्वं चोक्तम्[1]। शैवशाक्तागमेषु तु कलाध्वनो व्यापकत्वमितराध्वनां च व्याप्यत्वमुक्तम्[2]। स्वच्छन्दतन्त्रेऽपि—

---

१. द्रष्टव्यम्—पृ० १९६

२. व्याप्यास्तत्त्वादयः पञ्च मलाद्या व्यापकास्त्रयः।
पुनर्मलादयो व्याप्याः कलाध्वा व्यापकः स्मृतः॥
(ई० गु० प०, भा० ३, पृ० ५०)

अध्वावलोकनं पश्चाद् व्याप्यव्यापकभेदतः ।
भुवनव्यापिता तत्त्वेष्वनन्तादिशिवान्तके ॥
व्यापकानि च षट्त्रिंशद् मन्त्रवर्णपदात्मकाः ।
तत्त्वान्तर्भाविनः सर्वे वाच्यवाचकयोगतः ॥
कलान्तर्भाविनस्ते वै निवृत्त्याद्याश्च ताः स्मृताः ।

इत्येवं षडध्वनां व्याप्यव्यापकभावः परिदर्शितः । स्पष्टार्थजिज्ञासुभिरत्रत्यः क्षेमराजकृतः स्वच्छन्दोद्योतो द्रष्टव्यः ।

शैवशाक्तागमेषु पञ्च अध्वानो निवृत्त्यादिपञ्चकात्मकेन कलाध्वना व्याप्ताः । निवृत्त्यादिकलापञ्चकस्य पाञ्चरात्रसंहितासु प्रसङ्गेऽस्मिन् कुत्राप्युल्लेखो न दृश्यते । षाड्गुण्यस्यैव कलात्मना व्याख्यानम्, वर्णाध्वनः शब्दब्रह्मरूपत्वेन व्यापकत्वम्, पदाध्वनो जाग्रत्स्वप्नसुषुप्तितुर्यात्मकभेदप्रदर्शनम्, भुवनाध्वनश्चतुर्दशभेदभिन्नत्वं च पाञ्चरात्रसंहिताप्रतिपादितं सूचयति यदत्रत्यं षडध्वविवेचनं शैवशाक्तागमापेक्षया प्राक्कालिकं प्रतिभातीति । अधुना एतावदेवोक्त्वा विरम्यत इति शिवम् ॥

—: ० :—

# अनुप्रास्ताविकम्

दीपिकासहितस्य योगिनीहृदयस्य द्वितीये संस्करणे श्रद्धेयचरणानां म० म० श्रीगोपीनाथकविराजमहोदयानां निदेशमनुसृत्य आनन्दाश्रमसंस्कृतग्रन्थमालायां प्रकाशितचरस्य भास्कररायरचितस्य नित्याषोडशिकार्णवव्याख्यानस्य सेतुबन्धाख्यस्यापि योगिनीहृदयव्याख्यानभूतोंऽशः समावेशितः षष्ठसप्तमाष्टमविश्रामात्मकः, येन हि दीपिकासेतुबन्धयोस्तौलनिकसमीक्षायां सौकर्यं संपद्येतानुशीलनरुचीनाम् ।

अत्रेदमवधेयम्—दीपिकाकारामृतानन्दनाथयोगिनः सेतुबन्धकारभास्कररायस्य चावस्थितिकालयोर्महदन्तरं विद्यते । अपि च, योगिनीहृदयस्य हादिविद्यापरकमेव व्याख्यानं प्राचीनटीकाकाराणां संमतम्, भास्कररायेण तु कादिमत(तन्त्रराज)-ज्ञानार्णवादिवदस्यापि तन्त्रस्य कादिविद्यापरकत्वमेव प्रतिपादितम् । अतोऽनयोर्व्याख्यानयोर्विषये गुरुचरणैर्यत् प्रथमसंस्करणभूमिकायामुक्तं तद्विशेषतोऽत्रधातव्यं मनीषिभिः ।

## योगिनीहृदयवामकेश्वरयोर्भिन्नत्वम्

"तद्वामकेश्वरे तन्त्रे सूचितार्थान् परापरान् । व्यक्तीकर्तुं प्रयतते योगिनीहृदयेऽधुना ॥" ( तत्रैव, पृ० २ ) इति मङ्गलाचरणस्थपञ्चमश्लोकतः, "वामकेश्वरतन्त्रे चतुःशतीशास्त्रे" (तत्रैव, पृ० ३) इति वामकेश्वरपदव्याख्यानतः, "वामकेश्वरशास्त्र एवासामुद्धारः" (तत्रैव, पृ० ९१) इत्युक्तितश्च दीपिकाकारस्यामृतानन्दयोगिनो वामकेश्वरतन्त्रतो भिन्नत्वं योगिनीहृदयस्याभिप्रेतम् । अत्र चतुःशतीशास्त्रनाम्ना नित्याषोडशिकार्णवो ग्रन्थकारस्याभिप्रेतः । तत्र हि श्लोकानां चतुःशती विद्यते । योगिनीहृदयेऽपि तावन्त एव श्लोकाः सन्ति । सेतुबन्धकारो भास्कररायोऽत्र—"पूर्वोत्तरभागयोरैकशास्त्र्यम्" (तत्रैव, पृ० ३) इति प्रतिपादयन् पूर्वोत्तरभागौ 'पूर्वचतुःशती', 'उत्तरचतुःशती' इति बहुषु स्थलेषु पृथक् पृथग् निर्दिशन् नित्याषोडशिकार्णवनाम्ना तावेकग्रन्थत्वेन व्याख्याति । अपि च, नित्याषोडशिकार्णवव्याख्यानारम्भे प्रस्तावनायामित्थं प्रतिपादयति सः—

"तदिदं वामकेश्वरतन्त्रं पूर्वोत्तरचतुःशतीयुगलात्मकमेव मन्यन्ते, उपक्रमोपसंहारयोस्तन्त्रारम्भसमाप्तिचिह्नदर्शनात् । परन्तु तन्त्रसारे—"चक्रसंस्कारविधिर्वामकेश्वरतन्त्रोक्तः" इत्युक्तम् । स्तोत्राणि च कानिचिदेतत्तन्त्रनाम्नैवोपलभ्यन्ते । सौभाग्यरत्नाकरे लिखिता षट्शती, ललितार्चनचन्द्रिकादौ लिखितवचनान्यप्येतत्तन्त्रनाम्नैव सन्ति । तेषामष्टशत्यामदर्शनात् क्व निवेश इति चिन्त्यम् । अत एवास्वरसाद् ऋजुविमर्शिन्यामुक्तम्—

श्रीवामकेश्वरं नाम शास्त्रं तन्त्रं प्रकाशते ।
मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः ॥
तत्र च द्वे चतुःशत्यौ..............................॥ इति ।

मनोरमायां तु—"नित्यानां षोडशानां च नव तन्त्राणि कृत्स्नशः"[१] इति श्लोकव्याख्यावसरे नित्याषोडशिकार्णव-सुन्दरीहृदय[२]-वामकेश्वरतन्त्राणि पृथग् गणितानि । परन्तु तद्योगिनीहृदय एव "वामकेश्वरतन्त्रेऽस्मिन्नज्ञातार्थास्त्वनेकशः"[३] इति निर्देशस्वरसविरुद्धम् । पूर्वोत्तरचतुःशत्योरेकवाक्यता त्वविवादा, पूर्वोत्तरसमाख्याबलात् । पूर्वतन्त्रे कथितानां करशुद्ध्यादिन्यासानामुत्तरतन्त्रेऽकथनेन, तत्रोद्धृताया मूर्तिविद्यायाः पूर्वतन्त्रेऽनुद्धारादिना च ज्ञापकेन परस्परसाकाङ्क्षत्वाच्च"[४] इति ।

सरस्वतीभवनपुस्तकालये ऋजुविमर्शिन्याः[५] शिवानन्दमुनिरचिताया नित्याषोडशिकार्णवव्याख्यायाः २४८१७ संख्याका अपूर्णा मातृका विद्यते । तत्रत्यः पाठ इत्थं विद्यते—

श्रीवामकेश्वरं नाम तन्त्रं तत्र प्रकाशितम् ।
शिवेन संविदं देवीं लक्ष्यीकृत्य निजात्मिकाम् ॥
मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः ।

१. तन्त्रराज(कादिमत)तन्त्रम्, १।२
२. सुन्दरीहृदयं नित्याहृदयं योगिनीहृदयमित्यनर्थान्तरम् ।
३. योगिनीहृदयम्, १।१
४. नित्याषोडशिकार्णवः, पृ० ७
५. ऋजुविमर्शिनीकार एष शिवानन्दमुनिर्महार्थमञ्जरीकारस्य गोरक्षनाथापरनामधेयमहेश्वरानन्दस्य परमगुरुरिति विभावनीयम् ।

सूत्रैश्चतुःशतैर्युक्तः कश्चिद्भागो रसावहः ॥
स च पञ्चपटल्यात्मा कर्मपञ्चकभासकः ।[1] इति ।
( १–२ पत्रयोः )

अत्र सेतुबन्धोद्धृतः—"तत्र च द्वे चतुःशत्यौ" इत्यंशो न दृश्यते, प्रत्युत "सूत्रैश्चतुःशतैर्युक्तः", "स च पञ्चपटल्यात्मा" इत्यंशाभ्यां सेतुबन्धाशयविपरीतं चतुःशतश्लोकात्मकपञ्चपटलात्मक एव नित्याषोडशिकार्णव इति सिद्ध्यति । अथापि "मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः" इति वचनेन वामकेश्वरतन्त्रस्य मध्यभागे नित्याषोडशिकार्णव इत्यायाति । तेन नित्याषोडशिकार्णवस्य पूर्वापरभागयोर्वामकेश्वरतन्त्रस्य विस्तारः शिवानन्दमुनेरपि संमत इति वक्तुं शक्यते ।

"तदिदं वामकेश्वरतन्त्रं पूर्वोत्तरचतुःशतीयुगलात्मकमेव मन्यन्ते" इति सेतुबन्धसूचितं मतं केषां ग्रन्थकाराणामिति न परिज्ञायते ।

"नित्यानां षोडशानां च नव तन्त्राणि कृत्स्नशः" ( १।२ ) इति तन्त्रराज-(कादिमत)श्लोकव्याख्यानावसरे मनोरमाकारेण सुभगानन्दनाथेन—"नवतन्त्राणि सुन्दरीहृदय-नित्याषोडशिकार्णव-चन्द्रज्ञान-मातृकातन्त्र-सम्मोहनतन्त्र-वामकेश्वर-बहुरूपाष्टक - प्रस्तारचिन्तामणि - मेरुप्रस्ताराख्यानि वर्तन्ते" इत्युक्तम् । अत्र नित्याषोडशिकार्णवः सुन्दरीहृदयापरपर्यायं योगिनीहृदयं च पृथगेव परिगणिते । वामकेश्वरतन्त्रस्यापि पृथग् गणने किं बीजमिति न जानीमः । नित्यातन्त्रेषु प्रसिद्धतरौ श्रीक्रमसंहिताज्ञानार्णवावत्र न परिगणिता इत्यपि स्मरणीयं मनीषिभिः ।

एष च मनोरमाकारः सुभगानन्दनाथो भास्कररायेण सेतुबन्धे—"अतिप्राचीनैर्मनोरमाकारैः" (पृ० १७६) इत्येवं स्मृतः । तस्य समये सुन्दरीहृदयं ( योगिनीहृदयं ) वामकेश्वरतन्त्रं च पृथगेव गण्येते स्म । अयमेव चार्थः—"वामकेश्वरतन्त्रेऽस्मिन्नज्ञातार्थास्त्वनेकशः", "शृणु देवि महागुह्यं योगिनीहृदयं परम्" इत्याभ्यां योगिनीहृदयारम्भे स्थिताभ्यां प्रथमद्वितीयश्लोकाभ्यां प्रतीयते । अस्मिन् पूर्वोपदिष्टे वामकेश्वरतन्त्रेऽनेकेऽज्ञातार्थाः सन्ति, तानर्थानशेषेण वक्तुं योगिनीहृदयोपदेशः । 'पूर्वचतुःशती',

---

१. मद्रासराजकीयग्रन्थालयस्य विवरणात्मके सूचीपत्रे ऋजुविमर्शिन्या डी० ५६२२ संख्याकपुस्तकविवरणेऽप्येष एव पाठो दृश्यते ।

'उत्तरचतुःशती' इति समाख्ये अपि नवीने, अमृतानन्दमुनिना सर्वत्र चतुः-शतीपदेन नित्याषोडशिकार्णवस्यैव ग्रहणात्। तन्त्रालोकव्याख्यात्रा जयरथेन वामकेश्वरीमतनाम्ना पञ्चपटलात्मकस्य नित्याषोडशिकार्णवस्य विवरणं कृतम्। तेनापि ज्ञायते तदानीं नित्याषोडशिकार्णवो वामकेश्वरतन्त्रनाम्ना प्रथित आसीदिति।

अत्रैवं समाधातुं शक्यते—पूर्वं वामकेश्वरतन्त्रं योगिनीहृदयं च पृथगेव गण्येते स्म। ततः कालक्रमेण योगिनीहृदयस्य वामकेश्वरतन्त्राज्ञातार्थ-प्रकाशकत्वेनैकशास्त्र्यं पश्चात्तनैरङ्गीकृतम्। एवं च "वामकेश्वरतन्त्रं पूर्वोत्तरचतुःशतीयुगलात्कम्" इति मतमाविर्भूतम्। गच्छता कालेन [1]सौभाग्यरत्नाकरकारविद्यानन्दनाथगुरोर्ललिताचर्नचन्द्रिकाकारस्य सच्चि-दानन्दनाथस्य समयेऽन्येऽप्यंशा अत्रत्या इत्यभिमताः। तत्परवर्तिना भास्कररायेण चैतदेवान्तिमं मतं स्वीकृतमिति।

## दीपिकाकारपरिचयः

**गुरुः पुण्यानन्दः**

कामकलाविलासकारः पुण्यानन्दो दीपिकाकारस्यामृतानन्दयोगिनो गुरुरासीदिति प्रतिपटलान्तं स्थितया दीपिकापुष्पिकया, "एतत् कामकला-विलासेऽप्यस्मद्गुरुभिः प्रपञ्चितम्" (तत्रैव, पृ० १९) इत्यमृतानन्दस्य स्वोक्त्या च स्फुटं प्रतीयते। अमृतानन्दगुरुणाऽन्येऽपि ग्रन्था रचिता आसन्। तत्त्वविमर्शिनीनामकस्य तद्रचितस्य ग्रन्थस्य "तत्त्वविमर्शिन्यामस्मद्गुरूक्त-रीत्या" (तत्रैव, पृ० २३५) इत्येवं दीपिकाकारेण निर्देशः कृतः। अनुष्टुप्-

---

१. सौभाग्यरत्नाकर-शिवार्चनचन्द्रिकाद्यनेकग्रन्थनिर्मात्रा श्रीनिवासभट्टा-परनामधेयेन विद्यानन्दनाथेन १६३० वैक्रमे वत्सरे सौभाग्यरत्नाकरो विरचित इति सरस्वतीभवनस्थस्य २५९४६संख्याकस्य सौभाग्य-रत्नाकरस्य पुष्पिकया ज्ञायते। तदित्थम्—

खवह्निरसशीतांशुसंख्ये विक्रमभूभुजः।
वत्सरे शुक्लपञ्चम्यां पुष्यमासस्य भास्करे॥
मकरस्थे सोमवारे प्रयागस्थेन धीमता।
श्रीविद्यानन्दनाथेन शिवयोः प्रियहेतवे॥
हिताय शिष्यवर्गाणां श्रीसौभाग्यपदादिकः।
रत्नाकरोऽयं रचितः साधकानां हितावहः॥ इति।

छन्दोनिबद्धः पद्धतिग्रन्थोऽयमिति प्रतीयते। अन्येऽपि दार्शनिकरहस्यप्रतिपादका बहवः श्लोका दीपिकाकारेण तत्र तत्र स्वगुरुनाम्नोद्धृताः, ये कामकलाविलासे नोपलभ्यन्ते। तत्रत्याः ७८,९३,१७५,१८५,१८८,१८९, १९५,२४९,३३७ पृष्ठस्थिताः श्लोकाः श्रीरङ्गम्नगरस्थवाणीविलासमुद्रणालयतो मुद्रिते चिद्विलासस्तवे दृश्यन्ते। तेनास्य स्तवस्य रचयिता पुण्यानन्द इति निश्चीयते। नटनानन्दकृतचिद्वल्लीव्याख्यासंवलितकामकलाविलासभूमिकायां जॉन-उडरफमहोदयेन पुण्यानन्दो योगिनीहृदयव्याख्यातृरूपेणापि स्मृतः। तत्र किं बीजमिति न जानीमः।

**अन्ये ग्रन्थाः**

दीपिकायामेव नैकश उद्धृतः सौभाग्यसुभगोदयोऽमृतानन्दस्य स्वतन्त्रो ग्रन्थ इति प्रतीयते। दीपिकायां तस्य विस्तृतान्युद्धरणानि प्रदत्तानि। षट्त्रिंशत्तत्त्वसंदोहनाम्ना काश्मीरसंस्कृतग्रन्थमालायां मुद्रितो ग्रन्थः सौभाग्यसुभगोदयस्यैवांशमात्रम्। दीपिकायां १२४-१२६ पृष्ठेषु षट्त्रिंशत्तत्त्वसंदोहस्थाः सर्वेऽपि श्लोकाः सौभाग्यसुभगोदयनाम्नोद्धृताः सन्ति। तत्रैव (पृ० १५०) सेतुबन्धेऽमृतानन्दस्य सौभाग्यसुधोदयनामा ग्रन्थ उद्धृतः। अड्यारपुस्तकालयेऽस्य ग्रन्थस्य मातृकाद्वयमुपलभ्यते। स एष ग्रन्थः सौभाग्यसुभगोदयतो भिन्नोऽभिन्नो वेति ग्रन्थावलोकनत एव ज्ञातुं शक्येत। आफ्रेख्टसूच्यां तत्कृतित्वेनोद्धृतानन्यान् ग्रन्थानधिकृत्य, तन्त्रसारकारेण कृष्णानन्देन अमृतानन्दस्य संबन्धं चोद्दिश्य श्रीगुरुचरणैः सर्वं प्रथमसंस्करणभूमिकायां प्रतिपादितम्। सरस्वतीभवनपुस्तकालयेऽमृतानन्दनाथविरचितस्याष्टाङ्गनिर्णयामृतचषकस्य मातृकाद्वयमुपलभ्यते। माधवानन्दनाथशिष्य एष अमृतानन्दोऽतीवार्वाचीन इति दीपिकाकारतो भिन्न एव।

**समयः**

वामकेश्वरीमत(नित्याषोडशिकार्णव)विवरणारम्भे जयरथेन—"पूर्वे श्रीदीपिकाचार्यप्रमुखा गुरवो मम"[1] इत्युक्तम्। अत्र दीपिकाचार्यपदेनामृतानन्दनाथ एवाभिप्रेतो ग्रन्थकारस्येति तत्रत्यभूमिकायामुक्तं ग्रन्थसम्पादकेन। 'अभिनवगुप्त'[2] इत्याख्ये आङ्ग्लभाषामये ग्रन्थे डॉ० कान्तिचन्द्रपाण्डेयमहोदयेन जयरथसमयः ख्रीष्टद्वादशशताब्द्या अन्तिमो भागस्त्रयो-

१. वामकेश्वरीमतम्, पृ० १

२. द्रष्टव्यम्—पृ० २६२, द्वितीयं संस्करणम्।

दशशताब्द्या आद्यो भागश्च निर्धारितः, वामकेश्वरीमतविवरणभूमिकायां तु खीष्टद्वादशशताब्द्या आद्यो भाग इति।' एष एव समयोऽमृतानन्दस्यापि संभाव्यते।

## सौभाग्यविद्यासम्प्रदायः

अघोरशिवाचार्येण मृगेन्द्रवृत्तिदीपिकायां विद्यापादे—'हिरण्यगर्भकपिलमत्स्येन्द्रादयो वेदसांख्यकौलादितन्त्राणाम्" (पृ० ७४) इत्याचार्योक्त्या मत्स्येन्द्रनाथः कौलमार्गप्रवर्तकः प्रथम आचार्य इति प्रतिपादितम्। अभिनवगुप्ताचार्योऽपि तन्त्रालोकप्रथमाह्निकसप्तमपद्ये सकलकुलशास्त्रावतारकतया प्रसिद्धं मच्छन्दविभुं स्तौति। अस्मिन् कौलदर्शनसम्प्रदाये नाथनामान्ता अनेके आचार्याः समभूवन्। कौलसम्प्रदायत एव सौभाग्यविद्यासम्प्रदायः प्रववृते। अत्रत्याश्च आचार्या आनन्दनाथनामान्ता बहवः समभवन्। "....तेभ्योऽपि ललितामन्त्रा दशभेदविभेदिताः॥ तेषु द्वौ मनुराजौ तु वरिष्ठौ विन्ध्यमर्दन। लोपामुद्रा कामराज इति ख्यातिमुपागतौ॥ हादिस्तु लोपामुद्रा स्यात् कामराजस्तु कादिका॥" (ब्रह्माण्डपुराणे, ४।३८।८-१०) अत्र दशधा ललितामन्त्राः प्रतिपादिताः। ज्ञानार्णवतन्त्रे तु द्वादशे पटले द्वादश विद्याः सूचिताः। ज्ञानार्णवस्य व्याख्यानात्मिकायां पद्धतौ शङ्करानन्दनाथरचितसुन्दरीमहोदये इमा द्वादश विद्या उद्धृताः। तत्र लोपामुद्राभिधा हादिविद्या, कामराजोपासिता कादिविद्या च प्रथिततमे। पुण्यानन्दनाथामृतानन्दनाथादयो हादिविद्यानुयायिनः, भास्कररायस्तु कादिविद्यासम्प्रदायमनुसरति। बहुशाखा बहुकालव्यापिनी चेयं सौभाग्यविद्यासम्प्रदायपरम्परा। सत्यवसरेऽत्र विषये विस्तरेण विचारः करिष्यते। तदैव भास्कररायेण प्रतिपादिता दार्शनिकसिद्धान्ता अपि विवेचयिष्यन्त इत्यधुनैतावदेवोक्त्वा विरम्यते॥

—:०:—

# श्रीविद्यायाः समयिसम्प्रदायः

आगमेषु पुंदैवत्या मनवो मन्त्रा इति, स्त्रीदैवत्याश्च विद्या इति व्यपदिश्यन्ते। मनवो मन्त्रा इति चानर्थान्तरम्। तत्र भगवत्यास्त्रिपुरसुन्दर्या मन्त्राः श्रीविद्या इति नाम्नोच्यन्ते। ज्ञानार्णवतन्त्रे द्वादशे पटले उपासकभेदेन भिन्नाः श्रीविद्याया द्वादश भेदाः प्रदर्शिताः। इमे च ते उपासकाः—लोपामुद्रा, कामराजः, मनुः, चन्द्रः, कुबेरः, अगस्त्यः, नन्दी, इन्द्रः, सूर्यः, शंकरः, विष्णुः, दुर्वासाश्च। इमाः सर्वा विद्याः शङ्करानन्देन स्वकीयाया ज्ञानार्णवतन्त्रव्याख्यानभूतायाः 'सुन्दरीमहोदय'[1] इत्याख्यायाः पद्धत्या आरम्भे उद्धृताः। एतासु लोपामुद्रोपासिता कामराजोपासिता चेति द्वे विद्ये प्रथिततमे। एते च विद्ये शङ्कराचार्येण स्वकीयायां सौन्दर्यलहर्यां प्रथमतरङ्गस्य ३२-३३ श्लोकयोरुद्धृते। लोपामुद्रोपासिताया हादिविद्यायाः कामराजोपासितायाश्च कादिविद्यायाः सम्प्रदायः साम्प्रतमप्यविच्छिन्नरूपेण प्रवहति। शिवानन्दपुण्यानन्दामृतानन्दनाथादयो हादिविद्यायाः, विद्यानन्द-शङ्करानन्द-भास्कररायप्रभृतयश्च कादिविद्याया अनुयायिनः। शङ्कराचार्येण प्रथमं हादिविद्या उद्धृता। हादिविद्यासम्प्रदाय एव प्राचीन इत्यन्यत्र सप्रमाणं साधयिष्यते।

## त्रिपुरसुन्दरी श्रीविद्या च

सूर्यचन्द्रयोर्देवयानपितृयाणात्मकेडापिङ्गलामार्गेणाहोरात्रयोः संचरणम्। चन्द्रस्तु वामनाडीमार्गेण संचरन् द्विसप्ततिसहस्रनाडीमार्गममृतेन सिञ्चति। सूर्यश्च दक्षिणनाडीमार्गेण संचरन् तदुत्क्षिप्तानमृतबिन्दूनुपाहरति। यदा चन्द्रसूर्ययोरुभयोराधारचक्रे समावेशस्तदामावास्या तिथिरुत्पद्यते। कृष्णपक्षतिथयस्तत उत्पद्यन्ते। अत एव कुण्डलिनी शक्तिराधारकुण्डे सूर्यकिरणसंपर्काद् विलीनचन्द्रमण्डलमध्यगलत्पीयूषपरिपूरिते स्वपिति। स्वापावस्थैव कृष्णपक्ष इत्युच्यते[2]। योगी यदा समाहितचित्तश्चन्द्रं

---

१. एष ग्रन्थो नाद्युनावधि मुद्रितः। अस्य मातृकाः सरस्वतीभवनपुस्तकालयेऽन्येषु च पुस्तकालयेषु विद्यन्ते।

२. एवं च शुक्लपक्ष एव कुण्डलिनीप्रबोधः कर्तुं शक्यते योगिभिर्न तु कृष्णपक्ष इत्यवधेयमत्र।

चन्द्रस्थाने सूर्यं सूर्यस्थाने वायुना निरोद्धुं क्षमते, तदा चन्द्रसूर्यौ निरुद्धा-वमृतसेचनतदाहरणयोरशक्तौ। तदानीं, वायुना प्रेरितेन स्वाधिष्ठान-वह्निना शुष्कीभूतेऽमृतकुण्डे निराहारा कुण्डलिनी सुप्तोत्थिता सती सर्पवत् फूत्कारं कुर्वती [1]ग्रन्थित्रयं भित्वा सहस्रदलकमलमध्यवर्तिनं चन्द्रमण्डलं दशति। तस्माद् गलन्ती पीयूषधारा आज्ञाचक्रोपरिस्थितचन्द्रमण्डलमाप्लाव-यति। तस्माद् गलिताभिरमृतधाराभिः सर्वं देहमाप्लावयन्ति। ततश्चाज्ञा-चक्रोपरिस्थितस्य चन्द्रमसः कलाः पञ्चदश नित्याः। ताः पञ्चदश तदधः-स्थितविशुद्धिचक्रमाश्रित्य परिवर्तन्ते। सहस्रदलकमलान्तःस्थितचन्द्र-मण्डलं बैन्दवस्थानम्। तत्कला चिन्मयी आनन्दरूप आत्मेति गीयते। सैव त्रिपुरसुन्दरी।

चन्द्रस्य प्रथमायाः कलायाः प्रतिपदिति नामधेयम्। सैव कलात्मिका सूर्यमण्डलान्निर्गता। कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा। एवं शुक्लपक्षे सूर्यमण्डलान्निर्गता द्वितीया कला द्वितीया तिथिः। कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा द्वितीया कला द्वितीया तिथिरिति। एव सर्वत्र ऊहनीयम्। अतश्च पञ्चदशकलाव्यवधानं सूर्यचन्द्रयोर्यत्र सा पौर्णमासी। पञ्चदश्यां कलायां सूर्यचन्द्रयोरत्यन्तसंयोगोऽतः सा अमावास्या। कौलमते चन्द्रकलात्मिकानां षोडशानां नित्यानां प्रतिदिनमेकस्या एवानुष्ठानम्। सर्वासां समयिमते। षोडश्याः कलायास्तु पञ्चदशस्वपि तिथिष्वनुष्ठानं सिद्धम्, पञ्चदशानां नित्यानां तत्रैवान्तर्भावात्। षोडशी कला नाम शकाररेफईकारबिन्द्वन्तो मन्त्रः। एतस्यैव बीजस्य नाम श्रीविद्येति। श्रीबीजात्मिका विद्या श्रीविद्येति।

## त्रिविधः सम्प्रदायः

एतस्याः श्रीविद्यायाः सम्प्रदायः प्रक्रियाभेदेन त्रिविधः—कौलमतम्,

---

१. आधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञाचक्रात्मकं श्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम्। मूलाधारस्वाधिष्ठानचक्रद्वयमेकं खण्डम्। मणि-पूरानाहतचक्रद्वयमेकं खण्डम्। विशुद्धयाज्ञाचक्रद्वयमेकं खण्डम्। तत्र प्रथमखण्डोपरि अग्निस्थानम्। तदेव रुद्रग्रन्थिरित्युच्यते। द्वितीय-खण्डोपरि सूर्यस्थानम्। तदेव विष्णुग्रन्थिरित्युच्यते। तृतीयखण्डोपरि चन्द्रस्थानम्। तदेव ब्रह्मग्रन्थिरित्युच्यते। एतदेव ग्रन्थित्रयम्।

मिश्रमतम्, समयिमतं चेति[1]। तत्र कौलानां चतुष्षष्ट्यागमा नित्याषोडशिकार्णवादौ प्रदर्शिताः। मिश्रमतानुयायिनामष्टौ आगमाश्चन्द्रकलाज्योत्स्नावतीप्रभृतयः। समयिनां तु शुभाश्रयपञ्चकम्। त्रिविधानामेषामागमानां विस्तरेण परिचयः—"चतुष्षष्ट्या तन्त्रैः" (१।३१) इति श्लोकस्य लक्ष्मीधरटीकायां द्रष्टव्यः। अयं शुभाश्रयपञ्चकनिरूपितो मार्गो वसिष्ठसनकशुकसनन्दनसनत्कुमारैः पञ्चभिर्मुनिभिः स्वस्वनाम्ना प्रसिद्धासु संहितासु प्रदर्शितः। अयमेव समयाचार इति व्यवह्रियते। इमाः संहिताः साम्प्रतं नोपलभ्यन्ते। [2]अम्बास्तवटीकायाम्—"श्रीशङ्कराचार्यकृतौ सौभाग्यविद्यासुभगोदयाख्यौ" इति दृश्यते। एतौ ग्रन्थौ तत्र नैकत्रोद्धृतौ। सुभगोदयस्तस्य व्याख्यानानि च बहुषु ग्रन्थेषूद्धृतानि सन्ति। ग्रन्थास्तु नोपलभ्यन्ते। गौडपादाचार्यकृता सुभगोदयस्तुतिर्भिन्न एव ग्रन्थः। शिवानन्दविरचितायाः सुभगोदयवासनाया अपि नास्त्यनेन कोऽपि संबन्धः। अन्वेषणार्ह एष ग्रन्थः। सुभगोदयतद्व्याख्याने सौन्दर्यलहरीव्याख्याकर्तुर्लक्ष्मीधरस्य कृतौ लक्ष्मीधरायां नैकश उद्धृते। लल्लेन विरचिताऽपरा टीका सुभगोदयस्य भास्कररायेण ललितासहस्रनामव्याख्यायां सौभाग्यभास्कराभिधायामुद्धृता। एवमादयो बहवो ग्रन्था अस्य सम्प्रदायस्य साम्प्रतं नोपलभ्यन्ते। शङ्कराचार्यपीठेष्वेते ग्रन्था अद्यापि सुरक्षिताः स्युरिति संभाव्यते। भाविनः शङ्कराचार्यमहोदया एतेषामुद्धारार्थं प्रार्थ्यन्ते।

साम्प्रतमुपलभ्यमानेषु समयिसम्प्रदायग्रन्थेषु गौडपादकृता सुभगोदयस्तुतिः शङ्कराचार्यकृता सौन्दर्यलहरी तस्या लक्ष्मीधराभिधा टीका च प्रथिततमाः। गौडपादकृतित्वविषये आद्यशङ्कराचार्यकृतित्वविषये च विवदन्ते ऐतिहासिकाः। तस्याश्चर्चाया नास्त्यत्रावसरः। श्रीमता अनन्तकृष्णशास्त्रिणा परिष्कृतस्य सौन्दर्यलहरीसंस्करणस्य भूमिकायामस्याः ३३ संख्याकानां टीकानामुपलब्धिरद्यावधि संजातेति सूचितम्। एताभ्यो भिन्नाया गौरीकान्तकृतायाष्टीकाया मातृका बटोदरस्थगायकवाडशोध-

---

१. "चतुष्षष्टिस्तन्त्राण्यपि कुलमतं निन्दितमभूद् यदेतन्मिश्राख्यं मतमपि भवेन्निन्दितमिह। शुभाख्याः पञ्चैताः श्रुतिसरणिसिद्धाः प्रकृतयो महाविद्यास्तासां भवति परमार्थो भगवती॥" इत्येवं गौडपादकृतायां सुभगोदयस्तुतौ संक्षेपेणैषां परिचयो दृश्यते।

२. सरस्वतीभवनपुस्तकालयस्थितायाः २१९२२ संख्याकाया मातृकाया द्वितीये पत्रे।

संस्थानपुस्तकालये वर्तते। डा० कान्तिचन्द्रपाण्डेयमहोदयेन स्वकीये 'अभिनवगुप्त'[1] इत्याख्ये ग्रन्थे गौरीकान्तेन नित्याषोडशिकार्णवस्य व्याख्यानं रचितमित्युक्तम्। तत्त्वनवधानप्रयुक्तं मन्तव्यम्। "चतुष्षष्ट्या तन्त्रैः" (१।३१) इति सौन्दर्यलहरीश्लोकव्याख्याने व्याख्याकारैः प्रायशो नित्याषोडशिकार्णवस्य चतुष्षष्टितन्त्रसूचकानि पद्यान्युद्धृतानि व्याख्यातानि च। तानि च व्याख्यानानि नित्याषोडशिकार्णवव्याख्याने सेतुबन्धे भास्कररायेणालोचितानि। एतदेवानवधानप्रयोजकं डाक्टरमहोदयानाम्। अस्तु। अत्र लक्ष्मीधरस्य सौन्दर्यलहरीटीकां लक्ष्मीधरामाश्रित्य समयिमतस्य, [2]शिवानन्दकृतसुभगोदयवासनामाश्रित्य समयिनामान्तरपूजायाश्च संक्षेपेणालोचनं विधीयते।

सौन्दर्यलहर्यां शतसंख्याकाः श्लोकाः सन्ति। अस्त्यत्र विभागद्वयम्। आनन्दलहर्याख्ये प्रथमे तरङ्गे त्रैपुरं दर्शनं विवृतम्, द्वितीये तरङ्गे च देव्यास्त्रिपुरसुन्दर्याः सौन्दर्यं वर्णितम्। "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि" इत्यस्ति प्रथमः श्लोकः। शक्तिरहितः शिवः शव एव भवति। शक्तेर्माहात्म्यातिशयवर्णनादेवास्य त्रैपुरदर्शनस्य शाक्तागमेऽन्तर्भावः।

"चतुर्भिः श्रीकण्ठैः" (१।११) इत्यत्र "पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः" (१।१८) इति योगिनीहृदयोक्तोऽर्थः सूचितः। श्रीचक्रमध्ये चतुर्योन्यात्मकमर्धचक्रं भवति; तच्च शिवशब्देन वह्निशब्देन चोच्यते। अवशिष्टं पञ्चयोन्यात्मकमर्धचक्रं शक्तिशब्देनाभिधीयते। एवमर्धद्वयमिश्रितं नवयोन्यात्मकं श्रीचक्रं भवति। अस्य चक्रस्य विस्तरेण स्वरूपपरिचयो नित्याषोडशिकार्णवे योगिनीहृदये च चक्रसंकेते द्रष्टव्यः।

श्रीचक्रस्य वियच्चक्रमिति नामान्तरमस्ति। वियच्चक्रत्वं च वियत्पूज्यत्वात्। वियत्पूज्यत्वं द्विविधम्—दहराकाशजं बाह्याकाशजं चेति।

---

१. द्रष्टव्यम्—द्वितीयं संस्करणम्, पृ० ५७०

२. महार्थमञ्जरीकारेण शिवानन्दस्य प्रशिष्येण गोरक्षापरपर्यायमहेश्वरानन्दनाथेन सुभगोदयवासना क्रमवासनानाम्नोद्धृता। अस्या एका मातृका मद्रासराजकीयपुस्तकालयेऽपरा च त्रिवेन्द्रम्राजकीयपुस्तकालये विद्यते। अस्याः प्रतिलिपिर्निबन्धस्यास्य रचयितुः समीपेऽपि साम्प्रतमस्ति। कैश्चन विशिष्टैर्ग्रन्थैः सहास्य प्रकाशनं शीघ्रमेव भविता।

बाह्याकाशजं नाम बाह्याकाशावकाशे पीठादौ भूर्जपत्रशुद्धपटहेमरजतादि-पट्टतले लिखित्वा समाराधनम्। एतदेव कौलपूजेत्युच्यते। दहराकाशजं नाम हृदयाकाशावकाशे चक्रस्य पूजनम्। इदमेव समयपूजेत्याहुः समयिनः। समयिनां मन्त्रस्य पुरश्चरणं नास्ति, जपो नास्ति, बाह्य-होमोऽपि नास्ति, बाह्यपूजाविधयो न सन्त्येव। हृत्कमल एव सर्वं यावदनुष्ठेयम्। समयिनां मते [1]समयस्य सादाख्यतत्त्वस्य सपर्या सहस्र-दलकमल एव, न तु बाह्ये पीठादौ। ये ये समयिनो योगीश्वरा जीवन्मुक्ताः संसारयात्रामनुवर्तमानाः सादाख्यतत्त्वमनुचिन्तयन्त आत्मैकप्रवणा वर्तन्ते, तेषां "जपो जल्पः शिल्पम्" (१।२७) इत्यादिना सपर्याप्रकारो निरूपितः। ये तु समयिनो योगीश्वरा विजने गुहान्तरे वा बद्धपद्मासना निगृहीते-न्द्रियाः सादाख्यतत्त्वध्यानैकनिष्ठा वर्तन्ते, तेषां चतुर्विधषड्विधैक्यानु-सन्धानमेव भगवत्याः सपर्या।

आधारादिषट्चक्राणां त्रिकोणादिषट्कत्वेन तादात्म्यम्। बिन्दुस्थानस्य चतुरस्रस्य सहस्रकमलत्वेन तादात्म्यम्, बिन्दुशिवयोस्तादात्म्यम्। एवं

---

१. शम्भुना साम्यं पञ्चविधं यातीति समया भगवती। समयत्वं शम्भो-रपि, पञ्चविधं साम्यं देव्या सह यातीति। उभयोर्मेलनमेव सादाख्यं षड्विंशं तत्त्वम्। अनयोः पञ्चविधसाम्यं तु—अधिष्ठानसाम्यम्, अवस्थानसाम्यम्, अनुष्ठानसाम्यम्, रूपसाम्यम्, नामसाम्यं चेति। यथा—"तवाधारे" (१।४१) इत्यत्राधिष्ठानसाम्यमुक्तम्, उभयो-राधारचक्रस्याधिष्ठानरूपत्वात्। अनुष्ठानसाम्यम् "जनकजननीमज्जग-दिदम्" (१।४१) इत्यनेन प्रतिपादितम्, उत्पादनक्रियायामुभयोर्व्या-प्रियमाणत्वात्। अवस्थानसाम्यं "तवाधारे" इत्यत्र लास्यताण्डव-शब्दाभ्यां प्रतिपादितम्, लास्यताण्डवयोर्नृत्यरूपेणैकत्वात्। रूपसाम्यं त्वारुण्यमुभयोः प्रसिद्धम्। यद्वा "नवात्मानम्" (१।४१) इति रूप-साम्यं नामसाम्यं च प्रतिपादितम्। समयपूजकाः समयिनः। तेषां षट्चक्रपूजा न नियता। अपि तु सहस्रदलकमल एव पूजा। सहस्र-दलकमलपूजा नाम सहस्रदलकमलस्य बैन्दवस्थानत्वेन, तन्मध्यगत-चन्द्रमण्डलस्य चतुरस्रात्मना, तन्मध्यबिन्दोः पञ्चविंशतितत्त्वातीत-षड्विंशात्मकशिवशक्तिमेलनरूपसादाख्यात्मनाऽनुसन्धानम्। अत एव समयिमते बाह्याराधनं दूरत एव निरस्तम्। षोडशोपचारपूजाङ्ग-कलापश्च ततोऽपि दूरत एव।

देहशिवयोस्तादात्म्यमिति तादात्म्यत्रयम् । चक्रमन्त्रयोरैक्येन सह चतुर्विधमैक्यं संपद्यते । चतुर्विधैक्यानुसन्धानमेव भगवत्याः समाराधनमित्येतत् सर्वसंमतम् । केचित्तु षोढा ऐक्यमाहुः । यथा [1]नादबिन्दुकलातीतं भागवतं तत्त्वमिति सर्वागमरहस्यम् । नादः परापश्यन्तीमध्यमावैखरीरूपेण चतुर्विधः । परा त्रिकोणात्मिका, पश्यन्ती अष्टकोणचक्ररूपिणी, मध्यमा द्विदशाररूपिणी, वैखरी चतुर्दशाररूपिणी । शिवचक्राणामत्रैवान्तर्भाव इति चतुश्चक्रात्मकं श्रीचक्रं नादशब्दवाच्यम् । बिन्दुर्नाम षट्चक्राणि मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञात्मकानि बिन्दुशब्दवाच्यानि। कलाः पञ्चाशत् षष्ट्युत्तरत्रिशतसंख्याका वा[2] । एवं नादबिन्दुकलातीता भगवती । सहस्रकमलं बिन्द्वतीतं बैन्दवस्थानात्मकं [3]सुधासिन्ध्वपरपर्यायं सरघाशब्दवाच्यम् । नादातीततत्त्वं तु त्रिपुरसुन्दर्यादिशब्दाभिधेया चित्कलाशब्दवाच्या ब्रह्मविद्यापरपर्याया भगवतीति नादबिन्दुकलातीतं भागवतं तत्त्वम् । अत्र नादबिन्दुकलानां परस्परैक्यानुसन्धानं षोढा भवतीति षोढा ऐक्यम् ।

एवं भगवतीं षड्विधैक्येन संभाव्य पूजयित्वा सादाख्यायां विलीनो भवति । तदनन्तरं षड्विधैक्यानुसन्धानमहिम्ना गुरुकटाक्षसंजातमहावेधमहिम्ना च भगवती झटिति मूलाधारस्वाधिष्ठानात्मकचक्रद्वयं भित्वा मणिपूरे प्रत्यक्षं प्रतिभाति । महावेधप्रकारश्चेत्थम्—पूर्वमभ्यासदशायां गुर्वेकपरतन्त्रमहाविद्यां गुरुमुखादेव स्वीकृत्य ऋषिच्छन्दोदेवतापूर्वकं मूलमन्त्रस्य शुष्कजपं गुरूपदिष्टमार्गेण कुर्वन् आश्वयुजशुक्लपक्षे महानवमीशब्दाभिधेयाष्टम्यां निशीथसमये गुरोः पादोपसंग्रहणं कुर्यात् । तन्महिम्ना

---

१. बिन्दुरिति मूलाधारादिचक्रषट्कम् । बिन्दुर्जगदुत्पत्तिलयहेतुकः शिवस्य शक्तिविशेषः । स च एक एव सहस्रदलकमलान्तर्गतचतुर्द्वारात्मककर्णिकामध्यगतचतुष्कोणात्मकं शक्तितत्त्वम् । तन्मध्यगतशिवतत्त्वं नाद इत्युच्यते । उभयोः शक्तिशिवयोः शब्दार्थरूपत्वात् कलात्मकत्वमुभयसाधारणम् । अतश्च मेलनं नादबिन्दुकलातीतमिति ।

२. अस्य प्रपञ्चः—"क्षितौ षट्पञ्चाशत्" (१।१४) इति सौन्दर्यलहरीश्लोकव्याख्यासु विशेषतः कैवल्याश्रमकृतायां सौभाग्यवर्धन्यां द्रष्टव्यः ।

३. तत्र नवयोनिष्वधःस्थितशिवात्मकयोनिचतुष्कस्योपर्यूर्ध्वस्थितशक्त्यात्मकयोनिपञ्चकादधःस्थितस्य बैन्दवस्थानस्य नाम सुधासिन्धुरिति ।

गुरोस्तदानीं कर्तव्यहस्तमस्तकसंयोग-पुनर्मन्त्रोपदेश-षट्चक्रपूजाप्रकारोपदेश-षड्विधैक्यानुसन्धानोपदेशैर्महावेधः शैवः सादाख्यायाः प्रकाशरूपो जायत इति।

एवं महावेधे जाते भगवती मणिपूरे प्राप्तव्या भवति। सा समाराध्या। अर्घ्यपाद्यादिभूषणप्रतिपादनपर्यन्तं पूजाकलापं मणिपूरे निर्वर्त्याऽनाहतमन्दिरं भगवतीं नीत्वा धूपादिनैवेद्यहस्तप्रक्षालनान्तं कर्मकलापं तत्रैव समाप्य विशुद्धौ भगवतीं सिंहासनासीनां सखीभिः संलापान् संभाषमाणां शुद्धस्फटिकसदृशैर्मणिभिः पूजयेत्। शुद्धस्फटिकसदृशमणयो न मौक्तिकादयः, किन्तु तदीयषोडशदलगताः षोडश चन्द्रकलाः। एवं संपूज्य आज्ञाचक्रं नीत्वा देवीं कामेश्वरीं नीराजनविधिभिरनेकैः संप्रीणयेत्। तदनन्तरं झटिति विद्युल्लतेव सहस्रकमलमनुप्रविष्टा सुधाब्धौ पञ्चकल्पतरुच्छायायां मणिद्वीपे सरधामध्ये सदाशिवेन सार्धं विहरमाणा वर्तते। तदा तिरस्करिणीं प्रसार्य समीपे मन्दिरे स्वयं निवसेत्। यावद् भगवती विनिर्गता पुनर्मूलाधारकुण्डं प्रविशति, तावत्पर्यन्तं स्थातव्यमिति समयमततत्त्वरहस्यम्।

मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धयाज्ञात्मकानि षट् चक्राणि। एतानि पृथिव्यग्निजलपवनाकाशमनस्तत्त्वात्मकानि। तानि तत्त्वानि तेषु चक्रेषु तन्मात्रतयाऽवस्थितानि। तन्मात्रास्तु गन्धरूपरसस्पर्शशब्दात्मकाः। आज्ञाचक्रस्थितेन मनस्तत्त्वेनैकादशेन्द्रियगणः संगृहीतः। एवमेकविंशतितत्त्वानि प्रतिपादितानि। पत्या सह रहसि सहस्रपत्रे विहरसे, इत्यनेन तत्त्वचतुष्टयं सूचितम्। तच्च मायाशुद्धविद्यामहेश्वरसदाशिवात्मकं तत्त्वचतुष्टयम्। तच्च ब्रह्मग्रन्थ्यनन्तरभावि चतुर्द्वारात्मकभूपुरत्रितयात्मकश्रीचक्रद्वारचतुष्टये स्थितम्। प्राणादिद्वारदेशेषु मायादीनि चत्वारि तत्त्वानि। तान्येव मञ्चस्य चतुष्पादानि। माया महेश्वरेण संयुक्ता सती तस्य जीवभावमापादयति। स जीवः प्राकृत एव। शुद्धविद्या तु सदाशिवेन युक्ता सती सादाख्या कलेति व्यवह्रियते। अतो भगवती चतुर्विंशतितत्त्वान्यतिक्रान्तासदाशिवेनपञ्चविंशेनसार्धं विहरमाणा षड्विंशतत्त्वत्वमापन्ना परमात्मेति गीयते। सादाख्या कला पञ्चविंशेन सदाशिवेन मिलिता षड्विंशा भवति, मेलनस्य तत्त्वान्तरत्वात्। न चोभयोर्मेलनमुभयात्मकम्। तस्य तदात्मरूपत्वात् तत्त्वान्तरमेवेति।

परानन्दाभिख्याया अस्याः सादाख्याया भगवत्याः साक्षात्कारं भजनवानुपलभते। तस्या भजनं च द्विविधम्—षट्चक्रसेवात्मकं धारणात्मकं च। आद्यं निरूप्यते—आधारस्वाधिष्ठाने तामिस्रलोकत्वाद् नोपास्ये। मणिपूरप्रभृति सहस्रकमलपर्यन्तं पञ्च चक्राणि पूज्यानि। तत्र मणिपूरकपूजापराणां सार्ष्टिरूपा मुक्तिः। सार्ष्टिर्नाम देव्याः पुरसमीपे पुरान्तरं निर्माय सेवां कुर्वाणस्यावस्थितिः। वियत्कमलपूजारतानां सालोक्यमुक्तिः। सालोक्यं नाम देव्याः पत्तने निवासः। विशुद्धिचक्रोपासकानां सामीप्यमुक्तिः। सामीप्यं नामाङ्गसेवकत्वम्। आज्ञाचक्रोपासकानां सारूप्यमुक्तिः। सारूप्यं नाम समानरूपत्वम्। पृथग्देहधारित्वेनेति सायुज्याद् भेदः। एतच्चतुर्विधं गौणं बाह्यदुःखातिवर्तित्वमात्राद् मुक्तिरिति व्यपदिश्यते। परं तु सायुज्यात्मिकैव शाश्वती मुक्तिः सहस्रकमलोपासकानामेवेति। तत्र सुखस्वरूपैव मुक्तिः, अत्यन्तदुःखोच्छेदानन्तरं सायुज्यसंसिद्धौ शिवशक्तिसंपुटान्तर्भावात्।

धारणा नाम वायोः कमलेषु नादकलाभ्यां निरोधः। स च षट्कमलेषु षोढा, सप्तमे कमले समयशब्दाभिख्येन सार्धं सप्तविधः। एकैकस्मिन् कमले पञ्चाशदिति षष्ट्युत्तरत्रिशतं धारणाः। ताश्च पृथङ्नादबिन्दुकलाभिः सार्धं मेलनप्रकारैरनन्ताः। धारणानां फलमाधारादिषट्चक्रेषु यथाक्रमं मतिस्मृतिबुद्धिप्रज्ञामेधाप्रतिभासंविद्रूपम्।

अत्रायं निष्कर्षः—षट्कमलेषु मनःषष्ठं भूतपञ्चकं तादात्म्येनावतिष्ठते। तच्च पिण्डब्रह्माण्डयोरैक्यानुसन्धानमहिम्ना, षट्कमलानुसन्धानमहिम्ना, पञ्चविधसाम्यानुसन्धानमहिम्ना, षड्विधैक्यानुसन्धानमहिम्ना च पिण्डाण्डं ब्रह्माण्डवदवभासत इति। तत्परिज्ञानाच्च शिवशक्तिसामरस्यपदं लभते।

शिवशक्तिसामरस्यात्मकात्मनवयोन्यात्मकात् श्रीचक्रादेव प्रकाशविमर्शरूपात् परापश्यन्त्यादिक्रमेणाष्टवर्गात्मिकायाः पञ्चाशद्वर्णात्मिकाया मातृकाया विकासस्ततश्च सचराचरस्य जगतः सृष्टिस्थितिसंहारादयो भवन्तीति प्रतिपादितं परापञ्चाशिकासौभाग्यसुधोदयादौ। अत्र विस्तरभयाद्विरम्यते। सत्यवसरे निबन्धान्तरे तत्प्रतिपादयिष्यते।

अन्ते चात्रान्तरपूजाविधिप्रतिपादकान् कांश्चन श्लोकान् सुभगोदयवासनास्थानुपस्थाप्यैष निबन्धः समाप्यते—

समस्तसम्पत्सम्पूर्णभोगमोक्षफलाप्तये ।
ध्यानामृतमयं नौमि गुरुं संविन्मयं शिवम् ॥२॥

पूर्णप्रमातृतासिद्ध्यै संकोचानां च शान्तये ।
चिदानन्दमहासारां विद्यामात्मीकरोम्यहम् ॥३॥

चिद्रसाच्छामृताम्भोधिलहरीरसशीकरैः ।
आर्द्रीकृतसमस्ताङ्गो विदधे स्नानमुत्तमम् ॥४॥

अहन्तेदन्तयोर्बीजमविभागरसात्मकम् ।
शिवशक्तिमयं चक्रं विश्वाकारं भजाम्यहम् ॥९॥

शिवशक्त्यात्मषट्कोणसामरस्यत्रिकोणकम् ।
संविद्रूपमहादर्शं करोम्येतेन मण्डलम् ॥२९॥

स्वात्मानन्दचमत्कारं परितृप्तिप्रयोजनम् ।
समाधिं समतासारं सम्यगङ्गीकरोम्यहम् ॥३३॥

स्वातन्त्र्योल्लासिताशेषतत्त्वव्रातविजृम्भितम् ।
संवित्तत्त्वं महाहन्तासारं ध्यायामि शीतलम् ॥३४॥

संविदग्नौ महासारे विमर्शैकशरीरिणि ।
भेदाभासमिदं हव्यं जुहोम्यपुनरुद्भवम् ॥६४॥

इति शम् ॥

—: ० :—

# शिवपुराणीयं दर्शनम्

बहुषु पुराणेष्वष्टादशपुराणानामुपपुराणानां च नामावली तत्रत्या श्लोकसंख्या च परिगणिता दृश्यते। तत्र पुराणनामावलीषु बाहुल्येन चतुर्थे स्थाने शिवपुराणस्य स्थितिः। मत्स्यपुराणे[1] न दृश्यते शिवपुराणस्य नाम। तत्र चतुर्थस्थाने वायुपुराणं परिगणितम्। कानिचनोपपुराणानि तत्रोद्धृतानि[2] सन्ति। तत्रापि नास्ति शिवपुराणस्य सङ्केतः। देवीभागवतपुराणे[3] वायुपुराणस्य महापुराणेषु शिवपुराणस्य चोपपुराणेषु गणना। एवं वायुपुराणं शिवपुराणं चाधिकृत्य वर्तते पुराणेषु मतद्वैविध्यम्। शिवपुराणापेक्षया वायुपुराणमेव प्राचीनमित्यैतिहासिका वदन्ति। तदुचितमेव प्रतीयते। यतो हि पवमानप्रोक्तस्य पुराणस्य पाठो हर्षचरितकारस्य बाणभट्टस्य ख्रीष्टषष्ठशताब्दीभवस्य गृहे भवति स्म[4]। शिवपुराणे तु दृश्यते शिवसूत्रस्य,[5] शिवसूत्रवार्त्तिकस्य,[6] विरूपाक्षपञ्चाशिकायाश्चोल्लेखः[7]। जानन्त्येव विद्वांसः शिवसूत्राणीमानि इदम्प्रथमतया वसुगुप्तपादेनाधिगतानीति। वसुगुप्ताचार्यसमयश्चैतिहासिकैः ८२५-८५० ई० निर्धारितः[8]। एवं च वायुपुराणस्य प्राचीनत्वमर्वाचीनत्वं च शिवपुराणस्य सुतरां सिद्धयति।

---

१. मोरसंस्करणम्, पृ० १४५। अस्मिन् निबन्धे शिवपुराणं वामनपुराणं च विहायान्येषां पुराणानां मोरसंस्करणमेवोपयुक्तम्। शिवपुराण-वामनपुराणयोस्तु वेङ्कटेश्वरसंस्करणम्।

२. तत्रैव, पृ० १४७

३. मोरसंस्करणम्. पृ० २९

४. हर्षचरितम्, निर्णयसागरसंस्करणम्, पृ० ८६

५. "चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्तितम्" (६।१६।४४) इति, "ज्ञानं बन्ध इतीदं तु द्वितीयं सूत्रमीशितुः" (६।१६।४६) इति च।

६. "इत्यादिशिवसूत्राणां वार्त्तिकं कथितं मया" (६।१६।४६)।

७. "श्रीविरूपाक्षनिर्मिते। शास्त्रे पञ्चाशिके" (६।१९।४४)।

८. द्रष्टव्यम्—डा० कान्तिचन्द्रपाण्डेयरचितस्य "अभिनवगुप्त" इति ग्रन्थस्य द्वितीयं संस्करणम्।

### सप्त संहिताः

तदिदं शिवपुराणं पूर्वं द्वादशसंहितं लक्षश्लोकप्रमाणकं चासीत्। तदनु व्यासेन चतुर्विंशतिसहस्रश्लोकैः संक्षिप्य सप्तसु संहितासु विभक्तमिदम्। एतदेवाधुनोपलभ्यते। इमाः सन्ति संहितास्तत्र—प्रथमा विद्येश्वराख्या, द्वितीया रुद्रसंहिता, तृतीया शतरुद्राख्या, कोटिरुद्रा चतुर्थी, पञ्चमी उमासंहिता, षष्ठी कैलाससंहिता, सप्तमी वायुसंहिता चेति। तत्र द्वितीया रुद्रसंहिता सृष्टि-सती-पार्वती-कुमार-युद्धाख्येषु पञ्चखण्डेषु, सप्तमी वायुसंहिता च पूर्वोत्तरखण्डयोर्विभक्ता। शिवमाहात्म्यमेवात्र प्राधान्येन प्रतिपाद्यम्, अथापि पुराणानां समन्वयशैलीमनुरुद्ध्य विष्णुशिवयोरैक्यं साधितमेव[1]। विभिन्नेषु पुराणेषु वैष्णव-शैव-शाक्तागमानां वर्तते महान् प्रभावः। शिवपुराणं विशेषतस्तस्य सप्तमीं वायुसंहितामधिकृत्यात्र किञ्चित् प्रस्तूयते।

### उदधृतं वाङ्मयम्

अत्राष्टादशविद्यानामष्टादशपुराणानां रामायणमहाभारतयोश्चोल्लेखो वर्तत एव, एकत्र [2]षड्विंशतिपुराणानि निर्दिश्यन्ते। तेषां नामानि तु तत्र न दृश्यन्तेऽन्यत्र वा। अवधेयमत्र विषये विद्वद्भिः। पुराणनामसु भागवतनाम्ना [3]देवीभागवतं गृहीतमत्र। एकत्र[4] जाबालोपनिषदुट्टङ्किता वर्तते। स्थलद्वये[5]—"अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि" (श्लो० २) इति महिम्नस्तोत्रश्लोको[6] व्याख्यातो दृश्यते। एकत्र (७उ०।८।४९) लिङ्गपुराणम्, द्वित्रेषु स्थलेषु च कामिकादयो[7] दशाष्टादश शैवागमाः सूचिताः। शिवपार्वत्योः सांख्य-

---

१. विद्येश्वरसंहिताया द्वितीयोऽध्यायः, वायुसंहितायाः पूर्वखण्डस्य प्रथमाध्यायश्च द्रष्टव्यः।

२. "षड्विंशतिपुराणानां मध्येऽप्येकं शृणोति यः" (५।१३।४१)।

३. "भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते। तत्तु भागवतं प्रोक्तं ननु देवीपुराणकम्॥" (५।४४।१२९)।

४. "अग्निरित्यादिभिर्मन्त्रैर्जाबालोपनिषद्गतैः" (१।२४।८)।

५. रुद्रसंहितायाम् ३।४।११, ३।१२।१८ इत्यत्र च।

६. पुष्पदन्तरचित एष स्तवः प्राचीनतमः। अत्रत्यः श्लोको भट्टनारायणकण्ठेन मृगेन्द्रागमवृत्तौ (कश्मीरसंस्करणम्, पृ० ३०) उद्धृतः।

७. द्रष्टव्यम्—७पू०।३२।१२

वेदान्तसंमतो वादः,[१] जैनधर्मस्य मरुभूमौ प्रचारः,[२] दत्तेन संन्यास-पद्धतिर्बाधितेति[३] चोक्तमत्र। अत्रोद्धृतानां शिवसूत्र-वार्त्तिक-विरूपाक्ष-पञ्चाशिकानामुल्लेखः पूर्वं कृत एव।

## चतुर्विधाः शैवाः

शैवाः सिद्धान्तमार्गस्थाः शैवाः पाशुपतास्तथा।
शैवा महाव्रतधराः शैवाः कापालिकाः परे॥
(७उ०।३१।१७३)

इत्येवं चतुर्विधाः शैवा अत्र प्रदर्शिताः। त इमे भेदा हरिभद्ररचित-षड्दर्शनसमुच्चयस्य टीकायां गुणरत्नरचितायां तर्करहस्यदीपिकाया-मप्येवं दृश्यन्ते—

शैवाः पाशुपताश्चैव महाव्रतधरास्तथा।
तुर्याः कालमुखा मुख्या भेदास्ते तु तपस्विनाम्॥
(पृ० ५१) इति।

अपि चाग्रे तत्रैवोक्तम्—"तेषामन्तर्भेदा भरटभक्तलैङ्गिकादयो भवन्ति। भरटादीनां व्रतग्रहणे ब्राह्मणादिवर्णनियमो नास्ति। यस्य तु शिवे भक्तिः स व्रती भरटादिर्भवेत्। परं शास्त्रेषु नैयायिकाः सदा शिवभक्तत्वाच्छैवा इत्युच्यन्ते। वैशेषिकास्तु पाशुपता इति। तेन नैयायिकशासनं शैवमाख्यायते। वैशेषिकदर्शनं च पाशुपतमिति। इदं मया यथाश्रुतं यथादृष्टं चात्राभिदधे" (पृ० ५१) इति। अत्र यद् वक्तव्यं तदनुपदमेव वक्ष्यते। शङ्कराचार्येणेमे माहेश्वरा इत्युक्ता ब्रह्मसूत्रतर्कपादभाष्ये। भामतीकारेण च—"माहेश्वरा-श्चत्वारः—शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति" इत्युक्तम्। भास्करेण तु—"माहेश्वराश्चत्वारः—पाशुपताः, शैवाः, कापा-लिकाः, काठकसिद्धान्तिनश्चेति" इत्युक्तं स्वीयब्रह्मसूत्रतर्कपादभाष्य एव। "आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने। तृतीयं कालदमनं[४] चतुर्थं च कपालिकम्॥" (६।८७) इति च चत्वारो भेदाः प्रदर्शिता वामनपुराणे। यामुनाचार्येण त्वागमप्रामाण्ये तेषां नामानि लक्षणानि चैवं स्थापितानि—

---

१. द्रष्टव्यम्—२।३।१३।१-२४

२. द्रष्टव्यम्—२।५।४-५ अ०, २।५।१२।३१

३. द्रष्टव्यम्—३।१९।२६

४. कालदमनमिति पाठस्तु वेङ्कटेश्वरसंस्करणे वर्तते। अस्य पुराणस्य बहुतमेषु हस्तलेखेषु पुनः कालवदनमिति पाठो विद्यते।

"यथा माहेश्वरे तन्त्रे विरुद्धं बहु जल्पितम् ।
चतुर्विधा हि तत्सिद्धचर्यामार्गानुसारिणः ॥

यथा कापालिकाः कालामुखाः पाशुपतास्तथा ।
शैवास्तत्र च कापालं मतमेवं प्रचक्षते ॥

मुद्रिकाषट्कविज्ञानात् पुनस्तस्यैव धारणात् ।
अपवर्गफलप्राप्तिर्न ब्रह्मावगमादिति ॥

तथाहुः—

मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥

तथा—

कर्णिका रुचकं चैव कुण्डलं च शिखामणिम् ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते ॥

एवं कालामुखा अपि समस्तशास्त्रप्रतिषिद्धकपालपात्रभोजन-शवभस्म-स्नान-तत्प्राशन-लगुडधारण-सुराकुम्भस्थापन-तत्स्थदेवतार्चनादेरेव दृष्टा-दृष्टाभीष्टसिद्धिमभिदधानाः श्रुतिबहिष्कृता एव । तत्रैषा पाशुपतप्रक्रिया—

जीवाः पशव उच्यन्ते तेषामधिपतिः शिवः ।
स तेषामुपकराय पञ्चाध्यायीमचीक्लृपत् ॥
तत्र पञ्च पदार्थास्तु व्याख्याताः कारणादयः ।

कारणं कार्यं विधिर्योगो दुःखान्त इति ।

उपादानं निमित्तं च व्याख्यातं कारणं द्विधा ।
निमित्तकारणं रुद्रस्तत्कला कारणान्तरम् ॥
मह्यन्तं महदादि कार्यमुदितं तद्वद्विधिर्गीयते
गूढाचारमुखश्मशानभसितस्नानावसानः परः ।

योगो धारणमुच्यते हृदि धिया मोङ्कारपूर्वं तथा
दुःखान्तो हि मतोऽपवर्ग इति ते पञ्चापि संकीर्तिताः ॥

आत्यन्तिकी दुःखनिवृत्तिर्दुःखान्तशब्देनोक्ता। तामेव निःशेषवैशेषिकात्मगुणोच्छेदलक्षणां मुक्तिं मन्यन्ते। इयमेव चेश्वरकल्पना शैवानामन्येषां च" (पृ० ४६-४८) इति। इत्थमेव कापालाः कालामुखाश्च रामानुजाचार्येण श्रीभाष्ये तर्कपादे निरूपिताः।

अत्रोद्धृतेषु चतुर्विधमाहेश्वरप्रतिपादकेषु वचनेषु शैवानां पाशुपतानां चोल्लेखः सर्वत्र विद्यते। महाव्रतधराः शिवपुराणे गुणरत्नटीकायां चोल्लिखिता अन्यत्र न दृश्यन्ते। कापालिका गुणरत्नटीकायां न सन्ति, अन्यत्र तु विद्यन्ते। कालामुखा गुणरत्नटीकायामथ चागमप्रामाण्ये दृश्यन्ते, अन्यत्र न। कारुणिकसिद्धान्तिनो भामत्यामेव, काठकसिद्धान्तिनो भाष्करभाष्य एव, कालदमनाश्च वामनपुराण एव दृश्यन्ते। तत्र शैवानां पाशुपतानां च दार्शनिकाः सिद्धान्ताः प्रतिपादयिष्यन्ते पुरस्तात्। कापालिकानां कालामुखानां च स्वरूपपरिचयायैवात्रागमप्रामाण्यधृतवचनानि विस्तरेण संगृहीतानि, अन्यत्र तदनुपलब्धेः। कापालिकानां चर्या प्रसङ्गतो भवभूतिविरचिते मालतीमाधवनाटके, राजशेखरकृते कर्पूरमञ्जरीसट्टके, बाणभट्टविरचिते हर्षचरिते चोपलभ्यते। महाव्रतधराणां कारुणिकसिद्धान्तिनां काठकसिद्धान्तिनां कालदमनानां च स्वरूपपरिचायकः कोऽपि स्वतन्त्रो ग्रन्थः साम्प्रतं नोपलभ्यते। आगमप्रामाण्यवदन्यत्रापि केनचित्प्रसङ्गेन प्रतिपादितानि वचनानि न दृष्टान्यस्माभिः।

अत एतेषामत्रैवान्तर्भावो भिन्ना वैते सिद्धान्ता इति निर्णयः साम्प्रतं कर्तुं न शक्यते। गुणरत्नेन नैयायिकाः शैवाः, वैशेषिकाः पाशुपता इत्युक्तम्। योगाचार्यपरम्परासु वर्तेते न्यायदर्शनप्रवर्तकस्य गौतमस्य, वैशेषिकशास्त्रप्रवर्तयितुः कणादस्य च नामनी। न्यायवार्त्तिककार आत्मानं महापाशुपतं ख्यापयति। नैयायिकस्य भासर्वज्ञस्य पाशुपतशास्त्रव्याख्यातृत्वं प्रसिद्धमेव। एवं च नैयायिकाः शैवाः, वैशेषिकाः पाशुपता इति भेदप्रदर्शने न किमपि प्रमाणमुपलभ्यते। "इदं मया यथाश्रुतं यथादृष्टं चात्राभिदधे" इत्युक्तवता गुणरत्नेन प्रमाणाभावोऽनुमोदित एव। वस्तुतस्तु पाशुपतमतवदीश्वरस्य निमित्तकारणत्वं मोक्षस्य दुःखाभावमात्रत्वं चाभ्युपगच्छन्तौ नैयायिकवैशेषिकौ नातीव भिन्नौ। अत एव तयोः समानतन्त्रत्वं प्रसिद्धम्॥

## द्विविधः शिवागमः

शिवपुराण एवान्यत्र[1] द्विविधः शिवागमः प्रदर्शितः—श्रौतः, स्वतन्त्रश्चेति। तत्र स्वतन्त्रः शैवागमो दशधा अष्टादशधा[2] च विभक्तः कामिकादिसमाख्याभिः परिचीयते। स्वतन्त्रोऽयं शैवागमः सिद्धान्तपद-वाच्यः। "सिद्धान्तशब्दश्च पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः" (पृ० ५) इति हि उक्तमघोर-शिवाचार्येण रत्नत्रयोल्लेखिन्याम्। श्रौतस्तु शतकोटिप्रविस्तरः, यत्र पाशु-पतं व्रतं ज्ञानं चोच्यते। स च पञ्चविधः। क्रियातपोजपध्यानदानात्मकानि पञ्च पर्वाणि सन्ति तत्र। तदिदं शास्त्रं चत्वार ऋषयः संक्षिप्योपदिशन्ति रुरु-दधीचि-अगस्त्य-उपमन्युनामानः। अत्र हि चर्याद्यात्मा चतुर्विधो धर्म उच्यते। तद्यथा—

ज्ञानं क्रिया च चर्या च योगश्चेति चतुर्विधः।
चतुष्पादः समाख्यातो मम धर्मः सनातनः॥

पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते।
षडध्वशुद्धिविधिना गुर्वधीना क्रियोच्यते॥

वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च।
ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते॥

मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः।
वृत्त्यन्तरनिरोधो हि योग इत्यभिधीयते॥[3] इति।

सोऽयं चतुर्विधो धर्मो धौम्याग्रजेनोपमन्युना श्रीकृष्णायोपदिष्टोऽत्र वायुसंहिताया उत्तरभागे संगृहीतो दृश्यते। अत्र प्रतिपादितश्चतुर्विधो धर्मो

१. द्रष्टव्यः—वायुसंहितायाः पूर्वखण्डस्य द्वात्रिंशत्तमोऽध्यायः।

२. शिवपुराणे एतेषां नामानि कुत्रापि न दृश्यन्ते। अन्यत्रेत्थं ते वर्णिताः—कामिक-योगज-चिन्त्य-मौकुट-अंशुमत्-दीप्त-कारण-अजित-सूक्ष्म-सहस्रा दश, विजय-निःश्वास-मद्गीत-पारमेश्वर-मुखबिम्ब-सिद्ध-सन्तान-नारसिंह-चन्द्रांशु-वीरभद्र-आग्नेय-स्वायम्भुव-विसर-रौरव-विमल-किरण-ललित-शौरभेया अष्टादश। अङ्गोपाङ्गभेदेन २०७ इमे आगमा भवन्ति। एतेषां नामानि पाण्डिचेरीतः प्रकाशिते रौरवागमे द्रष्टव्यानि।

३. द्रष्टव्यम्—शिवपुराणम्, ७ उ०।१०।३०-३३

यद्यपि पाशुपतशास्त्रप्रतिपाद्यत्वेन प्रदर्शितः, तथापि स श्रौतज्ञानापेक्षया स्वतन्त्रं सिद्धान्ताख्यं शैवागममेव बाहुल्येनाऽनुसरति, न तु पाशुपतसूत्रं राशीकरभाष्यं गणकारिकां सर्वदर्शनसंग्रहधृतलकुलीशपाशुपतदर्शनं वा। सिद्धान्ताख्येषु शैवागमेषु केचनोपलभ्यन्ते। ते च सर्वे ज्ञानयोगक्रियाचर्याख्येषु चतुर्षु पादेषु विभक्ताः सन्ति। पाशुपतशास्त्रस्य तु न कोऽप्यागम ईदृशः साम्प्रतं दृश्यते। अत्र स्थाने स्थाने लकुलीशस्य श्वेतादिलकुलीशान्तगुरुपरम्परायाश्चोल्लेखेन वायुसंहिताया उत्तरभागः पाशुपतागमस्यैव सिद्धान्तागमानुसारिणी संहितेति वक्तुं शक्यते। अत्र प्रतिपादितानां सिद्धान्तानां शैवागमप्रतिपादितसिद्धान्तैर्वैषम्यमपि दृश्यते। तच्च यथावसरमग्रे प्रदर्शयिष्यते। वायुसंहितायाः पूर्वभागे स्वतन्त्रः सिद्धान्ताख्यो द्वैतवादी शिवागमः प्रतिपादितः। षष्ठ्यां कैलाशसंहितायां दृश्यतेऽद्वैतदर्शनं शिवसूत्रविरूपाक्षपञ्चाशिकानुसारि। सम्पूर्णे शिवपुराणे स्थाने स्थाने पाशुपतसूत्रप्रतिपादितं पञ्चब्रह्मोपासनं भस्मोद्धूलन-रुद्राक्षधारणादिकं चोपलभ्यते।

## पाशुपतागमप्रामाण्यम्

पाशुपतागमः श्रौत इति पूर्वं प्रतिपादितम्। यद्यपि शङ्कराचार्येण पाशुपतं मतं पाञ्चरात्रमतं च तर्कपादे खण्डितम्, अथापि—

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
आत्मप्रमाणान्येतानि न हातव्यानि हेतुभिः॥

इत्यादिवचनानुगुण्येन स्मृतिकारैरेषां प्रामाण्यं स्थापितम्। "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति" (७ श्लो०) इति हि महिम्नस्तुतिकारेण पुष्पदन्तेनोक्तम्। अत्र विशेषजिज्ञासुभिः पुराणपत्रिकायाः २ भागे १-२ अङ्कयोः डा० वासुदेवशरण-अग्रवालमहोदयानां "षट्कुलीयाः" इति शीर्षको निबन्धः, यामुनाचार्यस्यागमप्रामाण्यम्, भट्टोजीदीक्षितस्य तन्त्राधिकारिनिर्णयः, याज्ञवल्क्यस्मृतेरपरार्ककृता टीका चावलोकनीयाः। पाशुपतसूत्र-कौण्डिन्यभाष्य-पुराणादिप्रतिपादितं पाशुपतं शास्त्रं सर्वथा वैदिकं स्मार्तं चार्थमनुसरति। अत्र पशुपतेर्यजुर्वेदानुसारिणी पूजापद्धतिः, यमनियमानां दार्ढ्येनानुसरणम्, "संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव। अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा॥"(२।१६२) इति मनुवचन-

पालनार्थं [1]क्राथन-स्पन्दन-मन्दनादिक्रियाणामुपदेशो वर्तते। वर्णाश्रम-व्यवस्थाऽप्यत्र दृश्यते। परवर्तिनि काले पाशुपतप्रक्रिया काञ्चन विकृति-मवाप। तत्प्रयुक्तान्येव पाशुपतागमनिन्दावचनानि क्वचन पुराणादिषूप-लभ्यन्ते। सर्वथापि तु न व्यभिचरति प्रामाण्यं पाशुपतागमः। शङ्करा-चार्यणाप्यत्र केषुचिदंशेष्वेवाप्रामाण्यबुद्धिराहिता, न तु सर्वथाऽप्रामाण्य-मुद्घोषितम्। अतः सांख्ययोगन्यायवैशेषिकवत् पाशुपतागमस्य श्रौतस्मार्त-परम्परायामेवान्तर्भावस्तद्वदेव च प्रामाण्यमव्याहतम्।

## योगाचार्याः

[2]विशुद्धमुनिकृते आत्मसमर्पणेऽष्टाविंशतिसंख्याका योगाचार्या निरूपिताः। त इमे—

श्वेतः सुतारो दमनः सुगोत्रः कङ्क एव च।
लोकाक्षिजैगीषव्यौ च तथैव दधिवाहनः॥

ऋषभो मुनिरुग्रश्च चित्रार्थालिश्च गौतमः।
वेदशिरा गोकर्णश्च गुहावास्तिशिखण्डिनौ॥

जटामाली चाट्टहासो दारुको लाङ्गली तथा।
श्वेतः शूल्यथ दण्डी च सहिष्णुः सोमशर्मकः॥

लकुलीशश्चावतारा अष्टाविंशतिसंख्यकाः।

अष्टाविंशतिसंख्याकानामेषां योगाचार्याणां प्रत्येकं चत्वारः शिष्याः श्रूयन्ते। संहृत्य ११२ संख्याकाः शिष्या भवन्ति। सर्वेषामेषां नामानि शिवपुराणे स्थलद्वये दृश्यन्ते। एका नामावली तृतीयायाः शतरुद्रसंहितायाश्चतुर्थे पञ्चमे चाध्याये, अपरा सप्तम्या वायुसंहिताया उत्तरखण्डस्य नवमेऽध्याये चास्ति। तत्र प्रथमा वायुपुराणस्य २३ तमाध्यायानुसारिणी, अपरा च लिङ्गपुराणीयसप्तमाध्यायस्थनामावलीमनुसरति। योगाचार्य-नामावली कूर्मपुराणस्य ५३ तमेऽध्याये, स्कन्दपुराणस्य माहेश्वरखण्डान्त-र्गतकौमारिकाखण्डस्य ४० तमेऽध्यायेऽपि च दृश्यते। अत्र प्रथमेऽन्तिमे च

---

१. "असुप्तस्येव सुप्तलिङ्गदर्शनं क्राथनम्। वाय्वभिभूतस्येव शरीरावय-वानां कम्पनं स्पन्दनम्। उपहतपादेन्द्रियस्येव गमनं मन्दनम्" (गण-कारिकाव्याख्या, पृ० १९)।

२. द्रष्टव्यम्—गणकारिकायां २५ पृष्ठे।

नामनि नास्ति विसंवादः, अन्यत्र त्वेष दृश्यते। अत्रावधातव्यं मनीषिभिः।
[१]कारवणमाहात्म्ये त्वेवं दृश्यते—

आदिकल्पावसाने तु ब्रह्मकल्पे पुरातने।
ब्रह्मणो मानसः पुत्रो अत्रिनामा च विश्रुतः॥
अत्रिस्तु जनयामास आत्रेयं नाम नामतः।
आत्रेयादग्निशर्मापि अग्निशर्मसुतः शुचिः॥
सोमशर्मेति विख्यातो धर्मशीलो जितेन्द्रियः।
सोमशर्मसुतो जातो विश्वरूपो द्विजोत्तमः॥
विश्वरूपादहं जातो बालरूपधरो हरः।

अहं लकुलीश इत्यर्थः। एषा च लकुलीशवंशावली दृश्यते। श्वेतादि-लकुलीशान्तानामष्टाविंशतियोगाचार्याणां नामावली उपर्युद्धृता। लकुली-शादिविद्यागुर्वन्तानामष्टादशावताराणामपरा नामावली गुणरत्नकृतषड्-दर्शनसमुच्चयटीकायामथ च राजशेखरसूरिकृते षड्दर्शनसमुच्चये[२] दृश्यते। सा चेत्थम्—

लकुलीशः, कौशिकः, गार्ग्यः, मैत्र्यः, कौरुषः, ईशानः, पारगार्ग्यः, कपिलाण्डः, मनुष्यकः, (अपर)कुशिकः, अत्रिः, पिङ्गलः (पिङ्गलाक्षः), पुष्पकः, बृहदार्यः (बृहदाचार्यः), अगस्तिः, सन्तानः, राशीकरः, विद्यागुरुश्चेति।

अत्र प्रथमो लकुलीशः पञ्चाध्यायात्मकस्य पाशुपतसूत्रस्य रचयिता, सप्तदशो राशीकरश्च पञ्चाध्यायीभाष्यस्य। अन्येषामाचार्याणां कापि कृतिः साम्प्रतं नोपलभ्यते। अनुभवस्तोत्रकर्ता विद्याधिपतिरभिनवगुप्तेन तन्त्रसारे[३] उद्धृतः। अस्य द्वित्राः श्लोका अपि काश्मीरशैवदर्शनग्रन्थे-षूद्धृताः सन्ति। विद्यागुर्विद्याधिपतितो भिन्नोऽभिन्नो वेत्यधुना वक्तुं न शक्यते॥

—:०:—

१. द्रष्टव्यम्—गणकारिकायां ५१ पृष्ठे।
२. द्रष्टव्यम्—गणकारिकायां २९, ३५ पृष्ठयोः।
३. द्रष्टव्यम्—पृ० ३१।

## मा नाम नैराश्यं वहन्ताम्

वाराणसेय-संस्कृत-विश्वविद्यालये समायोजितस्य तन्त्रसम्मेलन-स्यान्तिमे दिवसे उत्तरप्रदेशराज्यपालेन महामान्येन श्रीविश्वनाथदास-महोदयेन स्वकीये उपसंहारभाषणे पञ्चदशक्षणावधि तन्त्रसम्मेलन-मुद्दिश्य स्वकीयं नैराश्यं व्यक्तीकृतम्। यादृशेनोत्साहेन यत्फलकामनया च तैरेतत् सम्मेलनमायोजितम्, शुकोपदेशप्रायान् निबन्धान् त्रीणि दिनानि यावत् श्रावं श्रावं शिरोवेदनामनुभवद्भिर्निष्फलतैव तस्यानुभूता स्यात्। किमत्र कारणम्? अस्मिन् सम्मेलने चत्वारि दिनानि यावद् राज्यपाल-महोदयेन यद् यदुक्तं तेनेदं ज्ञायते यत्तन्त्रशास्त्रस्य सैद्धान्तिकेनाध्ययनेन सह प्रायोगिकं फलमपि तस्याभिलषन्ति ते। पुराणानि भारतीयज्ञानस्य विश्वकोश इति परिगण्यन्ते। तथैव तन्त्रशास्त्राणि भारतीयविज्ञानस्य विश्वकोशभूतानीति सत्यं सत्वरमेव सुधीभिर्भारतीयैः स्वीकर्तव्यम्। सैद्धान्तिकमध्ययनं ज्ञानस्यैव वरम्, विज्ञानस्य तु प्रायोगिकेण अध्ययनेनैव प्राधान्येन भवितव्यम्। मारणमोहनोच्चाटनादीनि षट्कर्माणि, तन्त्रशा-स्त्रस्य मुख्या विषयाः। सहैवात्र विषप्रतीकारोपायाः, नानाकार्यसम्पादका गुटिकाञ्जनप्रभृतयः, अभिचारादिप्रयोगाश्च दृश्यन्ते। प्रायोगिकाणामेषां विषयाणामपि वागाडम्बरमात्रेण वर्णनं कस्य नाम वैरस्याय न भवेत्?

राज्यपालमहोदयेन स्वकीये उपसंहारभाषणे प्राचीने भारते निर्मि-तानां बृहदाकाराणां मन्दिराणां लोहस्तम्भादीनां च निर्मितिश्चर्चिता। केन नाम विज्ञानेन तत्सम्पन्नम्, यत्राधुनिका वैज्ञानिका अपि चकित-चकिता इव दृश्यन्ते। अशोककालिकानां स्तम्भादीनां गुहाभित्तीनां च पाषाणानां मसृणता, लोहस्तम्भादीनां वातातपवर्षास्वपि सहस्रवर्षाणि यावद्विकृतिमलभमानानां निर्माणम्, अजन्ताभित्तिचित्रेषु समुप-युक्तानां वर्णानाम्, तत्रत्यचित्राधारप्रस्तरेषु उपलिप्तानां लेपानाम्, एवमादिकानां चान्येषामप्याश्चर्यजनकानां कार्याणां निष्पत्तिर्येन नाम विज्ञानेन सम्पन्ना तद्विज्ञानं तन्त्रशास्त्रान्तर्गतमेव मन्यन्ते राज्यपाल-महोदयाः। अस्यैव विज्ञानस्य पुनरुज्जीवनं कामयन्ते ते। अत्र तान्त्रिका विद्वांसो न किमपि साहाय्यं कर्तुं क्षमा इत्येव तेषां नैराश्यस्य मुख्यं कारणम्।

तन्त्रशास्त्रस्य संरक्षणाय अनुपलब्धवाङ्मयस्यान्वेषणम्, उपलब्धस्य च साहित्यस्य प्रकाशनं प्रथमा इतिकर्तव्यता। प्रथमस्यास्य तन्त्र-सम्मेलनस्योपयोगोऽस्याः प्रथमाया आवश्यकतायाः पूर्त्यै सञ्जातः। एतदेवाभिलषितमासीदत्रत्यानां सम्मेलनायोजकानाम्। तदर्थमेव तैर्विस्तृता निबन्धनामावली विद्वद्भ्यः प्रेषिता, निबन्धप्रेषणाय अत्रागत्य पठनाय च ते आहूताः। अतीव विस्तृतं खलु तान्त्रिकं वाङ्मयम्। नानासम्प्रदायेषु विभक्तस्य तस्य विशालस्य वाङ्मयस्य तान्त्रिक्याः संस्कृतेश्च परिचयार्थमेवात्र प्रदर्शनी समायोज्यत।

व्याकरणाध्यापनेऽपि किमपि रहस्यं स्वकीयाय योग्याय शिष्यायैव दीयते विद्वद्भिः। सरहस्यं शाङ्करभाष्यं न यस्मै कस्मैचन अध्याप्यते। साधारणी अञ्जननिर्माणपद्धतिरपि सर्वथा गोप्यते। का नाम कथा तर्हि तन्त्ररहस्यानां स्फोरणस्य। अथापि प्राचीनानि सर्वाणि विज्ञानानि रहस्यावृतानि साम्प्रतमपि सन्तीति दुराशामात्रम्। तानि बाहुल्येन काल-कवलितानि सञ्जातानि। सत्यमेतत्। तथापि नहि सर्वं रहस्यमेकत्र स्थापनीयम्, न च सर्वथा गोप्यमिति दिशा शास्त्रेष्वनेकानि रहस्यानि साम्प्रतमपि विकीर्णान्युपलभ्येरन्। आध्यात्मिकानां रहस्यानामान्तर-यागसम्बन्धिनां मा नाम भवतु सार्वजनिकमुद्घाटनम्, अत्रत्यानां भौति-कानां वैज्ञानिकानां विषयाणां तु प्रायोगिकमध्ययनं नितरामपेक्षितम्। वृक्षेभ्य औषधिभ्यो मन्त्रेभ्यो यन्त्रेभ्योऽन्येभ्यश्च नानासाधनेभ्यो निश्चि-तेषु नक्षत्रयोगादिषु समुपलब्धेभ्यो विषोपचारप्रभृतीनि नानाकार्याणि साध्यन्ते। निश्चितेषु नक्षत्रयोगादिषु समुपलब्धानामोषधीनां महिमा आयु-र्वेदेऽपि श्रूयते। अगदतन्त्रं तन्त्रशास्त्रेण संयोजितं सत् सर्वाङ्गपूर्णं स्यात्।

तान्त्रिकैः प्रयोगैर्योगाभ्यासेन च अणिमाद्यष्टसिद्धीनामुपलब्धिः श्रूयते। किमत्र तत्त्वमिति रहस्यावृतमास्ते। रसेश्वरदर्शनादिषु सन्ति रासायनिकाः प्रयोगा आयुषोऽभिवृद्ध्यर्थम्। "सम्मानाद् ब्राह्मणो नित्य-मुद्विजेत विषादिव" इति मनुवचनं मानयन्तस्तदभिज्ञास्तान्त्रिकयोगिनो रासायनिका वा न सर्वजनीनां ख्यातिमात्मनः कामयन्ते। पाशुपतैस्तु स्वं प्रति वैरस्योत्पादनार्थं क्राथन-स्पन्दन-मन्दनादयोऽप्युपयुज्यन्ते। अस्यां स्थितौ के नामाभिज्ञाः सन्तोऽपि प्रसिद्धिं न कामयन्ते, के चानधिकारिणोऽपि रहस्यावरणे स्वकीयमज्ञानं छादयन्तो वृथा पाण्डित्यं प्रदर्शयन्तीत्ययं विवेकोऽतीव दुःशकः। तान्त्रिकस्य विज्ञानस्य विकासाय पदे विधीयमाने

एष विवेक एव प्रथमतयाऽपेक्षितः। अधुना तान्त्रिका बाहुल्येन ऐन्द्रजालिका एव दृश्यन्ते। विज्ञानस्य, विकासाय ते न किमपि कर्तुं पारयन्ति। अन्ये सन्ति तान्त्रिकविधिना उपासनामाचरन्तः साम्प्रदायिकाः। ते स्वसम्प्रदायपद्धत्या इष्टदेवतामाराधयन्ति। तेऽप्यस्मिन् प्रसङ्गे किमपि कर्तुमक्षमाः। अन्ये सन्ति तान्त्रिकैः प्रयोगैः स्वजीविकोपायांश्चिन्तयन्तस्तन्त्रविज्ञानस्य प्रयोक्तारः। एतेषु विद्वत्त्वं प्रायेण नैव प्रतिष्ठितम्। जीविकोच्छेदभिया चैते न किमपि रहस्यं प्रकटयेयुः। अस्यां स्थितौ कथं नाम प्रायोगिकं साफल्यं तन्त्रसम्मेलनस्य आशास्येत।

तान्त्रिकं विज्ञानमपि जगतः कल्याणाय कल्पते, नहि तत्र कोऽप्युपयोगोऽनैतिक्या पञ्चमकारोपासनायाः। आध्यात्मिका विषया रहस्यावृतास्तिष्ठन्तु नाम, तत्रत्यस्य भौतिकस्य विज्ञानस्य तु सार्वजनिक उपयोगोऽवश्यं विधातव्यः। तदर्थं निधानवद् गोपितानामद्याप्यप्रकाशितानां वैज्ञानिकानां ग्रन्थानां प्रकाशनं सत्वरमेव क्रियेत, नानाविधकार्यसम्पत्तये तत्र प्रतिपादितानामुपायानां प्रायोगिकमध्ययनं चावश्यमेव कर्तव्यमित्यादयो निर्णया अपि यदि प्रथमेनानेन सम्मेलनेन तदायोजकैश्च कृताः स्युस्तर्हि साफल्यमेवास्य सम्मेलनस्य मन्तव्यम्। विशालस्य भारतस्य विभिन्नेभ्यः प्रान्तेभ्योऽशीतिपरिमिता विद्वांसोऽत्र समागताः। अत्रागत्य तैः किमुपलब्धं किं वा कृतमिति ते विचारयिष्यन्ति। तन्त्रशास्त्रस्य कोऽपि सामाजिक उपयोगो वर्तते न वेति, तेऽन्ये च तत्परिवेशिनश्चिन्तयिष्यन्ति। तन्त्रशास्त्रमन्याश्चोपेक्षिता भारतीया विद्याः साम्प्रतं पुनरुज्जीविताः स्युरित्याशायाः संचारश्च तेषु भविष्यतीति किमल्पा सैषोपलब्धिः?

भारतीये ज्योतिर्विज्ञाने, चिकित्साविज्ञाने, तन्त्रविज्ञाने, शिल्पविज्ञानादिषु च पाश्चात्त्यविज्ञानापेक्षया कानि तत्त्वानि महत्त्वाधायकानि प्रायोगिकमध्ययनमपेक्षन्त इति गभीरस्यास्य विषयस्य निर्णयो न कस्यापि सम्मेलनस्य विषयः। अत्र किमपि निश्चेतुं प्रतिभाशालिनो विद्वांस एव क्षमाः। तन्त्रशास्त्रस्य भारतीयाया राजनीतेश्चाध्ययनाय प्रशासनेन वाराणसेयसंस्कृतविश्वविद्यालये कापि योजना प्रवर्तिता। एवमेव ज्योतिर्विज्ञान-चिकित्साविज्ञान-शिल्पविज्ञानादीनां लुप्तप्रायाणां भारतीयानां विज्ञानानां पुनरुद्धाराय प्रयत्येत चेत्, शनैः शनैरेषां भारतीयानां विज्ञानानां सम्भूयसमुत्थानं स्यात्॥

—:०:—

# कालवदनः कालदमनो वा ?

वामनपुराणस्य षष्ठाध्यायस्य ८६-९१ श्लोकेषु हरार्चकानां चत्वारो भेदाः प्रदर्शिताः। तत्र तृतीयः कालवदनाख्यः। एवं वर्तते तत्रत्यः सन्दर्भः[1]—

ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्चने।
शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च॥

आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने।
तृतीयं कालवदनं चतुर्थं च कपालिकम्॥

शैवस्त्वासीत् स्वयं शक्तिर्वसिष्ठस्य प्रियः सुतः।
तस्य शिष्यो वभूवाथ गोपायन इति श्रुतः॥
महापाशुपतस्त्वासीद् भारद्वाजस्तपोधनः।
तस्य शिष्योऽप्यभूद् राजा ऋषभः सोमकेश्वरः॥
कालास्यो भगवानासीदापस्तम्बस्तपोधनः।
तस्य शिष्योऽभवद्वैश्यो नाम्ना क्राथेश्वरो मुने॥
महाव्रती च धनदस्तस्य शिष्यश्च वीर्यवान्।
ऊर्णोदर इति ख्यातो जात्या शूद्रो महातपाः॥ (८६-९१).

अत्र प्रथमं प्रथमश्लोकस्थं चातुर्वर्ण्यपदं कर्षति मनांसि नः। चत्वारो वर्णाः सुपरिचिता आबालगोपालं भारते वर्षे। चतुर्णां वर्णानामत्र प्रतिपादितैश्चतुर्भिर्मतैः सह यथाक्रममन्वये कृते ब्राह्मणः शैवमतेन, क्षत्रियः पाशुपतमतेन, वैश्यः कालास्यमतेन, शूद्रः कापालिकमतेन शिवं पूजयतीत्यायाति। एवमेवात्राग्रिमेषु श्लोकेषु स्पष्टमेव प्रतिपादितम्। चतुर्णामेषां मतानां चातुर्वर्ण्येन सह यथाक्रममत्र प्रदर्शितरीत्यैवान्वयः सामस्त्येन वेत्यत्रैतिहासिकानि प्रमाणान्यन्वेषणीयानि। तान्त्रिक्यां संस्कृतौ वर्णाश्रमव्यवस्था न तथा दार्ढ्येन पालिता, यथा हि वैदिक्याम्। पुराणानि प्राधान्येन वैदिकीमेव संस्कृतिमनुसरन्ति, अथापि तान्त्रिक्या संस्कृत्या सह वैदिक्याः संस्कृतेः समन्वयमपि समुपस्थापयन्ति। अत्र चतुर्षु शैवमतेषु चातुर्वर्ण्यस्य सम्बन्धः समन्वयपद्धतेरेव महिमा प्रतीयते।

१. काशीराजन्याससंस्थायां संकलितानां पाठानामाधारेणास्य सन्दर्भस्य परिष्कृतः पाठोऽत्र स्थापितः।

तदनु कालवदनशब्दः परीक्ष्यताकोटिमाटीकते । अत्र मुद्रिते वामनपुराणपुस्तके कालदमन इति पाठो वर्तते। काशीराजन्याससंस्थायां संगृहीतासु सप्तदशमातृकासु पञ्चदशमातृकाः कालवदन इत्येव पाठं धारयन्ति । स एव शुद्धः पाठः । अत्र न केवलं मातृकाबाहुल्यदर्शनं हेतुः, अपि त्वन्यान्यपि प्रमाणानि तदुपोद्बलकानि दृश्यन्ते । तथाहि—वामनपुराण एवान्यत्र (६७।१०–१३) शैवाः, पाशुपताः, कालमुखाः, महाव्रतिनश्चेति चत्वारो भेदाः प्रदर्शिताः । अत्र वदनशब्दस्य स्थाने तत्पर्यायो मुखशब्दः प्रयुक्तः। उपर्युद्धृते चतुर्थे श्लोकेऽपि चतुर्णां मतानां प्रवर्तकानां तच्छिष्याणां च नामसु 'कालास्य' इति नाम तृतीयसम्प्रदायप्रवर्तकस्यास्ते । आस्यशब्दोऽपि वदनपर्याय एव । कालमुखा एव यामुनाचार्यविरचिते आगमप्रामाण्ये ( पृ० ४७ ) कालामुखशब्देनोक्ताः । एवं च कालवदन इति, कालास्य इति, कालमुख इति, कालामुख इति चैकस्यैव मतस्य बोधकानि पदानीति मन्तव्यम् । कालदमन इति पाठस्तु लेखकप्रमादपतितः प्रतिभाति ।

तृतीयोऽयमत्र विषयः परामर्शपदवीमानेतव्यो यच्चतुर्थमतप्रवर्तकस्य धनदस्य महाव्रतीति विशेषणं किं सूचयतीति । एतत्साधयति यत् कापालिका एव महाव्रतिनः । वामनपुराण एवान्यत्र (६७।१०–१३) महाव्रतिन एव सूचिताश्चतुर्थस्य कापालिकमतस्य पर्यायत्वेन। महाशङ्खमाला-महापात्र-महाप्रसादप्रभृतीनां पदार्थानामुपयोक्तारः कापालिका एव सत्यं महाव्रतिनः प्रतीयन्ते । एवं च—"शैवा महाव्रतधराः शैवा कापालिकाः परे" (७ उ०। ३१।१७३) इति शिवपुराणेऽनयोः पृथक्त्वेन निर्देशः कथं नाम संगच्छेत ?

अन्ते चेदमत्र विमृशामो यदत्रोद्धृतेष्वन्तिमानां चतुर्णां श्लोकानां पूर्वार्धेषु तत्तन्मतप्रवर्तकानामाचार्याणाम्, उत्तरार्धेषु च तेषां प्रथमस्य शिष्यस्य नाम स्थापितम् । तत्र पूर्वार्धेषु प्रतिपादिता आचार्या ऋषयः प्रतीयन्ते, उत्तरार्धेषु चैतिहासिक्यो व्यक्तयः । इमे एव वस्तुतोऽमीषां मतानां प्रवर्तकाः स्युः । तत्र ऋषभ इत्यस्य स्थाने ऋषय इति, क्राथेश्वर इत्यस्य कापालिक इति, ऊर्णोदर इत्यस्य स्थाने अर्णोदर इति दृश्यते । किमेषां वास्तविकं नाम ? कदा कस्मिन् वा प्रदेशे इमे प्रादुर्भूताः ? कीदृशी शिष्यपरम्परा? मतवादश्च कीदृशः?इत्यादयः प्रश्नाः स्वं समाधानमपेक्षन्ते।।

—:०:—

# त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च

## कौलमार्गप्रवर्तकस्य मत्स्येन्द्रनाथस्य स्थितिकालः

द्वैतवादिशैवसिद्धान्तमतावलम्बिना खीष्टद्वादशशताब्दीभवेन श्रीमताऽघोरशिवाचार्येण मृगेन्द्रवृत्तिदीपिकायां विद्यापादे—"हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेद-सांख्य-कौलादितन्त्राणाम्" ( पृ० ७४ ) इत्याचार्योक्त्या मत्स्येन्द्रनाथः कौलमार्गप्रवर्तकः प्रथम आचार्य इति प्रतिपादितम्। खीष्टदशमशताब्दीभवोऽभिनवगुप्ताचार्योऽपि तन्त्रालोकप्रथमाह्निकसप्तमपद्ये सकलकुलशास्त्रावतारकतया प्रसिद्धं मच्छन्दविभुं स्तौति। सोऽयं मत्स्येन्द्रनाथः स्वजनुषा भारतभुवं कस्मिन् काले समलञ्चकारेति न साम्प्रतं निश्चप्रचं वक्तुं पारयामः। [1]डा० प्रबोधचन्द्रबागचीमहोदयस्तदनुयायिनश्च बहवस्तं खीष्टनवमदशमशताब्दीभवं मन्यन्ते। [2]डा० कान्तिचन्द्रपाण्डेयमहोदयस्तु तं खीष्टपञ्चमशताब्दीभवं साधयति। कामरूपक्षेत्रं तस्य लीलाभूमिरित्यत्र नूनं केषामपि वैमत्यम्। आर्यमञ्जुश्रीमूलकल्प उपलब्धबौद्धतन्त्रग्रन्थेषु प्राचीनतम इत्यङ्गीक्रियते। तत्र [3]शैवानि वैष्णवानि च तन्त्राण्युल्लिखितानि। शाक्तानि तन्त्राणि, कुलशब्दादयः, कौलिकी प्रक्रिया चात्र न दृश्यन्ते। तथागतगुह्यकतन्त्रं (गुह्यसमाजतन्त्रं) पञ्चम्यां षष्ठ्यां सप्तम्यां वा ई० शताब्द्यां प्रादुर्भूतमित्यत्रैतिहासिकानां वैमत्यं वर्तते। अत्र कुलशब्दस्य कौलिकप्रक्रियायाश्च बाहुल्येन चर्चा दृश्यते। पूर्वोक्तप्रमाणेन कौलसम्प्रदायस्य प्रवर्तयिता मत्स्येन्द्रः स्वीक्रियते चेत्, तथागतगुह्यकप्रादुर्भावतः पूर्वमेव तस्य समयोऽङ्गीकर्तव्यः। एवं च डा० कान्तिचन्द्रपाण्डेयमहोदयैः साधितस्तस्य समयो नैवार्तिविगुणतां भजेत।

---

१. डॉ० बागचीसम्पादितस्य कलकत्ता-संस्कृत-ग्रन्थमालायां प्रकाशितस्य कौलज्ञाननिर्णयस्य भूमिका द्रष्टव्या, पृ० २५-२८

२. द्रष्टव्यम्—डा० पाण्डेयविरचितायाः 'अभिनवगुप्त' इत्याख्यायाः कृतेर्द्वितीयं संस्करणम्, पृ० ५४६

३. त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशितस्यास्य ग्रन्थस्य प्रथमे भागे ३४ तमे पृष्ठे द्रष्टव्यम्।

**कौलमार्गप्रचारः**

मत्स्येन्द्रनाथेन स्वोपज्ञातं ज्ञानं षट्सु राजपुत्रेषु वितीर्णम्[1]। तच्च ज्ञानं ततः षट्सु ओवल्लीषु प्रववृत इति—

आनन्दावलिबोधिप्रभुपादान्ताश्च योगिशब्दान्ताः।
एता ओवल्ल्यः स्युः.... .... .... .... ....॥
(२९।३६)

अस्मात् तन्त्रालोकवचनाज्ज्ञायते। 'ओवल्ली' इति ज्ञानप्रवाह इत्यर्थे प्रयुज्यते। मत्स्येन्द्रनाथेन षट्सु राजपुत्रेषु यज्ज्ञानं वितीर्णं तदेतासु षट्सु ओवल्लीषु प्रवहदासीत्। आनन्दादियोगिशब्दान्तान् पदान् स्वनाम्नोऽन्ते धारयद्भिः षड्राजपुत्राणां शिष्यप्रशिष्यैः स प्रवाहः प्रवर्धित इति तदर्थः प्रतीयते। एतेषु [2]नागबोध्यादयः सिद्धा बौद्धतन्त्रस्य तथागतगुह्यकस्य व्याख्यातारः सन्ति। बौद्धानां कौलानां च तन्त्रेषु देवताभेदमपहायान्येषु क्रियाकलापेषु प्रायः सामञ्जस्यं दृश्यते। अनेनास्य ज्ञानस्योपज्ञास्थलमेकमेवेति कल्पयितुं शक्यते। किमेतज्ज्ञानं मत्स्येन्द्रनाथेन तदुत्तराधिकारिभिश्च सदूतोकैः षड्राजपुत्रैर्बौद्धेषु शैवेषु शाक्तेषु च शिष्यप्रशिष्येषु प्रवर्तितम्? प्रश्नोऽयं स्वं समाधानमपेक्षते विद्वद्भ्यः।

**शैवशाक्तागमप्रादुर्भावः**

श्रीमताऽभिनवगुप्तेन तन्त्रालोके गुरुनिरूपितः शैवागमस्यायातिक्रम इत्थमुपदिष्टः—

तेषां क्रमेण तन्मध्ये भ्रष्टं कालान्तराद् यदा।
तदा श्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन्॥
त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये।
द्वयाद्वये च निपुणाः क्रमेण शिवशासने॥
आद्यस्य चान्वयो जज्ञे द्वितीयो दुहितृक्रमात्।
स चार्धत्र्यम्बकाभिख्यः सन्तानः सुप्रतिष्ठितः॥
अतश्चार्धचतस्रोऽत्र मठिकाः सन्ततिक्रमात्।
शिष्यप्रशिष्यैर्विस्तीर्णाः शतशाखं व्यवस्थितैः॥
(३६।११-१४)

---

१. उदीच्यां श्रीमच्छन्दवुङ्कुणाम्बादिसाधिकारराजपुत्रषट्कं सदूतीकमिति.... कुलाम्नायदर्शनशब्दार्थः" (१२।१) इति नेत्रतन्त्रोद्योते वदन् क्षेमराजोऽप्येनमेवार्थं साधयति।

२. द्रष्टव्या—तथागतगुह्यकस्य गायकवाड-संस्कृत-ग्रन्थमालायां प्रकाशितस्य भूमिका, पृ० ३१

"अर्धचतस्र इत्यर्धेन चतस्रः सार्धास्तिस्र इत्यर्थः" इति तत्र व्याख्याति जयरथः। दुहितुरर्धत्र्यम्बकाभिख्यार्धैव मठिका कल्पितेति भावः। अत्र त्र्यम्बकेन श्रीनाथेन च स्वस्वमठिका कुत्र स्थापितेति न ज्ञायते। "निःशेषशास्त्रसदनं किल मध्यदेशः" [1]इत्यभिनवगुप्तोक्तिप्रामाण्येन मध्यदेशे तयोः स्थितिः कल्पनीया। आमर्दकतीर्थं साम्प्रतिके मध्यप्रदेशे ग्वालियरनगरसमीपे वर्तते। तत्रैवामर्दकाचार्येण स्वमठिका स्थापिता भवेत्। कवचशिव-सदाशिव-हृदयशिव-[2]व्योमशिवादीनामनेकेषां शैवद्वैताचार्याणां जनिना पूतमेतत्तीर्थम्। अत्रत्यः [3]कुमारशिवाचार्यो गुर्जरदेशाधिपतेर्मूलराजस्य गुरुरासीत्। ततः प्रभृति शैवदर्शनं तत्र प्रववृते। अत्रत्यैरेव शैवाचार्यैर्मालवदेशेऽपि शैवदर्शनप्रचारः कृतः। स्वयं भोजराजोऽपि तत्त्वप्रकाशनामानं द्वैतशैवदर्शनग्रन्थं जग्रन्थ। अत्रत्या आचार्याः कश्मीरदेशाधिपतिभिराहूतास्तत्र द्वैत-द्वैताद्वैत-अद्वैतशैवसिद्धान्तान् प्रचारयामासुः। द्वैतशैवागमव्याख्यातारो नारायणकण्ठ-रामकण्ठप्रभृतयः काश्मीरा एव। एतेषां पूर्वजा मध्यदेशत एव तत्र गताः स्युः। अधुना तु दशाष्टादशभेदभिन्ना द्वैत-द्वैताद्वैतशैवागमा उपाङ्गव्याख्योपव्याख्यानप्रकरणग्रन्थसहिताः केवलं दक्षिणभारते कर्णाटकप्रदेशे गुरुशिष्यपरम्परया सुरक्षिताः सन्ति।

अद्वैतशैवदर्शनप्रवर्तयिता त्र्यम्बकः (त्र्यम्बकादित्यः) त्र्यम्बकाख्यगुहायामुषित्वा चतुर्दश मानसान् पुत्रान् ससर्ज। सर्व एवैते विरक्ता न सांसारिकाणि कृत्यानि सम्पादयामासुः। पञ्चदशः पुत्रस्तु गृहस्थाश्रममङ्गीचकार काश्मीरांश्च जगाम। सोऽयमासीत् सङ्गमादित्यनामा। सङ्गमादित्यस्य पुत्रो वर्षादित्यः, तत्पुत्रोऽरुणादित्यः, तत्पुत्रश्च आनन्दसंज्ञको बभूव। अस्यैव पुत्रः सोमानन्द इति सोमानन्दकृतशिवदृष्टिसमाप्तिस्थैः पद्यैर्ज्ञायते।

अभिनवगुप्ताचार्यस्य पूर्वजोऽत्रिगुप्तो [4]मध्यदेशत एव कश्मीरान् जगाम। अभिनवगुप्त [5]आनन्द(आमर्दक)सन्ततिजादेरकवरात्मजवाम-

१. तन्त्रालोके, ३७।३८

२. एष व्योमशिव एव प्रशस्तपादभाष्यस्य व्याख्याता स्यात्।

३. त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशिताया ईशानशिवगुरुदेवपद्धतेर्द्वितीयभागभूमिका द्रष्टव्या।

४. तन्त्रालोके, ३७।३८

५. तन्त्रालोके, ३७।६०–६१

नाथाद् द्वैतशैवदर्शनम्, श्रीनाथसन्ततिजाद् भूतिराजतनयाद् द्वैताद्वैतशैव-दर्शनम्, त्र्यम्बकसन्ततिप्रसराल्लक्ष्मणगुप्तादद्वैतशैवदर्शनम्, अर्धत्र्यम्बक-सन्ततिभवाच्छम्भुनाथात् कौलदर्शनं चाधीत्य स्वकीयं तन्त्रालोकं रचयामास। कौलदर्शनं मत्स्येन्द्रनाथेन कामरूपे प्रवर्तितम्। अर्धत्र्यम्बक-मठिका त्र्यम्बकादित्यदुहित्रा कामरूपपीठ एव स्थापिता स्यात्। तस्या-मेव परम्परायां शम्भुनाथः संबभूव, यो हि अभिनवगुप्तं कौलदर्शनं क्रमदर्शनं चाशिक्षयत्। कालीमम्बिकां वा परतत्त्वं साधयत् क्रमदर्शनं

---

१. वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥ इति,
वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित्।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः॥

इति चाभिनवगुप्तरचितायां परात्रीशिकाविवृतौ (पृ० ९२) दृश्यते। अत्र कुल-कौल-मत-त्रिकदर्शनान्युल्लिखितानि, किन्तु क्रमदर्शनं न दृश्यते। क्रमस्तोत्रे क्रमकेलिनाम्नी टीका अभिनवगुप्तपादेन रचिता। क्रमसद्भाव-पञ्चशतिकाप्रभृतयो ग्रन्थाः शिवानन्दनिष्क्रियानन्दनाथादय आचार्याश्च तन्त्रालोके तट्टीकायां च जयरथरचितायां दृश्यन्ते। चिद्गगनचन्द्रिका-महार्थमञ्जरी-महानयप्रकाशप्रभृतयो ग्रन्थाः क्रमदर्शनस्यैव। कुलत्रिकादि-शैवदर्शनेभ्यः शाक्तस्य क्रमदर्शनस्य वैशिष्ट्यं च स्पष्टमेवावलोक्यते यत् तत्र काली अम्बिका वा परं तत्त्वम्, न तु कौल-त्रिकदर्शनवच्छिवस्य शक्तिः। अत्रत्या आकरग्रन्था देव्या देवायोपदिष्टाः, न तु कौल-त्रिकदर्शनवद् देवेन देव्यै। भट्टप्रद्युम्नरचितस्य तत्त्वगर्भस्तोत्रस्यात्रैवोद्धृते श्लोकेऽम्बिकैव प्रथमं स्तुता। एतच्च मतं सोमानन्देन खण्डितम्। एतदपि स्तोत्रं क्रमदर्शनस्यैव भवेत्।

कौलदर्शनं त्रिकदर्शनं च प्रसिद्धमेव। अनयोर्मध्यमस्थानीयस्य मतदर्शनस्य विषये तद्वैशिष्ट्यविषये च नाधिकं किमपि ज्ञायते। सिद्धामत(सिद्ध-योगीश्वरीमत)श्रीमतप्रभृतयो ग्रन्थाः काश्मीरागमग्रन्थेषूद्धृता दृश्यन्ते। वामकेश्वरतन्त्रे चतुःषष्टितन्त्रनामप्रस्तावे कुब्जिकामत-महापिचुमत-महा-लक्ष्मीमत- कुरूपिकामत- रूपिकामत- सर्ववीरमत- विमलामत- प्रभृतीनि नामानि दृश्यन्ते। किमेतानि मततन्त्राणि? शिवानन्देन शम्भ्वैक्यनिर्णय-दीपिकामङ्गलाचरणश्लोकेषु ग्रन्थ एष मतसम्प्रदायस्येत्युक्तम्। कौल-क्रम-त्रिकदर्शनेभ्यो मतदर्शनस्य किं नाम वैशिष्ट्यमित्यधुना परीक्षणीयं वर्तते।

स्पष्टमेव शाक्तं दर्शनम्। दशमहाविद्योपासनाप्रवर्तकं कौलदर्शनमपि शाक्तदर्शनान्तर्गतमेवाङ्गीक्रियते। एवं च शाक्तागमस्थलं कामरूपपीठमेवाङ्गीकर्तव्यम्। शाक्तागमे कामरूप-पूर्णगिरि-जालन्धर-उड्डियानाख्यानि चत्वारि पीठानि सुप्रसिद्धानि। भगवत्यास्त्रिपुरसुन्दर्या उपासना कदा कस्मिन् वा प्रदेशे प्रारब्धा ? प्रश्नस्यास्य समाधानायाधुना प्रमाणान्यन्वेषणीयानि। तदत्र किञ्चित् प्रयत्यते।

## त्रिपुरोपास्तिः कदा कस्मिन् वा प्रदेशे प्रवृत्ता ?

महार्थमञ्जरीकारस्य महेश्वरानन्दस्य परमगुरुः शिवानन्दो नित्याषोडशिकार्णवस्य टीकायामृजुविमर्शिन्याम्—"सम्प्रदायस्य काश्मीरोद्भूतत्वात्" इत्येवं त्रैपुरदर्शनोद्भवस्थलं कश्मीरमङ्गीकरोति। दाक्षिणात्यानां त्रैपुरसम्प्रदायानुयायिनामेषामाचार्याणां रचनासु कश्मीरदर्शनप्रभावः स्पष्टमवलोक्यते। कश्मीरोद्भवस्तन्त्रालोकव्याख्याता जयरथो [1]वामकेश्वरीमतव्याख्यायामाह—"वस्तुतो ह्यस्य दर्शनस्यैतदेवाचार्यद्वयं[2] कश्मीरेष्ववतारकम्" (पृ० ४८) इति, "कश्मीरेषु श्रीमान् [3]विश्वावर्त एवास्य दर्शनस्य साक्षात् प्रवर्तयिता" (पृ० १२५) इति च। अनेनोद्धरणद्वयेन परिज्ञायते—नहि कश्मीरे त्रिपुरादर्शनमिदम्प्रथमतया प्रादुर्भूतम्, अपि त्वाचार्यद्वयेन प्रदेशान्तरादानीय तत्रैतन्मतं प्रतिष्ठापितमिति। द्वयोरेतयोराचार्ययोर्जयरथ ईश्वरशिवाचार्यमतस्य बलवत्त्वमङ्गीकरोति, स रसमहोदधिश्लोकानां साक्षात् प्रवर्तयिता शूरमठाधिपतिश्चासीदिति च सूचयति[4]। नवमशताब्दीभवस्य (८५५-८८३ ई०) राज्ञोऽवन्तिवर्मणो

---

१. वामकेश्वरतन्त्रं नित्याषोडशिकार्णवश्चास्यैव ग्रन्थस्य नामान्तरमिति मदीये योगिनीहृदयद्वितीयसंस्करणस्यानुप्रास्ताविके द्रष्टव्यम्।

२. ईश्वरशिवो विश्वावर्तश्चात्रत्यमाचार्यद्वयम्। वामकेश्वरीमतविवरणसंपादकेन तु शङ्करराशिरत्र प्रथम आचार्यो गृहीतः। तत्तु पूर्वापरग्रन्थानवलोकनानवधानप्रयुक्तम्।

३. सोऽयं विश्वावर्तः—"श्रीविश्वावर्तस्तु विंशत्या स्तोत्रैः स्वात्मोत्प्रेक्षितनामभिर्व्यवस्थापितवान्" (पृ० १) इति भट्टोत्पलार्यविरचितशिवस्तोत्रावलीव्याख्यातृक्षेमराजप्रदर्शितात् शिवस्तोत्रावल्या आधुनिकक्रमस्य व्यवस्थापकादभिन्न एवेति वामकेश्वरीमतविवरणसम्पादकाः।

४. वामकेश्वरीमतविवरणम्, पृ० ४८

मन्त्री शूरोऽस्य मठस्य संस्थापकः श्रूयते। शिवसूत्रकर्तुर्वसुगुप्तस्य शिष्यः कल्लटो[1] राज्ञोऽवन्तिवर्मणः समसामयिक आसीदिति राजतरङ्गिणी-प्रामाण्येनैतिहासिकाः कथयन्ति। स्पन्दकारिका वसुगुप्तकृतिरथवा कल्लटकृतिरित्यत्र मतद्वयं वर्तते। वसुगुप्तेनैव रचिता स्पन्दकारिकेति क्षेमराजादयोऽभिनवगुप्तशिष्या आहुः। कल्लटकृतिरिति तु शिवसूत्र-वार्त्तिककारभास्कर-स्पन्दप्रदीपिकाकारोत्पलवैष्णवप्रभृतय ऊचिरे। अ-प्रासङ्गिकतयाऽत्र विस्तरेण वक्तुं न शक्यते। तथापि [2]स्पन्दकारिका कल्लटकृतिरिति पक्षो गरीयान् प्रतिभाति। स्पन्दशब्दो विमर्शवाची। विमर्शशब्दश्च शक्तिवाचकत्वेन शैवेषु शाक्तेषु च तन्त्रेषु प्रसिद्धः। एवं च स्पन्दकारिकायां शाक्तं दर्शनं व्याख्यातम्। कल्लटशिष्येण भट्टप्रद्युम्नेन तत्त्वगर्भस्तोत्रे—

> यस्या निरुपधिज्योत्स्नारूपायाः शिवसंज्ञया।
> व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे[3]॥

---

१. भट्टकल्लटवत् शिवदृष्टिकारः सोमानन्दोऽपि वसुगुप्तपादस्य शिष्यः समसामयिकश्चेति मतं प्रायः सर्वैः स्वीक्रियते। तन्न साधु प्रतिभाति। "किञ्चिदुच्छूनता सैव महद्भिः कैश्चिदुच्यते" (१।१६) इति शिवदृष्टौ सोमानन्द आह। "भट्टप्रद्युम्नेन तत्त्वगर्भे" इति च तत्र भट्टोत्पलो वृत्तिं चकार। भट्टप्रद्युम्नो भट्टकल्लटस्य शिष्य इति भट्टभास्करेण स्वकीये शिवसूत्रवार्त्तिके प्रारम्भ एव प्रदर्शितम्। तत्रैव वसुगुप्ततो भट्टभास्कर-पर्यन्तं स्पन्ददर्शनपरम्परापि प्रदर्शिता। अस्यां परम्परायां सोमानन्दो न दृश्यते। शिवदृष्टिसमाप्तौ सोमानन्देन प्रत्यभिज्ञादर्शनपरम्पराऽदर्शि। तत्र स्पन्ददर्शनीया आचार्या न दृश्यन्ते। एवं च स्पन्ददर्शनं प्रत्यभिज्ञा-दर्शनतः पृथगेव। कल्लटशिष्यं प्रद्युम्नं सोमानन्दो महच्छब्देन विशेषयन् तन्मतं च शिवदृष्टितृतीयाह्निके खण्डयन् भट्टप्रद्युम्नपराग्भव एव भवितु-मर्हति। एवं च सोमानन्दः कल्लटसमसामयिकस्तच्छिष्यश्चेति मतं संदिग्धमेव।

२. प्रश्नोऽयं निबन्धान्तरे समाधास्यते विस्तरेण।

३. एष श्लोको रामकण्ठेन स्वकीयायां स्पन्दकारिकाविवृतौ (पृ० १२९) तत्त्वगर्भश्लोकत्वेनोद्धृतः। तत्त्वगर्भस्तोत्रं च भट्टप्रद्युम्नकृतिरिति शिव-दृष्टिवृत्तित उत्पलाचार्यकृतितो (पृ० १६) ज्ञायते।

इत्येवं स्पष्टमेव शाक्तं दर्शनं प्रत्यपादि। अत एव कश्मीरशैवदर्शन-प्रतिष्ठापकेन सोमानन्देन शिवदृष्टौ तृतीयाह्निकप्रारम्भे एतन्मतं खण्डितम्[१]। परात्रीशिकानामकः कौलदर्शनग्रन्थोऽपि तेन त्रिकदर्शनमनुरुद्ध्य व्याख्यातः। तन्त्रालोके ऊनत्रिंशत्तमाह्निके कौलमतविवरणप्रसङ्गे—"स्वशरीराधिकसद्भावभावितामिति ततः प्राह। श्रीमत्कल्लटनाथः" (२९।१२३-१२४) इत्येतत्कल्लटवचनमुद्धृतम्। तत्त्वचिन्तामण्या [२]मधुवाहिन्या वा तत्कृतेरेतद्वचनमथवा तेनाभ्यां पृथक् कौलदर्शनग्रन्थो निर्मित इत्यधुना वक्तुं न शक्येत, तत्कृतयोरनयोर्ग्रन्थयोः साम्प्रतमनुपलब्धेः। कल्लटः स्पष्टमेव शक्तेः प्राधान्यं मनुत इति तद्ग्रन्थैः परिज्ञातमासीत्। स एव यदि स्पन्दकारिकायाः कर्ता स्वीक्रियेत तर्हि स्पन्दकारिकया शैवं दर्शनं न साधयितुं शक्येत, अतः सोमानन्दानुयायिभिर्वसुगुप्त एव स्पन्दकारिकायाः कर्तेति स्वीकृतम्। भट्टलोल्लटादिभिः कल्लटकृतस्पन्दवृत्त्यनुसारिण्येव स्पन्दसूत्राणि व्याख्यातानि. क्षेमराजेन तु न तथा कृतमिति स स एवाह[३]। सर्वैर्विवृतिकृद्भिर्यद् व्याख्यायि ततोऽपूर्वमेवानेन व्याकृतमिति[४], अनन्तापरटीकाकृन्मध्ये स्थितिममृष्यताऽस्माकं गुरुणा स्पन्दशास्त्रं न विवृतमिति[५] च स वदति। अलमप्रासङ्गिकेन। एतेनैतन्निष्कृष्यते—राज्ञोऽवन्तिवर्मणो राज्यकाले (८५५-८८३ ई०) कश्मीरेषु कौलक्रमदर्शने प्रचलिते आस्ताम्। त्रैपुरं दर्शनमपि तदैव तत्र प्रवेशमलभतेति।

नवत्रिकोणात्मके श्रीचक्रे केन्द्रस्थाने बिन्दुर्दृष्टो भवेत् श्रीमद्भिः। एष बिन्दुरोड्याणपीठस्य तत्र स्थितायास्त्रिपुरसुन्दर्याश्चर्यानन्दनाथस्य च प्रतीकभूतोऽङ्गीकृतः शिवानन्दादिभिः। "अलं चर्यानन्दनाथोपदेशविशद-

---

१. अत्रत्या भट्टोत्पलाचार्यकृता विवृतिर्द्रष्टव्या।

२. मधुवाहिनी भट्टकल्लटकृतिरिति केवलं डा०जगदीशचन्द्रचटर्जीलेखेन(कश्मीर शैविज्म,पृ० ३७)ज्ञायत इति डा० कान्तिचन्द्रपाण्डेयः प्रतिपादयति(अभिनवगुप्त, द्वितीयं संस्करणम्, पृ० १५७)। तन्न साधु, "शिवसूत्रवृत्त्योर्मधुवाहिनीतत्त्वार्थचिन्तामण्योर्भट्टश्रीकल्लटपादैः" (ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, भा०२, पृ० ३०) इत्यभिनवगुप्तवचनमपि हि तत्र प्रमाणम्। एतच्च वचनं चटर्जीमहोदयेन तत्रैव स्थलान्तरे (पृ० ३१) उद्धृतमपि।

३. क्षेमराजकृते स्पन्दनिर्णये, पृ० ३४ द्रष्टव्यम्।

४. तत्रैव, पृ० १३　　५. तत्रैव, पृ० ७७

प्रतिभाविभवैः सह संभाषितेन" (पृ० ३४) इति वामकेश्वरीमतविवरणे जयरथो वामकेश्वरीमतस्यार्थं विकुर्वाणान् विपक्षिणः कटाक्षयति। एतेन त्रैपुरदर्शनस्य प्रथमः प्रवर्तकश्चर्यानन्दनाथ इति बाढं सिध्यति। उड्डियानस्थानं चोत्तरस्यां दिशि कश्मीरसमीप एव वर्तते। साम्प्रतं 'स्वात' इति नाम्ना ख्याता 'सुवास्तु'नदी पश्चिमगन्धारदेशे प्रवहति। सुवास्तुनदीद्रोणी प्राक्तनसमये 'औदीयनी' इति कथ्यते स्म। तस्या एव 'उड्डियान' इत्यपि नाम[1]। अस्मिन्नुड्डियानाख्ये देशे एवेदम्प्रथमतया चर्यानन्दनाथेन त्रैपुरसम्प्रदायः प्रतिष्ठापितः स्यात्। अत्रैव दीक्षितेनेश्वरशिवेन तज्ज्ञानं कश्मीरेष्ववतारितं स्यात्। एष च देशः कश्मीरसमीप एव स्थित इति कृत्वा शिवानन्देन "सम्प्रदायस्य कश्मीरोद्भूतत्वात्" इति चोक्तं स्यात्।

## आचार्यास्तत्कृतयश्च

अगस्यकृतित्वेन प्रसिद्धानि शक्तिसूत्राणि, परशुरामकृतित्वेन प्रसिद्धानि कल्पसूत्राणि, गौडपादकृतित्वेन प्रसिद्धानि श्रीविद्यारत्नसूत्राणि सुभगोदयस्तुतिश्च, शङ्कराचार्यकृतित्वेन प्रसिद्धानि सौन्दर्यलहरी सुभगोदयः सौभाग्यविद्या त्रिशतीभाष्यं च, ब्रह्माण्डपुराणीयं ललितोपाख्यानम्, त्रिपुरारहस्यमाहात्म्यज्ञानखण्डे, अन्यानि च ज्ञानार्णव-कादिमत दक्षिणामूर्तिसंहिता-परमानन्दतन्त्रप्रभृतीनि त्रिपुरातन्त्राणि शिवानन्दकृतिषु ऋजुविमर्शिन्यादिषु, महेश्वरानन्दकृतौ महार्थमञ्जरीपरिमले, अमृतानन्दकृतौ योगिनीहृदयदीपिकायाम्, जयरथकृते वामकेश्वरीमतविवरणे, विद्यानन्दकृतायामर्थरत्नावल्यां च नोद्धृतानि। प्राचीनेषु ग्रन्थेष्वेषामुद्धरणान्यन्वेषणीयानि।

ईश्वरशिवो विश्वावर्तश्चेत्याचार्यद्वयं त्रपुरसम्प्रदायस्य कश्मीरेष्ववतारकमिति पूर्वमुक्तम्। तत्रेश्वरशिवो रसमहोदधिश्लोकानां साक्षात् प्रवर्तयिता। रसमहोदधिश्च वामकेश्वरीमतव्याख्यानपरः कारिकामयो ग्रन्थः प्रतीयते। अस्य विस्तृतान्युद्धरणानि जयरथविवरणे द्रष्टव्यानि। जयरथविवरणे [2]वार्त्तिककारस्यानेकानि वचनानि दृश्यन्ते। एष वार्त्तिक-

---

१. द्रष्टव्यः—डा० वासुदेवशरण-अग्रवालमहोदयानाम्—"अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्" इति शीर्षको निबन्धः, सारस्वत्याः सुषमायाः ६ व० ३-४ अङ्कयोः प्रकाशितः, पृ० ३४२

२. द्रष्टव्यम्—पृ० ९, १२, ३०

कारो विश्वावर्तोऽन्यो वेति प्रमाणाभावान्न वक्तुं शक्यते। "एतान् सद्गुरुलब्धान् विश्वावर्तः प्रवर्तितवान्" (पृ० ३६) इति, "ततश्च विश्वावर्तमुखेनैव लक्ष्यते यत् तदेवेदमस्मत्पर्यन्तं शिष्यप्रशिष्यक्रमेण सर्वेषामपि प्राप्तम्" (पृ० ४८) इति च वदन् जयरथस्तस्य महत्त्वं ख्यापयति। शङ्कर-राशिर्वामकेश्वरीमतस्य व्याख्यातेति जयरथधृततद्विवरणवचनाभ्यां (पृ० ४८, ५४) प्रतीयते। एवमेव [1]अल्लटोऽपि वामकेश्वरीमतव्याख्याता। अस्य व्याख्यानं जयरथेन पदे पदे साक्रोशं खण्डितम्। जयरथविवरणत एव सूत्रकारो नरवाहनदत्तः (पृ० २), वामकेश्वरीमतव्याख्याता कल्याण-वर्मा (पृ० १३७), वृत्तिकारो दीपकनाथः (पृ० ११५), मन्त्रसंकेतकर्ता वुप्पाराहुलः (पृ० १२५) इत्येते ग्रन्था ग्रन्थकाराश्च त्रैपुरमतावलम्बिनो ज्ञायन्ते। 'अभिनवगुप्त' [2]इत्याख्ये ग्रन्थे डा० कान्तिचन्द्रपाण्डेयमहोदयेन जयरथसमयः ख्रीष्टद्वादशशताब्द्या अन्तिमो भागस्त्रयोदशशताब्द्या आद्यो भागश्चेति निर्धारितः। वामकेश्वरीमतविवरणभूमिकायां तु ख्रीष्टद्वादश-शताब्द्या आद्यो भाग इति। ततः पूर्वतना एवैते सर्वे ग्रन्था ग्रन्थकाराश्च।

## हादिकादिविभागः

त्रिपुरासम्प्रदाये हादिविद्यायाः कादिविद्यायाश्च विभागः कदा समजायतेति न ज्ञायते। शिवानन्दविद्यानन्दाभ्यां हादिविद्या निष्कीलसम्प्रदायीया, कादिविद्या च सकीलसम्प्रदायीयेत्युक्तम्। शिवानन्दो हादिविद्या-मनुसरति। पुण्यानन्दामृतानन्दावपि हादिविद्यामनुसरतः। विद्यानन्द-नाथोऽर्थरत्नावल्यां यद्यप्युभावपि सम्प्रदायावनुसरति, तथापि प्रथमं कादिविद्यानुसारिणीं व्याख्यामुक्त्वा ततो निष्कीलसम्प्रदायानुसारिणीं व्याख्यां विदधाति। अत्र प्रतिपाद्यमानार्थजातस्य, अनयोर्हादिकादिविभा-गयोरुपलब्धानां ग्रन्थानां चावलोकनेन ज्ञायते यत् कादिविद्यासम्प्रदायः कर्मकाण्डबहुलो बाह्ययागप्रधानः, हादिविद्यासम्प्रदायश्च दर्शनबहुलोऽन्त-र्यागप्रधान इति। हादिविद्यासम्प्रदायीया सिद्धौघ-मानवौघपरम्परा इतिहासानुमोदिता, कादिविद्यायाः परम्परा तु कल्पितेव दृश्यते। हादि-विद्यानुसारिणी सिद्धौघ-मानवौघपरम्पराऽनुपदमेव प्रदर्शयिष्यते। नैतादृशी सर्वसंमता नामावली कादिविद्याचार्याणामुपलभामहे। सौन्दर्यलहरीस्तोत्रेऽ-न्येषु च ग्रन्थेषु सर्वत्र पूर्वं हादिविद्यैवोद्धृता। अतो हादिविद्यासम्प्रदाय

---

१. द्रष्टव्यम्—वामकेश्वरीमतविवरणम्, पृ० ५४

२. द्रष्टव्यम्—द्वितीयं संस्करणम्, पृ० २६२

एव प्राचीन इति प्रतीयते। पश्चात् कादिविद्यासम्प्रदायः कदा प्रवृत्त इत्यन्वेषणस्याधुना विषयः।

## हादिमतीया दिव्यौघ-सिद्धौघ-मानवौघपरम्परा

ऋजुविमर्शिन्यामर्थरत्नावल्यां सौभाग्यसुधोदये च त्रिपुरासिद्धान्तीय-हादिसम्प्रदायस्य दिव्यौघ-सिद्धौघ-मानवौघपरम्परा इत्थं दृश्यते— दिव्यौघः सप्तभिर्गुरुभिर्मुद्रितः, सिद्धौघश्चतुर्भिः, मानवौघोऽष्टभिर्गुरुभिः स्थापित इति शिवानन्दप्रदर्शित ऋजुविमर्शिनीक्रमः। अत्राष्टमो गुरुर्ऋजु-विमर्शिनीकार एव। अर्थरत्नावल्यां सौभाग्यसुधोदये च दिव्यौघः पञ्चभिः, सिद्धौघश्च षड्भिर्गुरुभिः प्रदर्शितः। अर्थरत्नावल्यां मानवौघः सप्तभिर्गुरुभि-र्मुद्रितः, सौभाग्यसुधोदये तु मानवौघो ग्रन्थकर्तृपर्यन्तं विस्तारितः। तत्र दिव्यौघे चर्यानाथ-ओड्डनाथ-षष्ठिनाथ-मित्रीशनाथा लोपामुद्रा अगस्त्य-श्चेति षडेव नामानि ऋजुविमर्शिन्यां तदनुसारिण्यां [1]चिद्वल्ल्यां च दृश्यन्ते। अत्र दिव्यौघीया सप्त संख्या न पूर्यते। अर्थरत्नावल्यां सौभाग्य-सुधोदये च क्रोधमुनिः पञ्चमो दिव्यौघगुरुः प्रदर्शितः। लोपामुद्रा अगस्त्यश्च सिद्धौघे परिगणितौ। कङ्कालतापसः, धर्माचार्यो लघुनुतिकर्ता, मुक्तिकेशिनी, दीपकाचार्यो दण्डककर्ता च सर्वत्र सिद्धौघे परिगणिताः। जिष्णुदेव-मातृगुप्तदेव-तेजोदेव-मनोजदेव-कल्याणदेव-रत्नदेव - वासुदेवाख्याः सप्त मानवौघीया गुरवः। एते सप्तैवार्थरत्नावलीकारेण प्रदर्शिताः। "तेन (वासुदेवमुनिना) पुत्रीकृत ऋजुविमर्शिनीकर्ता शिवानन्दमहायोगी" इत्यृजुविमर्शिनीकारः प्राह। सौभाग्यसुधोदये तु कल्याणदेवतः पश्चात् परमानन्दः, स्वात्मानन्दः, त्रिलोचनेशः, देवेशः, केशवेशः, पुण्यानन्दः, अमृतानन्द इति क्रमः प्रदर्शितः। अत्र रत्नदेव-वासुदेवाख्ये मानवौघगुरुष्व-न्तिमे द्वे नामनी न दृश्येते। तयोः स्थाने परमानन्दः स्वात्मानन्द[2] इति च नामनी अत्र स्तः।

## हादिमतीया ग्रन्था ग्रन्थकाराश्च

हादिविद्याया आद्यस्य सिद्धाचार्यस्य कङ्कालतापसस्य कोऽपि ग्रन्थो नोपलभ्यते। कङ्कालः, कङ्कालतापनः, कालतापन इति च नामान्यस्या-

---

१. द्रष्टव्यम्—सटीकस्य कामकलाविलासस्य मद्रपुरीमुद्रितं तृतीयं संस्करणम्, पृ० ७१-७२

२. शिवानन्देनाप्यृजुविमर्शिनीमङ्गलाचरणतृतीयपद्ये स्वात्मानन्दो गुरुरूपेण स्मृतः।

चार्यस्य दृश्यन्ते। सिद्धौघपरम्परायां द्वितीयो धर्माचार्यः "लघुनुतिवररचनविदितविज्ञानः"[१] इत्यमृतानन्दकृतसौभाग्यसुधोदयप्रामाण्यतो लघुस्तवकर्तेति ज्ञायते। एष च लघुस्तवो निर्णयसागरयन्त्रालयतः प्रकाशितायाः काव्यमालायास्तृतीये गुच्छके प्रकाशितायां पञ्चस्तव्याम्, मैसूरनगरतः प्रकाशिते सौन्दर्यलहरीसंस्करणे स्थितायां पञ्चस्तव्यां च प्रथमः। पञ्चानामपि स्तवानामेकस्यामेव मातृकायां बाहुल्येनोपलब्धेरेक[२] एव सर्वेषामेषां कर्तेति लघुस्तवीसम्पादकस्य कल्पना नैवानुचिता। सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदेऽत्रत्यतृतीयस्तवस्थः—"लक्ष्मीवशीकरणचूर्णसहोदराणि" (१८ श्लो०) इत्यादिकः श्लोको भोजराजेनोद्धृतः, अथ च तृतीयस्तवस्थ एव "पादाम्बुजं भवतु मे विजयाय मञ्जु" इति प्रथमश्लोकस्योत्तरार्धः काव्यप्रकाशे दशमोल्लासे उदाहृतो दृश्यते। धर्माचार्यात् परभावी दीपकनाथो भोजराजदृष्टप्रभाव इत्यृजुविमर्शिन्यामुक्तम्। सरस्वतीकण्ठाभरणकार एष भोजराजः, प्राचीनः कश्चन भोजराजो वेति प्रमाणाभावान्न वक्तुं शक्यते; अथापि धर्माचार्यः काव्यप्रकाशकारतः सरस्वतीकण्ठाभरणकारतश्च प्राचीन इति सिद्ध्यति। अत्रत्यो लघुस्तवो राघवानन्दकृतया वृत्त्या सह त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशितो वर्तते। अस्योपद्विसहस्रश्लोकपरिमाणा परमेश्वरकृता लघुबृंहणी व्याख्या महेश्वरानन्दनाथेन महार्थमञ्जरीपरिमले समुद्धृता। अस्यैका मातृका त्रिवेन्द्रम्-नगरे

---

१. अत्र सौभाग्यसुधोदय-सुभगोदयवासना-ऋजुविमर्शिनी-अर्थरत्नावलीप्रभृतीनां ग्रन्थानां स्थलनिर्देशो मूलमातृकाप्रतिलिप्याश्रितो नैवोपयोगीति धिया सर्वत्र परित्यक्तः सः। ग्रन्थप्रकाशनानन्तरं परिशिष्टसाहाय्येन सर्वं सुलभं भविष्यति सुधियाम्।

२. सौन्दर्यलहरीटीकायां लक्ष्मीधरायाम्—"चर्चास्तोत्रे कालिदासकृते" (पृ० १८७) इति, "भगवत्पादैरनेडमूकेभ्यो लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्नाऽवाचि" (पृ० २८) इति, "कालिदासभगवत्पादैः....सकलजननीस्तवे" (पृ० ३०५, १९५७ ई० वर्षे प्रकाशितं मद्रपुरीयं संस्करणं द्रष्टव्यम्) इति च दृश्यते। कामाक्षीतनयकृतायामम्बास्तवटीकायां प्रारम्भे—"कालिदासो महाकविः....त्रिंशच्छ्लोकैरभिष्टौति" इति दृश्यते। एभिः प्रमाणवचनैः कालिदास एषां स्तवानां कर्तेति ज्ञायते। घटस्तवः सरस्वतीकण्ठाभरणे काव्यप्रकाशे च समुद्धृतः। किं धर्माचार्यो भोजकालिककालिदासतोऽभिन्नः ? अत्रावधातव्यमन्वेषणपरायणैर्विद्वद्भिः।

केरलविश्वविद्यालये सुरक्षिता विद्यते, अस्य स्तवस्यान्या अप्यनेकाष्टीकाः सन्ति, तास्वेका[1] जैनाचार्येणापि रचिता।

दीपकाचार्यो दीपकनाथो वात्रत्यायां सिद्धौघपरम्परायां चतुर्थः। एष च दीपकनाथ ऋजुविमर्शिनीकारेण शिवानन्देन—"अस्मद्गोत्रमहत्तर··· दीपकाचार्यो दण्डककर्ता" इत्येवं स्मृतः। दण्डकपदेन चात्र त्रिपुरसुन्दरीदण्डकं गृह्यते। त्रिपुरसुन्दरीदण्डकं चैतद् विद्यानन्देनार्थरत्नावल्यां स्थलद्वये समुद्धृतम्। भास्कररायेण सेतुबन्धे व्याख्यातृमतभेदप्रसङ्गे– 'दीपकाचार्यास्तु·········" (४।९) इत्येवं दीपकाचार्यव्याख्यानमुद्धृतम्। वामकेश्वरीमतविवरणे जयरथः—"पूर्वाचार्या अप्याहुः—आश्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृताः" (पृ० ११५) इत्याह। दीपकनाथो वामकेश्वरतन्त्रस्य प्रथमो व्याख्यातेत्यनेन ज्ञायते। एवमेव जयरथेन—"पूर्वे श्रीदीपिकाचार्यप्रमुखा गुरवो मम" इति मङ्गलाचरणश्लोकेषूक्तम्। अत्र 'दीपकाचार्य' इति पाठः प्रतिभाति। वामकेश्वरीमतभूमिकालेखकेन दीपिकाचार्यपदेन योगिनीहृदयदीपिकाकारस्य योगिनोऽमृतानन्दस्य पुण्यानन्दशिष्यस्य ग्रहणं कृतम्। डा० कान्तिचन्द्रपाण्डेयमहोदयेन[2] तु दीपिकानाथ इति नाम स्थापितम्। तदुभयं नोचितम्, अत्र चतुर्थस्य सिद्धाचार्यस्य द पकनाथस्यैव ग्रहणात्। सोऽयं दीपकनाथस्त्रिपुरसुन्दरीदण्डकस्य कर्ता वामकेश्वरतन्त्रस्य च प्रथमो व्याख्याता।

कल्याणस्तवो भास्कररायेण स्वकीये ललितासहस्रनामभाष्ये सौभाग्यभास्कराख्ये ( पृ० ७३-७४ ) समुद्धृतः। एष स्तवः कल्याणदेवेन हादिविद्यामानवौघगुरुषु पञ्चमेन रचितो भवेत्। संकेतपद्धतिनामको ग्रन्थोऽर्थरत्नावल्यां बहुशः, योगिनीहृदयदीपिकायाम्, नटनानन्दकृतायां कामकलाविलासटीकायां चिद्वल्ल्यां चोद्धृतः। अत्रत्या अनेके श्लोकाः शिवानन्देनाप्यृजुविमर्शिन्यामभियुक्तकृतित्वेनोल्लिखिताः। कोऽस्याः संकेतपद्धतेः कर्तेति न परिज्ञायते। महत्त्वपूर्णोऽयं ग्रन्थ इत्यर्थरत्नावलीस्थतदुद्धरणानि दृष्ट्वोच्यते। नास्य ग्रन्थस्य कापि मातृकाऽद्यावध्युपलब्धा। त्रिपुरसुन्दरीकल्पलता, हंसपारमेश्वरम्. रसेन्द्रसारसंग्रहश्च ऋजुविमर्शिन्यामर्थरत्नावल्यां च समुद्धृतानि। हंसपारमेश्वरं योगिनीहृदयदीपिकायामपि समुद्धृतम्। त्रिपुरासारसमुच्चयस्त्रिपुरासारो वा नागभट्टकृतो गोविन्दाचार्यकृतव्याख्यया

१. सोमतिलकसूरिणा विरचिता, अडयारपुस्तकालयसूचीपत्रं द्रष्टव्यम्।

२. 'अभिनवगुप्त' इत्याख्ये ग्रन्थे, द्वितीये संस्करणे, पृ० ५८१

समलङ्कृतः कलिकातानगरीतः सप्तनवत्युत्तराष्टादशशततमे (१८९७) ई० वर्षे प्रकाशितः। मूलग्रन्थस्योद्धरणद्वयमृजुविमर्शिन्यां दृश्यते। अतो नागभट्टः शिवानन्दतः प्राचीनः सिद्ध्यति। भट्टगङ्गाधरस्तोत्रमृजुविमर्शिन्यामुद्धृतम्। अत्रत्याः श्लोका महार्थमञ्जरीपरिमले योगिनीहृदयदीपिकायां चिद्वल्ल्यां च दृश्यन्ते। किंनामकमिदं स्तोत्रमिति तु न ज्ञायते।

## शिवानन्दस्य देशकालौ

महार्थमञ्जरीकर्ता महेश्वरानन्दो दक्षिणात्य इति स एवोवाच[1]। तस्य परमगुरुः शिवानन्दोऽपि तत्रत्य एव प्रतीयते। तत्रैवास्यानेकेषां ग्रन्थानां मातृका उपलब्धाः। पुण्यानन्दामृतानन्दावपि तत्रत्यावेव स्याताम्। यद्यप्यनयोर्ग्रन्थानां सार्वत्रिकः प्रचारस्तथाप्यमृतानन्देन दीपिकायां शिवानन्दस्य सुभगोदयवासना, सौभाग्यहृदयस्तोत्रं च बाहुल्येनोद्धृतमभियुक्तपदप्रयोगपुरःसरम्। शिवानन्दामृतानन्दनाथौ हादिविद्यापरम्परायां स्वकीयां स्थितिं स्वयमेव प्रतिपादयामासतुरिति पूर्वमेवोक्तम्।

अभिनवगुप्तपादशिष्यः क्षेमराजः, तद्विरचितं साम्बपञ्चाशिकाविवरणम्, प्रत्यभिज्ञाहृदयसूत्राणि च शिवानन्देनोद्धृतानि। योगिनीहृदयदीपिकाकारेणामृतानन्दनाथेन च स्वकृतौ शिवानन्दविरचिता सुभगोदयवासना स्मृता। अतः क्षेमराजतः पश्चात्तनोऽमृतानन्दतश्चार्वाग्भवः शिवानन्द इत्यङ्गीकर्तव्यम्। अमृतानन्दस्य गुरोः पुण्यानन्दस्य कृतेः कामकलाविलासस्य श्लोका लक्ष्मीधरेण सौन्दर्यलहरीटीकायां लक्ष्मीधराख्यायामुद्धृताः[2]। अतः क्षेमराजलक्ष्मीधरयोः स्थितिकालौ शिवानन्दस्य स्थितेः पूर्वापरे सीमनी मन्तव्ये।

अर्थरत्नावलीकारो विद्यानन्दनाथः शिवानन्दतोऽर्वाचीनः प्राचीनो वेत्यधुना न निश्चेतुं शक्यते, तथापि स शिवार्चनचन्द्रिकासौभाग्यरत्नाकरादिकर्तुः सच्चिदानन्दनाथशिष्याद् विद्यानन्दनाथतो नूनं भिन्न एव प्राचीनश्च[3]।

---

१. महार्थमञ्जरीपरिमले, पृ० २०२

२. द्रष्टव्यम्—मद्रपुरीमुद्रितं १९५७ ई० संस्करणम्, पृ० १६३

३. श्रीनिवासभट्टापरनामधेयेन विद्यानन्दनाथेन १६३० तमे वैक्रमे वत्सरे सौभाग्यरत्नाकरो विरचित इति योगिनीहृदयद्वितीयसंस्करणस्यानुप्रास्ताविके घपृष्ठे द्रष्टव्यम्। स्वकृतायां शिवार्चनचन्द्रिकायामनेन स्वकृतीनां

शिवानन्दस्य कृतिर्ऋजुविमर्शिनी सरस्वतीभवनग्रन्थमालायां नातिविलम्बं प्रकाशयिष्यते। क्रमवासनापरपर्यायायाः सुभगोदयवासनाया मातृके मद्रपुरीराज्यपुस्तकालये केरलविश्वविद्यालयपुस्तकालये च विद्येते। अस्य सौभाग्यहृदयस्तोत्रस्य मातृकाऽनेन निबन्धलेखकेन पुण्यपत्तनस्थे इतिहाससंशोधनसंस्थापुस्तकालये दृष्टा। एतद् ग्रन्थद्वयं महार्थमञ्जरीपरिमले दीपिकायां चिद्वल्ल्यां चानेकत्रोद्धृतम्। शम्भ्वैक्यदीपिकाऽस्यैव शिवानन्दस्य कृतिः। अस्या अप्यपूर्णा मातृका मद्रपुरीराज्यपुस्तकालये विद्यते। त्रिपुरसुन्दरीमन्दिरस्तोत्रं संवित्स्तोत्रं च शिवानन्दकृतित्वेन महार्थमञ्जरीपरिमले[1] उट्टङ्कितम्। स्वतन्त्रानन्दनाथकृतिर्मातृकाचक्रविवेकः शिवानन्दरचितया टीकया सह सरस्वतीभवनग्रन्थमालायां प्रकाशितः। सोऽयं शिवानन्द[2] ऋजुविमर्शिनीकारतो भिन्न एव। सिंहसिद्धान्तसिन्धुकारो जगन्निवासात्मजो गोस्वामिशिवानन्दश्चाभ्यां भिन्नः।

योगिनीहृदयदीपिकायां ज्ञानदीपविमर्शिनीनामकः पद्धतिग्रन्थ उद्धृतः[3]। अस्य ग्रन्थस्य मातृका बटोदर(बड़ोदा)नगरस्थगायकवाडशोधसंस्थापुस्तकालये, केरलविश्वविद्यालयपुस्तकालये, नेपालस्थवीरपुस्तकालये च सन्ति।

चिद्विलासः, तत्त्वदीपविमर्शिनी, [4]सौभाग्यसुधोदयश्चामृतानन्दस्य कृतयः सन्ति। अस्य योगिनीहृदयदीपिका प्रकाशितैव। चिद्विलासस्तवः

---

नामोल्लेखः कृतः, तन्त्रार्थरत्नावली न दृश्यते। गुरवोऽपि द्वयोर्भिन्ना एव। अर्थरत्नावलीकारो विद्यानन्दः शिवानन्दस्य समसामयिकः स्यात्।

१. द्रष्टव्यम्—पृ० १९५, १२९

२. शिवानन्दं च सौभाग्यप्रपञ्चोद्योतपद्धतेः।
कर्तारं मातृकाचक्रव्याख्यानख्यातसत्कथम्॥
इति परमानन्दतन्त्रटीकामङ्गलश्लोकेषु दृश्यते। सौभाग्यकल्पद्रुमकारमाधवानन्दनाथादिभिरनुसृतः परमानन्दसम्प्रदायः पश्चात्तनः। एतत्सम्प्रदायानुसारिणी सौभाग्यप्रपञ्चोद्योतपद्धतिर्येन शिवानन्देन रचिता, तेनैव मातृकाचक्रविवेकोऽपि व्याख्यात इत्यनेन ज्ञायते।

३. द्रष्टव्यम्—पृ० १६०

४. योगिनीहृदयदीपिकायामनेकश उद्धृतं सौभाग्यसुभगोदय इति नाम पाठभेदप्रयुक्तम्। वस्तुतस्तु सौभाग्यसुधोदय इत्येवास्य ग्रन्थस्य नाम। तदेव च स्वयं ग्रन्थकारस्य भास्कररायप्रभृतीनां च सम्मतम्।

श्रीरङ्गस्थेन वाणीविलासमुद्रणालयेन प्रकाशितः। अस्य परिष्कृतं संस्करणमनेन निबन्धलेखकेन सज्जीक्रियते। तत्त्वदीपविमर्शिन्या एका मातृका केरलविश्वविद्यालयपुस्तकालयेऽस्ति, साऽमृतानन्दकृतिरेव स्यात्। सौभाग्यसुधोदयस्य द्वे मातृके अड्यारपुस्तकालये, एका च मातृका केरलविश्वविद्यालयपुस्तकालयेऽस्ति। तिसृभिराभिर्मातृकाभिर्दीपिकासाहाय्येन च संशोध्यास्यापि संस्करणमनेन निबन्धलेखकेन सज्जीक्रियते।

महेश्वरानन्देन तद्गुरुणा महाप्रकाशेन च रचिता अनेके ग्रन्था महार्थमञ्जरीपरिमले समुद्धृताः। ते च बाहुल्येन क्रमदर्शनानुसारिण इत्यत्र त्रैपुरदर्शनप्रस्तावे न चर्च्यन्ते।

ब्रह्माण्डपुराणे (४।३८।८-१०) दशधा ललितामन्त्राः प्रतिपादिताः। ज्ञानार्णवतन्त्रे तु द्वादशे पटले द्वादश विद्याः सूचिता मनु-चन्द्र-कुबेरादिभिरुपासिताः। तत्र लोपामुद्राभिधा हादिविद्या, कामराजोपासिता कादिविद्या च प्रथिततमे। बहुप्रकारा बहुकालव्यापिनी चेयं त्रिपुरासम्प्रदायपरम्परा। हादिविद्याग्रन्थानां ग्रन्थकाराणां चात्र कियान् परिचय उपस्थापितः। सन्ति विद्यानन्दनाथ-शङ्करानन्दनाथ-भास्कररायप्रभृतयो ग्रन्थकाराः, सौभाग्यरत्नाकर-सुन्दरीमहोदय-वरिवस्यारहस्यादयश्च ग्रन्थाः कादिविद्यायाः। स्वल्पकायेऽस्मिन् निबन्धे सर्वेषां परिचयो नोपस्थापयितुं शक्यते। अतोऽद्य विस्तरभियाऽत्रैव विरम्यते[1] ॥ □

1. अखिलभारतीयप्राच्यविद्यापरिषदो द्वाविंशतिमेऽधिवेशने पण्डितपरिषदि पठितोऽयं निबन्धः।

# भोजनपानादिसिद्धयः

आतापिर्भक्षितो येन वातापिश्च महाबलः ।
समुद्रः शोषितो येन तमगस्त्यं नमाम्यहम् ।।

अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् ।
आहारपरिपाकार्थं स्मरामि च वृकोदरम् ।।

अतिसौहित्याक्रान्ता मिष्ठान्नप्रिया विप्राः श्लोकावेतौ पठन्तः करोदरसंयोगमहिम्ना पाचयन्त्यतिमात्रं भक्षितं भोजनम् । कथं नामागस्त्येनातापिर्वातापिश्च भक्षितौ, कथं च शोषितः समुद्र इति भारतादिषु पुराणेषु च प्रसिद्धतरम् । कुम्भकर्णादीनां च कथाभिः परिचिता एव सन्ति विद्वांसः । धूमपाः, मरीचिपाः, वातपाः, जलपाश्च ऋषयो मुनयश्च श्रूयन्ते । कृच्छ्रचान्द्रायणादीनि व्रतानि पुराणेषु धर्मशास्त्रेषु च कृच्छ्रतपःप्रकरणेषु प्रायश्चित्तप्रकरणेषु च विहितानि । मासोपवासिनः पक्षोपवासिनश्च जैनधर्मानुयायिष्वद्यापि दृश्यन्ते । दृष्ट एवाधुनिकैर्महात्मनां गान्धिनामुपवासमहिमा ।

किञ्च, महाभारते वनपर्वणि श्रूयते यद् युधिष्ठरः सूर्यमाराधयामास, ततश्चाक्षयमन्नपात्रमासादयामास । प्रत्यहं सर्वानतिथीन् भोजयित्वा द्रौपदी भुङ्क्ते । द्रौपदीभोजनपर्यन्तमेवास्यैतदवशिष्टं तिष्ठति स्म । क्रोधावतारः क्रोधभट्टारको दुर्वासा एतदजानात् । दुर्योधनप्रेरितः स एकदा सशिष्यवर्गो द्रौपदीभोजनकालं व्यतिपात्य तत्राजगाम, भोजनं च याचयामास । विपद्ग्रस्ता द्रौपदी श्रीकृष्णं सस्मार । आगतेन श्रीकृष्णेनाक्षयपात्रे कस्मिंश्चित् कोणे कृतपद एकस्तण्डुलो दृष्टो भक्षितश्च । तेनैव तृप्तः सशिष्यवर्गो दुर्वासा इति ।

अपि च, चरुभक्षणेन पुत्रोत्पत्त्यादिकं पुराणेषु श्रूयते । अमृतपानेनामराणां गरुडप्रभृतीनां च मृत्युञ्जयित्वं प्रसिद्धम् । महर्षिणा जमदग्निना वसिष्ठेन च स्वकीयाया गोः सकाशादतिथिदेवतृप्त्यै भोजनादिकमुपलभ्यते स्म । वाल्मीकिरामायणे महर्षिणा भरद्वाजेनाग्रजानुनयाय आगतस्य सपरिकरस्य भरतस्य भोजनादिव्यवस्था स्वतपःप्रभावेण कृता । किं

बहुना, अमृतफलभक्षणेन शतकत्रयकारस्य भर्तृहरेरमरतावाप्तिः कस्य नाम न विदिता, न श्रुतं च तस्यैतद्वैराग्यप्रवणं वचः—

यां चिन्तयामि सततं मयि सा विरक्ता
साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥ इति ।

अधुना किम्प्रयोजिका इमाः सिद्धय इति विचार्यम् । "दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्तुमुत्सहेत, समुद्रमगस्त्यवद्वा पिबेत्" (४।१०) इति योगसूत्रव्यासभाष्यादगस्त्येन समुद्रपानस्य, "एवमुक्त्वा पपौ राजा सर्वं भागीरथीजलम् । तपसा महता राजन् तथा योगबलेन च ॥" (१।२०।८) इति विष्णुधर्मोत्तरवचनाज्जह्नुना च महीयसा तपसा योगबलेन च गङ्गापानस्य सिद्धिः समासादिता । तपसा योगबलेन च चेतसि किमप्यनिर्वचनीयं दार्ढ्यमाधीयते । तेन च नानाविधाः सिद्धयोऽनायाससमधिगता भवन्ति । क्षुरधाराप्राय एव पन्थाः कैश्चिन्महात्मभिरेव क्षुण्णः, न तत्र पामरो जनः पदात्पदमपि चलितुं प्रभवति ।

प्रचलितेऽस्मिन् पुराणसम्मेलने नानाविधाः सिद्धीरवलम्ब्य विचारः प्रवर्तते । पुराणेषूपवर्णितानामेतासां सिद्धीनां किमपि वैज्ञानिकं प्रायोगिकं वा स्वरूपं वर्तते न वा, तासां सर्वजनीन उपयोगः कथं नाम स्यादित्येषोऽभिप्रायो मन्ये सम्मेलनायोजकानां स्यात् । तपसा, योगबलेन, युधिष्ठिरादिवद् देवताराधनेन चैव सिद्धय उपलभ्येरन्, अथवाऽस्त्यपरः कश्चन भौतिकोऽपि व्यापारस्तासामुपलम्भने ? किमेष प्रश्नः पुराणेषु समाहितः ? अनया दृष्ट्या विचारे क्रियमाणे भगवता पतञ्जलिनोक्तासु जन्मौषधिमन्त्रतपःसमाधिजासु सिद्धिषु मन्त्रौषधिजाः सिद्धय एवात्र विमर्शपदवीमानेतुं शक्यन्ते ।

मन्त्रमयीनां तासां तासां देवतानामाराधनेन सिद्धीनामुपलब्धिः श्रूयते तेषु तेषु तन्त्रेषु पुराणेषु च । मन्त्रबलेन, देवताभिव्यक्तिस्थानानां यन्त्राणां च साहाय्येन वृश्चिकादिविषाणां नानाविधरोगाणां च शमनं क्रियते तदभिज्ञैः साम्प्रतमपि । तन्त्रेषु चिकित्साशास्त्रग्रन्थेषु च मन्त्राराधनेन सहान्येऽपि केचन भौतिका उपाया उपदर्शिताः । इन्द्रदत्तेन क्षीरेण देव्याः

सीताया राक्षसगृहावासपर्यन्तं क्षुन्निवृत्तिः श्रूयते रामायणे। एवमेव अपामार्गतण्डुलैः साधितेन क्षीरेण बहुकालव्यापिनी क्षुधानिवृत्तिर्भवतीत्यायुर्वेदग्रन्थेषु प्रतिपाद्यते। क्षुदवरोधिकाः पिपासानिवर्तिकाश्चौषध्यो बह्व्योऽगदतन्त्रेषु दृश्यन्ते। तद्यथा—

अपामार्गस्य बीजानि दुग्धाज्याभ्यां तु पाचयेत्।
पायसं वटिकां क्षीरैर्भुक्त्वा मासद्वयं वसेत्॥
अन्त्राणि कृकलासस्य मज्जाकरञ्जबीजकम्।
पिष्ट्वा तु वटिकां कृत्वा त्रिलोहेन तु वेष्टितम्॥
तावद् यो धारयेद् भौमे क्षुत्पिपासा न बाधते।
पद्मबीजं महाशालीं छागीदुग्धेन प्रोक्षयेत्॥
साज्यं तत्पायसं कृत्वा भोजनं द्वादशवासरम्।
कोकिलाक्षस्य बीजानि विजयाबीजसंयुतम्॥
धात्रीबीजेन संयुक्ता वटिका क्रियतां नरैः।
तस्य भक्षणमात्रेण तस्योपरि गवां पयः॥
क्षुत्पिपासाहरं नित्यं नान्यथा मम भाषितम्।
औषधी कुतनी नाम द्विहस्ता चलकांशुका॥
एरण्डसदृशैः पत्रैः पुष्पैश्चापि सुलक्षयेत्।
तस्याः कन्दं समादाय ताम्बूलेनैव मात्रतः।
भक्षणं प्रातरुत्थाय क्षुत्पिपासाहरं परम्॥ इति।

भस्त्रकप्राणायामस्याभ्यासेन भक्षितमन्नदुग्धादिकं पञ्चस्वेव क्षणेषु जीर्यते। केषाञ्चन आसनानामभ्यासेन भोजनमात्रा शनैः शनैरल्पा भवति।

योगशास्त्रेषु, तन्त्रेषु, आयुर्वेदग्रन्थेषु च प्रतिपादितानामेतादृशानां केषाञ्चन विषयाणां प्रायोगिकमध्ययनं नितान्तमपेक्षितम्। सिद्धीनां शाब्दिकं वर्णनं वैरस्याय शास्त्रेष्वनास्थावतां तत्र वैराग्यवृद्धेरुत्पादनाय चैव प्रभवेत्॥

□

# तान्त्रिकं वाङ्मयम्

तन्त्रशब्दः साम्प्रतं मारणमोहनादिषट्कर्मप्रतिपादकेषु शास्त्रेष्वेव प्रायः प्रयुज्यते। विविधान् मन्त्रयन्त्रमण्डलादीनाधृत्य समायोजितेषु कर्मकाण्डेषु वामाचारप्रधानेषु तस्येतिकर्तव्यता परिसमाप्यत इत्यामनन्ति साम्प्रतिका इतिहासज्ञाः केचन पौर्वात्याः पाश्चात्याश्च। अत एव हेयदृष्ट्या तदवलोक्यते तैः। तादृशैरेवेतिहासलेखकैर्वैष्णवाः शैवाश्चागमग्रन्था न परिगण्यन्ते तान्त्रिके वाङ्मये। प्रायोऽपरिचिता एव ते विशालेनानेन वाङ्मयेन। वस्तुतस्तु वैष्णवानां शैवानां च धर्मसंस्कृत्योरान्तरिकः कश्चन संबन्धो वर्तते पाञ्चरात्रेण पाशुपतेन चागमेन। वैष्णवानि शैवानि च पुराणान्यपि वर्तन्ते तदनुप्राणितान्येव। तदनुपदमेव स्पष्टीकरिष्यते।

प्राचीने बौद्धवाङ्मयेऽपि समुपलभ्यते [1]पाञ्चरात्राणां [2]पाशुपतानां च आचाराणां समुल्लेखो यत्र तत्र। शतपथब्राह्मणे (१३।६।१) पाञ्चरात्रसत्रस्य वर्णनमस्ति। छान्दोग्योपनिषदि (७।१।२) श्रुता एकायनविद्या पाञ्चरात्रागमस्यैव नामान्तरम्। महाभारते नारायणीयोपाख्याने स्फुटमेवोच्यते—

> [3]सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
> ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥ इति।

अत्रैव (३४९।६५-६८) सांख्यस्य कपिलः, योगस्य हिरण्यगर्भः, वेदानामपान्तरतमाः, पाशुपतस्य श्रीकण्ठः, पाञ्चरात्रस्य च स्वयं भगवान् वक्तेति प्रतिपाद्यते। अन्यत्राप्युक्तम्—

> सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
> स्वयंप्रमाणान्येतानि न हातव्यानि हेतुभिः॥ इति।

पाञ्चरात्रमतानुयायी राजा वसुरुपरिचरोऽहिंसकेन सत्रेण नारायणमीड्यामासेति महाभारत एव [4]नारायणीयोपाख्याने वर्णितम्। प्राचीनतमेषु

---

१. वैष्णविज्म शैविज्म एण्ड माइनर रिलीजस सिस्टम्स, पृ० ३

२. धम्मपदे १४१ गाथा द्रष्टव्या।

३. शान्तिपर्वणि ३४९ अध्याये ६४ श्लोकोऽयम्।

४. शान्तिपर्वणि ३३६ अध्याये १०-११ श्लोकौ द्रष्टव्यौ।

शिलाशासनेषु पाणिन्यादिग्रन्थेषु च समुल्लिखिता वासुदेवोपासना [1]इतिहासज्ञैरप्यङ्गीकृता तदेतस्यैव धर्मस्याङ्गम् ।

कृष्णशुक्लयजुर्वेदयोः [2]शतरुद्रीयाध्याये वर्ण्यते रुद्रस्य महान् महिमा। अत्र रुद्रः स्तेनानां तस्कराणां शूद्राणामतिशूद्राणां चाप्याराध्यतया वर्णितः। [3]कृष्णयजुर्वेदसंहितारण्यकयो रुद्रस्याघोरवामदेवादिपञ्चस्वरूपाणां भस्मोद्धूलनादिविधेश्च दृश्यते तादृगेव स्वरूपं यादृशं हि प्रतिपादितं पाशुपतसूत्रकारेण। [4]बौद्धग्रन्थेष्वपि तदेतस्य मतस्य स्थितिसूचकं प्रमाणमुपलभामहे। श्रीकण्ठः पाशुपतमतस्याद्यः प्रवक्तेत्यनुपदमेव महाभारतप्रामाण्येन प्रतिपादितम् ।

तदिमौ पाञ्चरात्रपाशुपतमतावेव परवर्तिनो वैष्णवस्य शैवस्य च धर्मस्याधारस्तम्भौ। बौद्धजैनधर्मयोराविर्भावात् पूर्वमाभ्यां भारतीयायां संस्कृतौ वैदिके धर्मे चावश्यकं संशोधनं परिवर्तनं च संपादितम्। तदेवं कुर्वद्भ्यामप्याभ्यां बौद्धानां जैनानामिव च न वैदिको धर्मः सर्वथा प्रत्याख्यातः, किन्तु तत्प्रामाण्याङ्गीकारमुखेनैव तत्र किमप्यौज्ज्वल्यमाहितम्। अस्मिन् प्रसङ्गे वसोरुपरिचरस्योपाख्यानं निदर्शनतया समुपस्थापयितुं शक्यते, यत्र हि नारायणोपासकस्य गगनविहारसामर्थ्यवतस्तस्य हिंसकयागसमर्थनेन तत्सामर्थ्यनाशः समुपवर्णितः[5] ।

पाञ्चरात्रं पाशुपतं च वाङ्मयमागमपदाभिलप्यं भवति। तदनेन वाङ्मयेन न केवलं वैदिके धर्मे, अपि तु कालपरिपाकेन बौद्धधर्मेऽपि परिष्कारः संपादितः। तेन हि तत्र महायानशाखा प्रसूतिं लेभे। अपि च, तदनुप्राणिता एव सन्ति मूर्ति-स्थापत्य-चित्रादिकलाः। विद्या-क्रिया-योग-चर्याख्येषु चतुर्षु पादेषु प्रायो विभक्तानि सन्त्यागमशास्त्राणि । विद्यापादे ज्ञानस्य (दर्शनस्य), क्रियाचर्यापादयोः प्रसङ्गतः कलानाम्, योगपादे च योगस्य विधिर्वर्णितः। परवर्तिनां शैवानां शाक्तानां बौद्धादीनां च तन्त्राणां

१. वैष्णविज्म शैविज्म एण्ड माइनर रिलीजस सिस्टम्स, पृ० ३-४

२. तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमः प्रपाठकः, माध्यन्दिनसंहितायां षोडशाध्यायश्च ।

३. मैत्रायणीसंहितायां २.९.१; २-९.१०; तैत्तिरीयारण्यके १०.४३-४७

४. धम्मपदे १४१ गाथा द्रष्टव्या ।

५. महाभारते शान्तिपर्वणि ३३७।१-१७

विकासभूमिरागमशास्त्राण्येव। फलत आगमशास्त्राणि तन्त्रशास्त्राणि चेति नार्थान्तरम्।

इतः प्रायः षष्टिवर्षेभ्यः पूर्वं श्रीरामकृष्णगोपालभाण्डारकरमहोदयेन "वैष्णविज्म शैविज्म एण्ड अदर माइनर रिलीजस सिस्टम्स" इत्याख्ये ग्रन्थे न केवलं वैष्णवस्य शैवस्य च मतस्य, अपि तु शाक्त-गाणपत्य-स्कान्द-सौरसम्प्रदायानामपि स्वरूपपरिचय उपस्थापितः। ततः परं यद्यपि वैष्णवानां शैवानां शाक्तानां बौद्धानां चागमेषु तन्त्रेषु च पृथक् पृथगनुशीलनं समजायत, तथापि सर्वेषामेवैषां तान्त्रिकाणां सम्प्रदायानां परस्परमनुस्यूततायां तावन्नावहितं कैश्चिदपि विपश्चिद्भिः। साम्प्रतं सर्वेषामागमशास्त्राणां तन्त्रशास्त्राणां च समन्वयात्मकस्यानुशीलनस्य समारम्भः श्रीमद्भिः श्रद्धेयचरणैर्महामहोपाध्यायपण्डितगोपीनाथकविराजमहोदयैरक्रियतेति प्रायो जानन्त्येव विपश्चितः।

डा० भाण्डारकरमहोदयैः सम्प्रदायानामेतेषां परस्परानुस्यूततायामनवदधद्भिरेव स्वकीयं विवेचनमुपस्थापितम्। वस्तुतस्तु सम्प्रदायानामेतेषां वैदिकानां च विधीनां समन्वयमुखेनैव पञ्चायतनपूजायामाधृतः स्मार्तो धर्मः प्रसृतिं लेभे इत्यनुपदमेव प्रपञ्चयिष्यामः। विभिन्नानामप्येषां सम्प्रदायानां दार्शनिकी दृष्टिरुपासनापद्धतिश्च समानैवासीदिति, सा चागमशास्त्रमिति तन्त्रशास्त्रमिति वा नाम्नाऽभिधीयते स्मेति तथ्यं प्रायः सर्वैरेवेतिहासविद्भिरुपेक्षितम्। अपि च, भाण्डारकरमहोदयैः शाक्तः सम्प्रदायः प्रायोऽसामग्र्येण विवेचितः। न केवलमत्रैव, अन्यत्रापि शाक्तमतस्य विवेचनं प्रायः परिवर्तिनि काले प्रादुर्भूतान् ग्रन्थानाधृत्यैव कृतमिति प्रतीयते। शिवदृष्टिकारेण सोमानन्देन तृतीयाह्निकारम्भे शक्तिपारम्यपक्षः प्रतिक्षिप्तः। तदेतन्मतं पूर्वपक्षरूपेणोपस्थापयता तद्वृत्तिकारेण भट्टोत्पलेन भट्टप्रद्युम्नरचितस्य[1] तत्त्वगर्भस्तोत्रस्यैष श्लोक उपस्थापितः—

> यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया।
> व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे॥ इति।

---

१. भट्टप्रद्युम्नेन तत्त्वगर्भे" (शि० वृ०, पृ० १६) इति भट्टोत्पलोक्त्यैव ज्ञायते श्लोकोऽयं भट्टप्रद्युम्नरचितस्य तत्त्वगर्भस्येति। एष श्लोकोऽन्ये च केचन श्लोकास्तत्त्वगर्भस्था रामकण्ठकृतस्पन्दकारिकाविवृतौ (पृ० १२९-१३३) दृश्यन्ते।

तदेतस्याः शाक्ताया अद्वयदृष्टेस्तदीयप्राचीनवाङ्मयस्य च स्वरूपमभिनवगुप्तकृते तन्त्रालोके जयरथकृतायां तट्टीकायां च स्थाने स्थानेऽवलोकयितुं शक्यते। प्रत्यभिज्ञादर्शनं शैव्याः शाक्तायाश्च दृष्टेः समन्वयेनैव प्रादुर्भूतमिति वक्तुं पार्येत।

किञ्च, प्राक्तने वैदिके धर्मे कदाचन वर्णाश्रमव्यवस्थाया हिंसाबहुलानां यागादीनां च प्राबल्यमासीत्। औषनिषद-तान्त्रिक-बौद्ध-जैनसिद्धान्तैः प्रवृत्तेरस्याः प्रतिरोधोऽक्रियत। गच्छता कालेन औपनिषदाः सिद्धान्ता वैदिके ज्ञानकाण्डे समावेशमापुः, बौद्धजैनदृष्टिभ्यां सर्वथा वेदस्याप्रामाण्यमुद्घोषितम्। तदनयोर्मध्यवर्तिन आसन् तान्त्रिका विचाराः। महाभारतकालादारभ्य महिम्नस्तोत्रकर्तुः पुष्पदन्तस्य कालं यावद् भारतीये वाङ्मये वेद-सांख्य-योग-पाञ्चरात्र-पाशुपतशास्त्राणां समानं प्रामाण्यमभिप्रेतमासीत्। रामायणे, महाभारते, भगवद्गीतायाम्, पुराणेषु च मतानामेषां परस्परं समन्वयः समजायत। परिवर्तिभिर्धर्मशास्त्रनिबन्धकारैरपि वेदमनु स्मृतिवत् तन्त्रशास्त्राणां प्रामाण्यमूरीकृतम्। वैष्णव-शैव-शाक्तागमसदृशी योगस्योपासनायाश्च विशिष्टा पद्धतिर्बौद्धेषु जैनेषु च विकासमाप। सर्वेष्वेतेषु मौलिकाः सिद्धान्ताः समाना एव। साम्प्रतिकेषु भारतीयेषु सभ्यता-संस्कृति-धर्मेषु वैदिकविधीनामपेक्षया तन्त्रशास्त्रपद्धतीनां गरीयान् प्रभाव इत्यङ्गीकर्तव्यमेव।

तन्त्रशास्त्रमिति प्राचीनाया भारतीयायाः संस्कृतेः काचन विशिष्टा पद्धतिः। प्रागैतिहासिकीषु संस्कृतिषु तस्या मूलमित्यामनन्ति विद्वांसः। अथर्ववेदे यजुर्वेदे च तस्याः प्राचीनं स्वरूपमवलोक्यते। ऐतरेयारण्यकादिषु—"अकारो वै सर्वा वाक्" (२।३।६), "अ इति ब्रह्म" (२।३।८) इत्यादिप्रतिपादनं शैवशाक्ततन्त्रेषून्मीलितं मातृकास्वरूपं स्मारयति। वैदिके वाङ्मये वैष्णवानां शैवानां च सिद्धान्तानामुल्लेखो वर्तत इति साधयन्त्येव विद्वांसः, किन्तु ते पाञ्चरात्र-पाशुपत-शब्दावप्रयुज्य तत्स्थाने वैष्णव-शैवशब्दौ प्रयुञ्जते। वस्तुतस्तु पश्चात्कालिकाविमौ शब्दौ पौराणिकीं संस्कृतिमभिव्यञ्जयतः। पुराणेषु हि न कस्यापि नूतनस्य दर्शनस्य सिद्धान्तस्य वा प्रतिपादनं विद्यते, अपि तु वेद-योग-सांख्य-पाञ्चरात्र-पाशुपतानामथ च बौद्धानां जैनानां चापि विचाराणाम्, तदानीं प्रसृतानां शाक्त-गाणपत्य-स्कान्द-सौरसम्प्रदायानां च सिद्धान्तानां समन्वयमुखेन भारतीयायाः संस्कृतेर्नूतनं स्वरूपं तत्रोन्मीलितम्। विभिन्नेषु मतेषु

सम्प्रदायेषु चाविरोधापादनमेव पुराणानां मुख्यं प्रयोजनम् । तदनयैव दृशा पुराणानामनुशीलने समाचरिते भारतीयानां धर्माणां संस्कृतेश्चैतिहासिकं स्वरूपमधिगन्तुं शक्यते । न केवलं पुराणानामपि तु वैष्णव-शैव-शाक्त-योगाद्युपनिषदामप्यनयैव पद्धत्याऽनुशीलनमुचितम् । पुराणेषु साम्प्रदायिकोपनिषत्सु च समये समये भारतीयायां संस्कृतौ प्रादुर्भूतानां नूतनानां स्रोतसां तस्या अनारतं प्रवहता प्रवाहेण संयोजनस्यैव प्रयासः समवलोक्यते । अल्लोपनिषदत्र निदर्शनतयोपस्थापयितुं शक्यते ।

तान्त्रिक्यामुपासनायां दीक्षितस्य मानवमात्रस्याधिकारो वर्तते । नह्यत्र वर्णाश्रमादिकृतः कोऽपि प्रतिबन्धः । एतद्दृष्ट्या छान्दोग्योपनिषदस्य शास्त्रस्यातीव सामीप्यं धत्ते । अत्र हि सत्यकामस्य जाबालस्य (४।४), महिदासस्य ऐतरेयस्य (३।१६), रैक्वजानश्रुत्योश्चोपाख्यानानि (४।१-२) तमिमं तान्त्रिकं सिद्धान्तमेव पोषयन्ति । देवकीपुत्रकृष्णस्य घोराङ्गिरसस्य च संवादः सत्यमेव पाञ्चरात्रसिद्धान्तान् स्मारयति । अत्रोल्लिखिता (७।१।२) एकायनविद्या पाञ्चरात्रश्रुतेरेवापरं नाम । रामानुजीयादिवेदान्तग्रन्थेषु स्मृतैर्द्रमिलाचार्य-सुन्दरपाण्ड्य-वृत्तिकार-भास्कर-प्रभृतिभिरत्र विस्तृतानि भाष्याणि कृतानि । हन्त ! तानि साम्प्रतं नोपलभ्यन्ते । अत्र वर्णिता ध्रुवा स्मृतिरेव रामानुजीये वेदान्ते भक्तिसंज्ञां लेभे । एष च सिद्धान्तो नैव रामानुजोपज्ञः, किन्तु परम्पराप्राप्त इति प्रतीयते ।

परम्पराया एतस्या तिरोधाय वर्णाश्रमव्यवस्थायाः पुनः स्थापनाय च भगवता शङ्कराचार्येण ब्रह्मसूत्रव्याख्यानमुखेनापशूद्राधिकरणे सिद्धान्त एष समालोचितः, तर्कपादे च सांख्ययोगादिसिद्धान्तैः सह पाशुपत-पाञ्चरात्रमतयोरवैदिकत्वं समसाधि । तदनु रामानुजाचार्यप्रभृतिभिरप्यपशूद्राधिकरणे शङ्कराचार्यप्रदर्शिता सरण्येवानुसृता, पाञ्चरात्र-पाशुपतादिमतानां वैदिकत्वसाधनाय च महानायास उपनिबद्धः । तान्त्रिकवाङ्मयस्य सर्वेषु प्रस्थानेषु वेदापेक्षया तन्त्रशास्त्रस्य गरीयस्त्वं साध्यते । तद्यथा कुलार्णवे—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ॥

दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि ॥ (२।७-८)

अभिनवगुप्तेन[1] परात्रिंशिकाव्याख्यायामुद्धृतं वचनमप्येतदनुगुणमेव । तद्यथा—

वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् ॥

विस्मृत्यैतादृशानि वचनानि शङ्कराचार्यप्रभावतापितानामाचार्याणामागमशास्त्रस्य स्वतन्त्रं प्रामाण्यमनङ्गीकृत्य वेदानुवर्तित्वख्यापनमेव तन्मुख्यं कारणम्, येन हि विरलतामाप उत्तरे भारते आगमशास्त्रम्, यदा हि सिद्धान्तशैवागमानां प्रादुर्भावस्थलमेतदेव ।

तदेतस्यागमशास्त्रस्य तन्त्रशास्त्रस्य वा विशालं वाङ्मयमास्ते । वैष्णवागमा वैखानस-पाञ्चरात्र-भागवतभेदेन त्रिधा भिद्यन्ते । [2]हयशीर्षे पञ्चरात्रे पञ्चविंशतिः पाञ्चरात्रसंहिताः, दश च भागवतसंहिताः परिगणिताः । पाञ्चरात्राणां पञ्चविंशतिः संहिता इमा [3]अग्निपुराणेऽपि स्मर्यन्ते । डा० ओटोश्रादरमहोदयेन[4] "इमे(मा) भागवतानाम्" (२।९) इति स्पष्टोक्तौ सत्यामपि पाञ्चरात्रसंहितास्वेव ताः परिगणिताः, दशसु नामसूपलब्धेष्वपि च नवैव संगृहीतानि । यदि सर्वा एताः पाञ्चरात्रसंहितास्तर्हि कथं परित्यक्तास्ता अग्निपुराणे ?

दक्षिणे भारते वैष्णवागमीयपाञ्चरात्रवैखानसशाखानां विस्तृतं वाङ्मयं साम्प्रतमप्युपलभ्यते । तिरुपतिश्रीरंगमित्यादिदेवस्थानेष्वेतदाधृतैव पूजापद्धतिः साम्प्रतमपि प्रचलति । शर्मण्यदेशीयस्य च विदुषो डा० ओटोश्रादरमहोदयस्य अहिर्बुध्न्यसंहिताभूमिकायां २१५ संख्याकानां पाञ्चरात्रसंहितानामुल्लेखो वर्तते । मद्रपुरीतः १९६७ ई० वर्षे प्रकाशिते "पेनारोमा आफ पाञ्चरात्र लिटरेचर" नाम्नि ग्रन्थेऽद्यावधि समुपलब्धानां १०४ संख्याकानां पाञ्चरात्रसंहितानां विस्तृतं विवरणम्, प्रायः ३०० संख्याकानां संहितानां नामानि च प्रकाशितानि । एवमेव तिरुपतिस्थितवेङ्कटेश्वरप्राच्यशोधसंस्थानतोऽनेका वैखानससंहिताः प्रकाशिताः, सम्पूर्णस्य वैखानसवाङ्मयस्य च परिचयः संगृह्यते । एवं च दक्षिणभारतीयविदुषामुद्यमेन विस्तृतमेतद् वाङ्मयमद्यापि सुरक्षितं तिष्ठति ।

---

१. तत्त्वविवेकाख्या बृहद्व्याख्या, पृ० ९२
२. आदिकाण्डे द्वितीये पटले २-९ श्लोका द्रष्टव्याः ।
३. ३९ अध्याये २-५ श्लोका अवलोकनीयाः ।
४. इंट्रोडक्शन टू द पांचरात्र एण्ड द अहिर्बुध्न्यसंहिता, पृ० ५-११

एतद्विपरीता स्थितिः पाशुपतागमस्य। लकुलीशपाशुपतागमस्य केचन ग्रन्थाः साम्प्रतमुपलभ्यन्ते। लकुलीशादारभ्य विद्यागुरुपर्यन्तानामष्टादशपाशुपताचार्याणामुल्लेखो जैनग्रन्थेष्वपि दृश्यते। किन्तु लकुलीशात् पूर्ववर्तिनो महाभारतस्मृतश्रीकण्ठीयपाशुपतमतस्य ग्रन्थोद्धरणादिकं किमपि नोपलभ्यते। अनेकेषु पुराणेष्वष्टाविंशतियोगाचार्याणाम्, तेषु प्रत्येकं चतुर्णामाहृत्य द्वादशोत्तरशतसंख्याकानां शिष्याणां च नामावली दृश्यते। कृष्णशुक्लयजुर्वेदयोः संहिताब्राह्मणारण्यकेषु, रामायणमहाभारतयोः, पुराणेषु, स्मृतिग्रन्थेषु, योगग्रन्थेषु च तत्र तत्र प्राचीनस्य पाशुपतमतस्य चर्चा लभ्यते। साम्प्रतमुपलभ्यमानेषु शैवागमतन्त्रग्रन्थेषु पूर्वपक्षतयोद्धृतानां पाञ्चरात्रपाशुपतदर्शनसिद्धान्तानां केषाञ्चन परिचयमुपलभामहे। स्पन्दप्रदीपिकाकारस्योत्पलवैष्णवस्याभिनवगुप्तपादाचार्यस्य च समयं यावन्न केवलं काश्मीरे, किन्तु सम्पूर्णे उत्तरे भारते पाञ्चरात्राणां पाशुपतानां सिद्धान्तशैवानां च व्यापकः प्रभावः प्रसारश्चासीत्। ततः परं दक्षिणे भारते केवलमागमशास्त्रमिदं संकुचितं सदवाशिष्यत। पाण्डिचेरीतः साम्प्रतं प्रकाशिते रौरवागमे शैवागमानामुपागमानां च २०७ संख्याकानां नामावली संगृहीता। तत्रत्याः स्वल्पा एवागमग्रन्थाः साम्प्रतमुपलभ्यन्ते।

[1]वामनपुराणे वर्णव्यवस्थानुरूपं शैवानां चत्वारो भेदास्तेषां प्रवर्तयितारश्च वर्णिताः। तद्यथा—

ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्चने।
शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च॥
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने।
तृतीयं कालवदनं चतुर्थं च कपालिकम्॥
शैवस्त्वासीत् स्वयं शक्तिर्वसिष्ठस्य प्रियः सुतः।
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः॥
महापाशुपतस्त्वासीद् भरद्वाजस्तपोधनः।
तस्य शिष्योऽप्यभूद् राजा ऋषभः सोमकेश्वरः॥
कालास्यो भगवानासीदापस्तम्बस्तपोधनः।
तस्य शिष्योऽभवद्वैश्यो नाम्ना क्राथेश्वरो मुने॥
महाव्रती च धनदस्तस्य शिष्यश्च वीर्यवान्।
ऊर्णोदर इति ख्यातो जात्या शूद्रो महातपाः॥ इति।

---

१. षष्ठाध्यायस्य ८६-९१ श्लोका इमे।

अत्र ब्राह्मणैः सिद्धान्तशैवागमपद्धत्या, क्षत्रियैः पाशुपतविधिना, वैश्यैः कालामुखाचारेण, शूद्रैश्च कापालिककर्मणा शिवः समाराधनीय इति प्रतिपादितम्। धनद इत्यस्य महाव्रतीति विशेषणेन कापालिका एव महाव्रतधरा इत्यप्यनेन ज्ञायते। सिद्धान्तशैवानां पाशुपतानां च परिचयः पूर्वमुपस्थापितः। कर्णाटकराज्ये रेणुकाक्षेत्रसमीपवर्तिनि 'हुली' इत्याख्ये ग्रामे कदाचन कालामुखसम्प्रदायस्यानेकानि मठमन्दिराण्यवर्तन्त। कर्णाटकप्रदेशेऽद्यापि वीरशैवसम्प्रदायानुयायिषु जैनेष्वपि च वर्तते व्यापारिवर्गस्यैव प्राधान्यम्। जैनसाहित्ये त्रिषष्टिशलाकापुरुषाणामिव शैवसाहित्येऽपि वर्तते त्रिषष्टिशैवाचार्याणामवस्थितिः। केषाञ्चन शाक्तानां बौद्धानां च तन्त्रेषु प्रतिपादिता बाह्यपूजापद्धतिः कापालिकानां महाव्रतधराणां वा पूजाविधिं बाहुल्येनानुकरोति।

शाक्तोपासनाविधिस्तदीयं वाङ्मयं च कदा प्रसृतिं लेभे इत्येनं प्रश्नं नैव साधुतया समादधत्यैतिहासिकाः। इदमवधेयमत्र यदधुनैव मथुरानगरस्थे पुरातत्त्वसंग्रहालये प्रायः २३०० वर्षप्राचीना मनसादेव्याः प्रतिमा संगृहीता। उदयपुरनगरस्थे पुरातत्त्वसंग्रहालये संरक्षितस्य ४९० ई० वर्षे समुत्कीर्णस्य पूर्वम् उदयपुरमण्डलान्तर्गते 'छोटी सादड़ी' स्थानसमीपवर्तिनि गिरौ भ्रमराम्बा(भँवर माता)मन्दिरस्य गर्भगृहे स्थापितस्य शिलाशासनस्य[1] वर्ततेऽयमाद्यः श्लोकः—

देवी जयत्यसुरदारणतीक्ष्णशूला
प्रोद्गीर्णरत्नमुकुटांशुचलप्रवाहा।
सिंहोग्रयुक्तरथमास्थितचण्डवेगा
भ्रूभङ्गदृष्टिविनिपातनिविष्टरोषा ॥ इति।

चतुर्विधभेदभिन्नानां शैवानां तन्त्राणां पूर्वमुल्लेखः कृतः। इतो भिन्नान्यपि पूर्वादिस्रोतोभेदेन, आम्नायभेदेन, पीठविद्यादिभेदेन, कुल-क्रम-मत-त्रिकादिभेदेन, द्वैत-द्वैताद्वैत-अद्वैतादिभेदेन च समवस्थितानां शैवानां शाक्तानां च तन्त्राणां वर्तते विस्तृतं वाङ्मयम्। [2]तन्त्रालोकविवेकधृतश्रीकण्ठसंहितायाम्, [3]नित्याषोडशिकार्णवे च परस्परं भिन्नानां प्राचीनानां चतुष्षष्टि-

---

१. शिलाशासनमिदम् "एपिग्राफिया इण्डिका" पत्रिकायां ३० वर्षीये चतुर्थेऽङ्के १२०-१२७ पृष्ठेषु सविवरणं प्रकाशितमवलोकनीयम्।
२. तन्त्रालोकविवेके प्रथमभागे ४१-४३ पृष्ठेषु।
३. प्रथमपटले १४-२२ श्लोका द्रष्टव्याः।

तन्त्राणां नामावली वर्तते। अपरा च नामावली वर्तते [१]सर्वोल्लासतन्त्रे तोडलतन्त्रानुसारिणी। एताभ्यो विलक्षणा च दृश्यते विष्णुक्रान्ता-रथक्रान्ता-अश्वक्रान्ताविभागेषु विभक्तानां चतुष्षष्टितन्त्राणां त्रिविधा नामावली महासिद्धसारतन्त्रस्था[२]। विशालतमेऽस्मिन् वाङ्मये समुपलब्धानां मातृकाणां परिचायको ग्रन्थः प्रायः ८०० पृष्ठेषु मुद्रितः "तान्त्रिक साहित्य" (विवरणात्मकसूची, इत्याख्यः श्रीमद्भिर्गोपीनाथकविराजमहोदयैः संगृहीतोऽचिरादेव प्रकाशयिष्यते उत्तरप्रदेशप्रशासनस्य सूचनाप्रकाशनविभागान्तर्गतया [३]हिन्दीसमित्या।

कदाचन कोणार्क-कालपी-मुलतानाख्यस्थानेषु क्रमशः सन्ध्यात्रयेषु भगवतः सूर्यस्योपासना क्रियते स्म। दक्षिणे भारते विशेषतः केरलेषु साम्प्रतमपि सुब्रह्मण्यरूपेण कुमारः स्कन्दः समुपास्यते। महाराष्ट्र-गुजरात-राजस्थानेषु भाद्रशुक्लचतुर्थ्यामुत्तरे च भारते काशीप्रभृतिषु माघकृष्णचतुर्थ्यां पूज्यते महतोत्साहेन विघ्नेश्वरो गणपतिः। प्रायः सर्वेष्वेव पुराणेषु सौर-गणेशाद्युपपुराणेषु च वर्तते सम्प्रदायानामेषां परिचयः। नानापुस्तकालयेषु सम्प्रदायानामेषां संग्रहात्मकाः स्वतन्त्राश्च ग्रन्था अद्याप्यप्रकाशिताः सन्ति।

तान्त्रिके वाङ्मये प्रपञ्चसार-शारदातिलकयोः स्वीयं वैशिष्ट्यं विद्यते। अनयोः शिव-विष्णु-शक्ति-गणपति-सूर्य-स्कन्दानां तान्त्रिकी उपासनापद्धतिरेकत्रीकृता। स्मार्तधर्मस्याधारभूताविमौ ग्रन्थाविति वक्तुं पार्येत। प्रपञ्चसारो भगवतः शङ्कराचार्यस्य कृतित्वेन प्रख्यातः। खीष्टैकादशशताब्द्यां रचितायामीशानशिवगुरुदेवपद्धतौ[४] ग्रन्थोऽयं स्मर्यते। षष्ठशताब्दीतो दशमशताब्दीपर्यन्तमाविर्भूतं तान्त्रिकं वाङ्मयं साम्प्रतमप्यप्रकाशितमेव विद्यते। वाङ्मयस्यास्य विशेषतः पद्धतिग्रन्थानां प्रकाशनानन्तरमेव प्रपञ्चसारस्य विषये याथातथ्येन किमपि वक्तुं शक्येत।

---

१. द्वितीयोल्लासे, पृ० ५-६; इमे श्लोका मुद्रिते तोडलतन्त्रे दृष्टासु सरस्वतीभवनमातृकासु च नोपलभ्यन्ते।

२. तन्त्राभिधानभूमिका, पृ० २-४

३. साम्प्रतमेष ग्रन्थो मुद्रित उपलभ्यते।

४. प्रथमे भागे ४० ७१ पृष्ठयोः।

शङ्कराचार्यात् परमागमशास्त्रस्य तन्त्रशास्त्रस्य च वेदानुवर्तितत्व-ख्यापनप्रयासः प्राचलदिति वयमवोचाम । स च प्रयासः प्राधान्येन संस्कृत-भाषाश्रित एवासीत् । भगवतो बुद्धस्य महावीरस्य च प्रभावेण तान्त्रिके वाङ्मयेऽपि द्रमिळापभ्रंशादिजनभाषासु ग्रन्थाः संदृब्धाः । तेन दक्षिणे भारते द्रविडभाषायां वैष्णवानामालवाराणां शैवानामलियाराणां च वाङ्मयं प्रादुर्बभूव, उत्तरे च भारतेऽपभ्रंशादिभाषासु चतुरशीतिसिद्धानां नवनाथानां च साहित्यं जन्म लेभे । आलवाराणामलियाराणां सिद्धानां नाथानां चैतज्जनभाषामयं साहित्यं परवर्तिनि काले प्रादुर्भूतस्य भक्ति-साहित्यस्य मूलमित्यवगन्तव्यम् ।

वैष्णवानामालवाराणामाचार्याणां च परम्परायां प्रादुर्भूता रामानुजा-चार्या यामुनाचार्यप्रदर्शितदिशा तन्त्रशास्त्राणां वेदानुवर्तितत्वं प्रथया-म्बभूवुः । एषां प्रधानः शिष्यः कूरेशस्तु द्रविडभाषामयं भक्तिसाहित्यं बहु मेने । फलतः परिवर्तिनि काले संस्कृतभाषाश्रितेषु द्रविडभाषाश्रितेषु च वैष्णवसिद्धान्तेषु भेदः कश्चनाष्टादशविधः संजातः । लोकाचार्यो वेदान्त-देशिकश्चानयोः प्रातिनिध्यं कुर्वाते । संस्कृतभाषाया वर्णाश्रमधर्मस्य च समर्थको वर्गः 'वड़कलै' नाम्ना, द्रविडभाषाया वैष्णवानामाचाराणां समर्थकश्च 'टेंगलै' नाम्ना ख्यातिमाप । अस्यामुत्तरायां परम्परायामेवोत्तरे भारते रामानन्दः प्रादुर्बभूव । रामानन्देन [1]वैष्णवमताब्जभास्करेऽष्टादश-विध एष मतभेदः संक्षेपेण व्याख्यातः । एतद्विषयकाः केचन [2]स्वतन्त्रा ग्रन्था अप्यवलोक्यन्ते ।

रामानुजशिष्यस्य कूरेशस्य रामभक्तिपरम्परा पाञ्चरात्रागमस्याऽ-गस्त्यसंहितामाश्रित्य प्रावर्तत । पाञ्चरात्रागमीयास्त्रिविधाः संहिताः साम्प्रतमुपलभ्यन्ते । बाहुल्येन संहितासु चतुर्व्यूहवादस्यैव प्रतिपादनं विद्यते, किन्तु सन्ति काश्चन संहिताः, यासु कृष्णोपासनाया रामोपासना-याश्च विधानम् । रामानन्दस्य केषुचन ग्रन्थेषु तान्त्रिककर्मकाण्डस्य बाहुल्यं

---

१. ग्रन्थेऽस्मिन् अष्टादशश्लोकेषु (९३-११०) स्वपक्षीया अष्टादशवादा विवृताः ।

२. अष्टादशभेदविचार-अष्टादशवादप्रभृतीनां ग्रन्थानां मातृका अडचारपुस्तका-लयादिषु संरक्षिताः सन्ति । तदयमष्टादशवादानां संग्राहकः श्लोकः—

भेदः स्वामिकृपाफलान्यगतिषु श्रीव्याप्त्युपायत्वयो-
स्तद्वात्सल्यदयानिरुक्तिवचसोर्न्यासे च तत्कर्तरि ।
धर्मत्यागविरोधयोः स्वविहिते न्यासाङ्गहेतुत्वयोः
प्रायश्चित्तविधौ तदीयभजनेऽणुव्याप्तिकैवल्ययोः ॥ इति ।

केचनाप्रासङ्गिक मन्वते। एतच्च पाञ्चरात्रागमस्यैव तदानीन्तनस्य प्रभाव इत्यवगन्तव्यम्। परिवर्तिनि काले प्रादुर्भूते तान्त्रिके वाङ्मये दार्शनिकसिद्धान्तानां योगविधीनां चापेक्षयाऽस्य वाह्यक्रियाकाण्डस्य विस्तार एव स हेतुर्येन वैदिककर्मकाण्डस्येव तान्त्रिकं कर्मकाण्डमपि हेयमिवोपेक्षितमिव सञ्जातम्।

तदेतस्मिन् तान्त्रिके वाङ्मयेऽत्युन्नतास्वाध्यात्मिकीषु भूमिकासु स्थितानां स्थितप्रज्ञानां महामानवानां सममेव पशुप्रायाणामुच्छृङ्खलानामज्ञानां च मनुष्याणामाध्यात्मिकविकासाय योग्यतानुरूपो रुच्यनुसारी पन्थाः समुपलभ्येत। महार्थमञ्जरीकारमहेश्वरानन्दप्रभृतिभिर्योगिभिर्जात्यादिदुराग्रहा[1] आगमवचनप्रामाण्येन पाशत्वेनाभिमताः, भगवत्पादानां शङ्कराचार्याणां [2]ब्रह्माद्वैतवादतोऽप्यत्युत्कृष्टमागमीयं तान्त्रिकं च दर्शनमिति च सप्रमाणं साधितम्। तान्त्रिके हि दर्शने जगदेतन्न मिथ्या, ब्रह्म च नानिर्वचनीयया माययाऽपि तु कर्तुमकर्तुमन्यथाकर्तुं समर्थया स्वाभिन्नया स्वस्वरूपया शक्त्या समुपेत इत्यङ्गीक्रियते।

उपासनाविधौ कर्म-योग-ज्ञानानामपेक्षया भक्तेर्गरीयस्त्वख्यापनं नाम तन्त्रशास्त्रस्य विशिष्टः सिद्धान्तः। आलवार-अलियार-सिद्ध-नाथ-सन्त-प्रभृतीनामुपदेशेषु तदेतस्य चूडान्त उत्कर्षो द्रष्टुं शक्यते। एतदेव तत्पाथेयमासीद् येन हि परतन्त्रतावेलायां राष्ट्रमेतत् स्वीयां संस्कृतिं साहित्यं च ररक्ष। साम्प्रतिको गांधिवादो भक्तिधाराया एव नूतना परिणतिः। विश्वसिमो वयं यदजस्रं प्रवहन्त्यां भारतीयसंस्कृतिपरम्परायामद्यापि वर्तते जीवनदायिनी सा शक्तिर्यया न केवलं नूतनभारतराष्ट्रस्य निर्माणायाखण्डाया भारतीयायाः संस्कृतेः, अपि तु साम्प्रतिकस्य जाति-भाषा-राज्य-राष्ट्रादिसंकुचितभावनाग्रस्तस्य कलहायमानस्य विनाशोन्मुखस्य मानवस्य त्राणाय विश्वसंस्कृतेरपि द्वाराण्युद्घाटितानि स्युरिति। प्रायः साम्प्रतिके जगति वर्तमानानां सर्वेषां धर्माणामनुयायिनो जना निवसन्त्यत्र भारते वर्षे। निबन्धेऽस्मिन् व्याख्यातप्रायया तान्त्रिक्या भक्तिपरम्परया, सूफीसम्प्रदायस्य, ख्रीष्टीयसम्प्रदायस्य, यहूदीसम्प्रदायस्य च भक्तिपरम्पराणां समन्वयेन विकासं लम्भिता भारतीया संस्कृतिर्विश्वसंस्कृतितो नातीव भिन्ना स्यादिति शम्॥ □

---

१. महार्थमञ्जरीपरिमले, पृ० १४५ (वाराणसेयसंस्कृतविश्वविद्यालयसंस्करणम्)।

२. तत्रैव, १३० पृष्ठमवलोकनीयम्।

## साम्प्रतिकसंग्रहेषु काश्मीरागमग्रन्थाः

स्वातन्त्र्याधिगमात् पूर्वं काश्मीरसंस्कृतग्रन्थमालायां नैके काश्मीर-शैवशाक्तागमग्रन्थाः प्रकाशिताः। दैवदुर्विलसितमेतद् यत् स्वातन्त्र्यसूर्योदयसमकालमेव काप्यपावनी दुर्ग्रहच्छाया तत्र प्रसृता, येन पुण्यतममेतत् प्रकाशनकार्यमवरुद्धमद्यापि न प्राणिति। सन्ति भूयांसि शास्त्राणि, दार्शनिका ग्रन्थाः, भक्तिभावभरितानि दार्शनिकदृष्टिदृब्धानि च स्तोत्राणि हस्तलेखरूपेण वर्तमानानि इतस्ततः प्रसृतान्यद्यापि प्रकाशनपदवीमधिरोढुं कालदैवतमाराधयन्ति।

नमः कालाय कलविकरणाय। काशीस्थहिन्दूविश्वविद्यालयेन, वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनाख्येन पुस्तकालयेन, लक्ष्मणपुरस्थाखिलभारतीयसंस्कृतपरिषदा च व्यतीतेषु कतिपयेषु वर्षेषु शारदालिपिमयाः काश्मीरागमग्रन्थाः संगृहीताः। तत्र दृश्यन्तेऽनेके विशिष्टा ग्रन्था अमुद्रिता अपरिज्ञाताश्च। तेषामत्र संक्षिप्तः परिचय उपस्थाप्यते त्रिविभागविभक्तः। तत्र प्रथमे विभागे दिव्योपदिष्टानामागमग्रन्थानाम्, द्वितीये विभागे मानुषमतिदृब्धानां दार्शनिकग्रन्थानाम्, तृतीये च विभागे स्तोत्रग्रन्थानां स्वरूपनिर्देशो वर्तितेतराम्।

### आगमग्रन्थाः

वीरावलीग्रन्थो नित्याषोडशिकार्णवस्य भास्कररायधृतेषु चतुष्षष्टितन्त्रपरिगणनपरेषु श्लोकेषु ( १।१४-२२ ) दृश्यते। एष ग्रन्थ आचार्येणाभिनवगुप्तेन तन्त्रालोके सबहुमानमनेकेषु स्थलेषु स्मृतः। अस्य ग्रन्थस्य शारदालिपिनिबद्धा भूर्जपत्रमयी पावनी मातृका हिन्दूविश्वविद्यालयाधिकारिणां समक्षं विक्रयार्थमुपस्थिता वर्तते। एवमेव च दशाष्टादशभेदभिन्नेषु सिद्धान्तागमेषु श्रूयते चन्द्रज्ञानसंहिता। अस्याः संहितायाः श्लोका यत्र तत्रोद्धृता उपलभ्यन्ते। अस्या अपि मातृका तत्र दृश्यते। द्वैतवादिशैवसिद्धान्तमतावलम्बिना ख्रीष्टद्वादशशताब्दीभवेन श्रीमताऽघोरशिवाचार्येण मृगेन्द्रवृत्तिदीपिकायां विद्यापादे—"हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेद-सांख्यकौलादितन्त्राणाम्" ( पृ० ७४ ) इत्याचार्योक्त्या मत्स्येन्द्रनाथः कौलशास्त्रप्रवर्तकः प्रथम आचार्य इति प्रतिपादितम्। ख्रीष्टदशमशताब्दी-

भवोऽभिनवगुप्ताचार्योऽपि तन्त्रालोकप्रथमाह्निकसप्तमपद्ये सकलकुलशास्त्रावतारकतया प्रसिद्धं मच्छन्दविभुं स्तौति। हिन्दूविश्वविद्यालयसंग्रह एव मत्स्येन्द्रयोगशास्त्रमथ च मत्स्योदरनामा ग्रन्थो दृश्यते। श्रीसंहिता, त्रिकशास्त्रम्, सौभाग्यरत्नाब्धिः शिवशास्त्रम्, यामलतन्त्रम्, बृहद्वातुलीयतन्त्रम्, वामकेश्वरीपटलः, त्रिपुरातिलकमित्येते ग्रन्थाश्च तत्रोपलभ्यन्ते। सरस्वतीभवनपुस्तकालये ललितास्वच्छन्दसंहिता-वैष्णवशास्त्र-स्वच्छन्दभैरव-बालतन्त्र-डाकिनीकल्प-यक्षिणीसाधनतन्त्र-शैवनिर्वाणतन्त्र-वीरभद्रमहातन्त्र-रत्नमालाप्रभृतय आगमग्रन्था दृश्यन्ते। अखिलभारतीयसंस्कृतपरिषदि श्रीवत्साङ्कविरचितविवृतिसहितो भुवनमालिनीकल्पः, उद्वाहतन्त्रम्, ज्ञानतिलकं चोपलभ्यन्ते।

### दार्शनिक ग्रन्थाः

श्रीमता डा० कान्तिचन्द्रपाण्डेयमहोदयेन अभिनवगुप्तपादाचार्यस्य चतुश्चत्वारिंशद्ग्रन्थानामुल्लेखः 'अभिनवगुप्त' इत्याख्ये ग्रन्थे द्वितीयसंस्करणे २७-२८ पृष्ठयोर्व्यधायि। तत्र योगतत्त्वस्य, अनुत्तरविंशिकायाः, भैरवस्तोत्रटीकायाश्च नामानि न दृश्यन्ते। सर्वेषामेषां ग्रन्थानां हस्तलेखा हिन्दूविश्वविद्यालयस्य संग्रहे दृश्यन्ते। अभिनवगुप्तकृतिरनुत्तरशतकम्, तन्त्रोच्चयः, सटीको बिम्बप्रतिबिम्बवादश्चापि तत्र दृश्यते। बिम्बप्रतिबिम्बग्रन्थः सरस्वतीभवनेऽपि वर्तते। मन्ये सोऽभिनवगुप्तकृतिर्बिम्बप्रतिबिम्बवाद एव स्यात्। नागविपश्चितश्चित्तसन्तोषत्रिंशिका त्रिष्वपि स्थलेषु समुपलभ्यते। नागविपश्चित एव परमार्चनत्रिंशिका सरस्वतीभवने लक्ष्मणपुरसंस्थायां च दृश्यते, परमाद्वयद्वादशिका च केवलं सरस्वतीभवनपुस्तकालये। राजानकभास्करकण्ठस्य ईश्वरप्रत्यभिज्ञाविमर्शिन्याष्टीका सुप्रथितैव। अस्यान्येषामपि द्वित्राणां ग्रन्थानां नाम 'अभिनवगुप्त' ग्रन्थे दृश्यते। चित्तानुबोधकमहाशास्त्रं तत्र नास्ति। अस्य हस्तलेखो हिन्दूविश्वविद्यालयसंग्रहे वर्तते। शिवोपाध्यायः क्षेमराजविरचितं विज्ञानभैरवोद्योतं पुनरुज्जीवयामास। अस्यैव कूष्माण्डभाष्यम्, विधितन्त्रटीका, उपनयनतन्त्रटीका, अनुभवबोधकश्रीविद्यामन्त्रव्याख्या, परमार्थसारसंग्रहटीका, बहुरूपगर्भटीका, पञ्चायतनपद्धतिः, पक्षयोगपद्धतिः, श्रीविद्यामन्त्रविवरणमित्येते ग्रन्था हिन्दूविश्वविद्यालयसंग्रहे दृश्यन्ते। शिवोपाध्यायः प्रकाशोपाध्यायस्य पुत्र आसीदित्यपि हस्तलेखेभ्यो ज्ञायते। प्रत्यभिज्ञामहोदधिः कस्य कृतिनः कृतिरिति यद्यपि न ज्ञायते, तथाप्येष कश्चन महत्त्वाधायकः प्रत्यभिज्ञाग्रन्थो भवेदिति संभाव्यते।

मथुरानाथस्य सिद्धान्तमनोज्ञमञ्जरी, निर्वाणयोगोत्तरम्, निरुत्तरवाद इत्येतेषां सर्वेषां मातृका अपि हिन्दूविश्वविद्यालये दृश्यन्ते। सिल्हणकृतिः स्वात्मोपलब्धिशतकं हिन्दूविश्वविद्यालये लक्ष्मणपुरसंग्रहे च वर्तते। भवद्भट्टस्य स्पन्दवृत्तिः, सोमनाथभट्टोपाध्यायस्य च ज्ञानमञ्जरी लक्ष्मणपुरसंग्रहे द्रष्टव्ये। सटीका आरम्भसिद्धिः, भट्टछुछुमविरचिता लघुवृत्तिश्च सरस्वतीभवनसंग्रहे वर्तेते।

## स्तोत्रग्रन्थाः

तत्त्वगर्भस्तोत्रं भट्टप्रद्युम्नकृतिरित्यस्माभिरन्यत्र प्रकाशितम्। तद्वज्ज्ञानगर्भस्तोत्रमपि प्राचीनं दार्शनिकं स्तोत्रम्। कस्य कृतिरिति तु नाद्यापि ज्ञायते। स्पन्दप्रदीपिकाकारेण उत्पलवैष्णवेन, स्पन्दकारिकाविवृतिकारेण रामकण्ठेन, क्षेमराजप्रभृतिभिश्चैतद् यत्र तत्रोद्धृतम्। अस्य हस्तलेखो हिन्दूविश्वविद्यालयाधिकारिणां समक्षं विक्रयार्थमागतः। अत्रैव शिवोपाध्यायरचितटीकया सह वर्तमानस्य बहुरूपगर्भस्तोत्रस्य, सटीकायाः पञ्चस्तव्याः, चतुष्टीकासनाथस्य भैरवस्तोत्रस्य, मच्छन्दस्तुतेः, स्पन्दकारिकाविवृतिकारस्य राजानकरामकण्ठस्य शिवस्तोत्रस्य च मातृकाः सन्ति। बहुरूपगर्भस्तोत्रस्यानेका मातृका लक्ष्मणपुरसंग्रहे सरस्वतीभवनपुस्तकालये च सन्ति। तत्र लक्ष्मणपुरसंग्रहे मातृकैका अनन्तशक्तिपादविरचितटीकया सह वर्तते। एष चानन्तपादो वातूलनाथसूत्रव्याख्यातृतो भिन्नोऽभिन्नो वेति ग्रन्थावलोकनत एव निश्चेतुं शक्येत। अवधूतसिद्धपादस्य भक्तिस्तोत्रं लक्ष्मणपुरसंग्रहे दृश्यते। क्षेमराजस्य भैरवानुकरणस्तोत्रं सटीको लघुस्तवः पञ्चस्तवी च सरस्वतीभवनपुस्तकालये वर्तन्ते।

काश्मीरागमश्रद्धालूनां पुरत इमे केचन महत्त्वाधायका ग्रन्था अत्रोपन्यस्ताः। सत्वरमेव सर्वेषामेषां प्रकाशनं संजायेतेत्यभिलषेयुः सर्वेऽपि मनीषिणः। लक्ष्मणपुरसंस्थायां सरस्वतीभवनपुस्तकालये च तत्रत्या ग्रन्था लब्धुं शक्यन्ते सूच्यादिषूपनिबद्धानां संख्यानामाधारेण। परं हन्त! हिन्दूविश्वविद्यालये न वर्तते तादृशी व्यवस्था। पुस्तकक्रयवेलायां यथा तथा लिखिता काचन नामावली केवलं शरणं ग्रन्थपरिचयसंपादनाय। ग्रन्थास्तु वेष्टनेषु सीदन्तः स्वोद्धारकामनया तप आचरन्त इवावलोक्यन्ते। बाहुल्येन विशिष्टा ग्रन्थास्तत्रत्ये संग्रह एव वर्तन्ते। सर्वेषामेषां संस्थानानामधिकारिणो ग्रन्थरत्नानामेतेषां प्रकाशनाय बद्धादरा बद्धपरिकराश्च भवेयुरित्येव विद्यागुरोर्विश्वनाथस्य चरणयोरभ्यर्थना॥ □

# काश्मीरेतिहासः

प्रस्तावना-आमुख-परिशिष्ट-अनुक्रमणिकाप्रभृतिभिः समलङ्कृतेऽस्मिन् ग्रन्थे १९०१ विक्रमाब्दादारभ्य २००० विक्रमाब्दं यावदमरभारतीक्षेत्रे देशे विदेशेषु च यावन्ति कार्याण्यकारिषत विद्वद्भिस्तावतां कार्याणाम्, तदाचरन्तीनां संस्थानाम्, तत्प्रतिपालयतां विदुषाम्, तदभिव्यञ्जयतां गवेषितप्राचीनग्रन्थानाम्, नवप्रणीतग्रन्थानाम्, पत्रपत्रिकादीनाम्, तत्तद्-ग्रन्थप्रकाशनसंरक्षणादीनां च प्रकाशको हीतिहासग्रन्थोऽखिलभारतीय-संस्कृतसाहित्यसंमेलनयोजनान्तर्गतेषु विश्वसंस्कृतशताब्दीग्रन्थेषु जम्बू-काश्मीरभागः प्रकाशितः ।

ततः प्राक्तनानां काश्मीरशासकानां नृपाणाम्, काश्मीरेषु संस्कृत-साहित्यविकासकानां मनीषिणां च यावदुपलब्धपरिचयान् संचेतुमुचित-संचारमाचरतोऽस्य श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्यायासेन 'काश्मीरेतिहास'व्यपदेशेन प्रकाशमासादयतीदं पुस्तकम् ।

प्रस्तावनायामत्रत्यायां भारतप्रशासनस्य मन्त्रिणां भूतपूर्वजम्बू-काश्मीरमहाराजाधिराजानां डा० कर्णसिंहमहोदयानामियमुक्तिः सर्वथा यथार्थैव यत्—"भामहस्यालङ्कारवादः, आनन्दवर्धनस्य ध्वनिवादः, वामनस्य रीतिवादः, कुन्तकस्य वक्रोक्तिवादः, भट्टनायकस्य भुक्तिवादः, अभिनवगुप्तमम्मटयोरभिव्यक्तिवादः, महिमभट्टस्यानुमितिवादः, क्षेमेन्द्रस्यौ-चित्यवादश्च पवित्रेऽस्मिन्नेव स्वर्णिमक्षेत्रे जनिं प्रापुः" इति । अस्मिन् ग्रन्थे काश्मीरप्रदेशस्य प्राकृतिकवैभवस्य, शासकानाम्, मनीषिणाम्, स्वातन्त्र्यानन्तरसंवृत्तवृत्तान्तानां च यथावृत्तमितिवृत्तं प्रौढप्राञ्जल-संस्कृतभाषया प्रतिपादितमित्यभिनन्दनार्होऽयं प्रयासः, विशेषेण संस्कृत-भाषायामितिहासग्रन्थानामभावप्रतिपादके प्रवादे सत्याधुनिके जागरूके ।

आमुखे स्वर्गीयविद्यावाचस्पतिमधुसूदनझामहाभागैर्गवेषिता नवीना चतुर्विधा युगोद्भावना संवत्सरतालिका च विशेषतोऽवधेया मनीषिणाम्, यत्र हि भारते वर्षे पूर्वं प्रवृत्तानामधुना च वर्तमानानां पञ्चविंशति-विधानां संवत्सराणां परिचयो वर्तते ।

प्रस्तुतग्रन्थस्य मूललेखको विद्यापीठप्राध्यापकः पण्डितमार्तण्डः श्रीहनुमत्प्रसादशास्त्री आसीत्। तस्मिन् विद्वद्वरेऽमरपुरसदस्सदस्यतामिते ग्रन्थस्यास्य मुद्रणयन्त्रालये प्रेषणाय, पूर्णतापादनाय, सम्पादनाय च विद्यापीठस्य येषां कतिपयपण्डितानां सेवायाः सदुपयोगः कृतः, तेषां नामानि आमुखे 'ण'पृष्ठे द्रष्टव्यानि।

अस्मिन् ग्रन्थे प्रारम्भे काश्मीरप्रदेशवर्णनं विधाय संक्षेपेण महाकवि-कल्हणकृता सूत्ररूपा राजतरङ्गिणी समुद्धृता। ततो राजतरङ्गिणीवर्णिता काश्मीरराजावलीसूची, कल्हणादन्यैर्वर्णिता हिन्दुराजावली, मुस्लिम-राजावली, प्रथमगोनन्दादिवंशीयराजावली च संक्षेपेण समुपन्यस्ता। तदनु गोनन्दवंशीयराजावली, विक्रमादित्यज्ञातिवंशीयराजावली, प्रथम-युधिष्ठिरात् परं गोनन्दवंशीयराजावली, कर्कोटवंशीयराजावली, उत्पल-वंशीयराजावली, यशस्करादयः काश्मीरशासकाः, प्रथमलोहरवंशीया राजावली, द्वितीयलोहरवंशीया राजावली, जयसिंहादयः काश्मीरशासकाः काश्मीरराज्याधिकारिणो मुस्लिमशासकाश्च विस्तरेण वर्णिताः। ततः परं जम्वू(डोंगरा)प्रदेशः, दुर्गरराजानो मुस्लिमविजेतारः, संस्कृतोपासकाः, पूर्वे विद्वांसः, परिशिष्टाः काश्मीरप्रसिद्धा विद्वांसश्चानुवर्णिताः। परि-शिष्टभागे स्वातन्त्र्यानन्तरं जम्वू-काश्मीरराज्यस्य स्थितिः, तत्समीप-वर्तिनो गान्धारमद्रादिदेशा इत्येवमादयो विषयाः काश्मीरराज्यस्य भारतवर्षाभिन्नाङ्गताप्रतिपादका निरूपिताः। अन्ते च राज्यस्यास्य संस्कृति-जनसंख्या-शिक्षा-चिकित्सादयः सामयिका विषयाः समुल्लिखिताः।

समालोचनप्रसङ्गेन ग्रन्थेऽस्मिन् महत्त्वाधायकानि कानिचनापेक्षितानि संशोधनानि परिवर्धनानि चात्र समुपस्थाप्यन्ते, येनास्य द्वितीये संस्करणे समावेशितानि तानि स्युरिति।

"शैवसिद्धान्तानाम्, शैववेदान्तस्य, वीरशैवमतस्य चेत्यादीनां नाना-मतानामुद्गमस्थानं काश्मीरदेश एव" (पृ० १२) इति नेदं तथ्यम्, गङ्गायमुनयोर्मध्यवर्ती अन्तर्वेदिप्रदेशः शैवागमानाम्, दक्षिणदेशश्च वीरशैवमतशैववेदान्तयोरित्येवेतिहाससंमतः पन्थाः। काश्मीरशैवसिद्धा-न्तानामुद्भवोऽत्रेति तु तथ्यम्। "एतस्याः स्पन्दकारिकाया विवरणं जम्बूप्रविभागीयग्रन्थपरिचयप्रसङ्गेन प्राग् दत्तमेव" (पृ० १२), "तेषु केषाञ्चित् परिचयः पूर्वोल्लेखाल्लब्धुं शक्यः" (पृ० १२) अत्रोभयत्र चर्चितः प्रसङ्गो ग्रन्थस्य परवर्तिनि भागे वर्तते, न तु पूर्ववर्तिनि। मन्ये

ग्रन्थोऽयं येन क्रमेण ग्रन्थकारेण विरचितस्तत्र पश्चात् किञ्चित् परिवर्तनं कृतं स्यात्। अथवैतद्विषयप्रतिपादकः कश्चनोऽन्य एव ग्रन्थः स्वकीयोऽत्र ग्रन्थकारस्याभिप्रेतः स्यात्। सर्वथा सम्पादकैः परिमार्जयितव्याऽऽसीदियं त्रुटिः। अत्र १४ पृष्ठे नैषधचरितकाव्यनिर्माता[1] श्रीहर्षः, १४-१५ पृष्ठयोः [2]काशिकाकारौ वामनजयादित्यौ, १५ पृष्ठे ४४ पृष्ठे च महाभाष्यकारः [3]पतञ्जलिश्च काश्मीरोद्भवा इति कथनं प्रायोवादमात्रम्। एवमेव २०५ पृष्ठे [4]रामचरितकाव्यमुपलभ्यते न वेति नैव समसूचि। २०७ पृष्ठे आचार्याभिनवगुप्तविषये 'साहित्यव्याकरणयोः' इत्यस्य स्थाने 'साहित्य-तन्त्रशास्त्रयोः' इति पदयोजना समुचिता प्रतिभाति।

२०३-२०४ पृष्ठयोः, २७३ पृष्ठे च काश्मीरिकत्वेन गवेषितानां विदुषां नामावली वर्ततेऽकारादिवर्णानुक्रमेण स्थापिता। अत्र शास्त्रक्रमेण काल-क्रमेण च नामावलेरस्याः समुपस्थापनं समुचितमासीदसाङ्कर्याय। अपि चात्र आद्यनाथः, गोरक्षनाथः, नागार्जुनः, पुण्यानन्दः, श्रीहर्षः, सोमशम्भुः, अघोरशिवश्चेति सप्त विद्वांसो नैव काश्मीरिका इत्यनुपदमेव प्रदर्शयिष्यते।

२१० पृष्ठे स्मृता अनुत्तरप्रकाशपञ्चाशिका परापञ्चाशिकानाम्ना प्रसिद्धा तन्त्रशास्त्रग्रन्थेषु। ग्रन्थोऽयं रुद्रयामलस्यांशविशेष इत्यपि दृश्यते तत्रत्यासु मातृकासु। अतश्च ग्रन्थकर्तृत्वेन धृत आद्यनाथो भगवान् शिव एव।

---

१. श्रीहर्षसंबद्धे द्वे जनश्रुती प्रथिते स्तः। एकया काव्यप्रकाशकारो मम्मटो नैषधकारस्य मातुलेय आसीदिति ज्ञायते, अपरया च तस्य काश्मीर-यात्राप्रसङ्गे कलहायमानानामुदहारीणां भाषानभिज्ञत्वं ख्याप्यते। कथं नाम मम्मटभागिनेयस्य काश्मीरभाषानभिज्ञत्व संभवेत्। श्रीहर्षः कान्यकुब्जेश्वरस्य सभापण्डित आसीदिति तु निश्चितम्।

२. "काशिकेति देशतोऽभिधानम्, काशिषु भवा" (श्रीद्वारिकादासशास्त्रि-संस्करणम्, भा० १, पृ० ६) इति पदमञ्जरीकारहरदत्तमिश्रप्रामा-ण्येन काशिकावृत्तिर्वाराणस्यां विरचितेति ज्ञायते। उज्ज्वलदत्त-सृष्टिधर-माधवादयोऽप्यत्र संमताः।

३. व्याकरणेतिहासग्रन्थेषु महाभाष्यकारस्य पतञ्जलेः प्रदेशनिश्चयो न कृतः।

४. अभिनन्दस्य रामचरितं नाम काव्यं 'बड़ोदा'स्थितगायकवाड़संस्कृत-ग्रन्थमालायां १९२९ तमे ई०वर्षे प्रकाशितचरम्।

२१५ पृष्ठे स्पन्दकारिका स्पन्दनिर्णय इत्यादयो ग्रन्थाः कल्लटेन रचिता इत्युक्तम्। तन्न, ग्रन्थकृता स्वयमेवाग्रे २५६-२५७ पृष्ठयोः स्पन्दकारिका वसुगुप्तकृतिरथवा कल्लटकृतिरिति संदिह्य—"स्पन्दकारिका वसुगुप्तविरचिता वसुगुप्तशिष्यकल्लटमुखेन प्राकाश्यमनीयतेति न क्वापि वचनविरोधः समुदेति" ( पृ० २५७ ) इति समाहितम्। स्पन्दनिर्णयश्च क्षेमराजकृतिर्न तु कल्लटस्य। वस्तुतस्तु कल्लटेन स्पन्दकारिकावृत्तिः स्पन्दसर्वस्वाख्या, तत्त्वार्थचिन्तामणिः, मधुवाहिनी चेति[1] त्रयो ग्रन्था विरचिताः। स्पन्दसूत्राणि स्पन्दकारिका चेत्यनर्थान्तरम्। स्पन्दकारिकारचनाविषयके विवादे स्पन्दप्रदीपिकाकार उत्पलवैष्णवः, शिवसूत्रवार्त्तिककारो भट्टभास्कराचार्यश्च कल्लटकृतित्वपक्षं ख्यापयतः, अभिनवगुप्तस्तच्छिष्याः क्षेमराजादयश्च वसुगुप्तकृतित्वपक्षधराः। तदस्मिन् विवादास्पदे विषये पूर्वोक्तमेव समाधानं सर्वेषां सन्तोषाधायकं स्यात्। रामकण्ठविरचिता विवृतिः स्पन्दकारिकाया विद्यते, न तु स्पन्दनिर्णयस्येत्यप्यवधेयमत्र।

२२५ पृष्ठे क्षेमेन्द्रग्रन्थेषु न दृश्यते नाम गीतानिष्यन्दस्य। ग्रन्थस्यास्य श्लोकत्रयमृजुविमर्शिन्यां[2] महार्थमञ्जरीपरिमले च दृश्यते। ग्रन्थोऽयं प्रसिद्धस्यास्य क्षेमेन्द्रस्यैव कृतिः स्यात्।

[3]गाथासप्तशतीकारस्य सातवाहननृपतेर्हालस्य सभापण्डितो बृहत्कथाकर्ता गुणाढ्य ईशवीयायां प्रथमायां शताब्द्यां बभूवेति निश्चितमैतिहासिकानां मतम्। अत्र न कश्चन विवादस्यावसरः। गुणाढ्यस्य बृहत्कथां भूतभाषामयीमवलम्ब्यैव क्षेमेन्द्रो बृहत्कथामञ्जरीम्, सोमदेवश्च कथासरित्सागरं जग्रन्थ।

"गोरक्षनाथः सिद्धयोगिसम्प्रदायापरनामकनाथपथप्रवर्तकस्य श्रीमत्स्येन्द्रनाथयोगिनः शिष्यः प्रसिद्धो योगीन्द्रः" ( पृ० २२८ ) इति न

---

१. "तदुक्तमिति शिवसूत्रवृत्त्योर्मधुवाहिनीतत्त्वार्थचिन्तामण्योर्भट्टश्रीकल्लटपादैः" इत्यभिनवगुप्तोक्तिरीश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीस्था ( भा०२, पृ० ३० ) द्वयोरेतयोर्ग्रन्थयोस्तत्कर्तृत्वं साधयति। स्पन्दसर्वस्वाख्या वृत्तिस्तु मुद्रितैव वर्तते तन्नाम्ना।

२. ऋजुविमर्शिन्यां ७८, १५१ पृष्ठयोः, महार्थमञ्जरीपरिमले वाराणसीसंस्करणे च १०८, ११८ पृष्ठयोः श्लोकत्रयमेतद् द्रष्टव्यम्।

३. निर्णयसागराख्यमुद्रणालयतः प्रकाशिताया गाथासप्तशत्यास्तृतीयसंस्करणभूमिका द्रष्टव्या, पृ० ६, ६६

केवलं प्रस्तुतपुस्तकप्रबन्धकस्यैव मतम्, प्रायो बाहुल्येन प्रचरति प्रवाहोऽयं विपश्चिद्‌गोष्ठीष्वपि। प्रायोवादमात्रमेतत्। यतो हि मृगेन्द्रागमवृत्तिकारोऽघोरशिवाचार्यः—"हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेदसांख्यकौलादितन्त्राणाम्" (पृ० ७४) इत्येवं कौलसम्प्रदायस्य मत्स्येन्द्रोपज्ञत्वं प्रकटयति। तन्त्रालोकादिग्रन्थप्रामाण्येन मतस्यास्य सत्यता प्रमाणशतैः सिद्ध्यति। कलिकातासंस्कृतग्रन्थमालायां प्रकाशितेषु मत्स्येन्द्रनाथकृतित्वेन प्रसिद्धेषु कौलनिर्णयादिग्रन्थेषु तन्त्रालोकतद्विवेकयोरुद्धृता नैके ग्रन्था ग्रन्थकाराश्च कौलसम्प्रदायस्य स्मर्यन्ते। यदि गोरक्षनाथो मत्स्येन्द्रनाथस्य शिष्यः स्यात् तर्हि किमर्थं न स्मृतः स प्राचीनेष्वेषु ग्रन्थेषु ? अपि च, 'अमरौघशासनम्' इति नामधेयस्य ग्रन्थस्य काश्मीरेष्वेवोपलब्धिरभूदिति हेतोस्तस्य काश्मीरविद्वत्कृतित्वमित्यपि हेत्वाभासमात्रम्। महेश्वरानन्दस्य गोरक्षापरपर्यायस्य कृतिर्महार्थमञ्जरी सटीका काश्मीरत एव प्रकाशिता, किन्त्वत्र ग्रन्थकारः स्वयमेवात्मानं चोलदेशाभिजनं मनुते। एवमेव पुण्यानन्दामृतानन्दादीनां दाक्षिणात्यानां विदुषां ग्रन्थाः कामकलाविलासादय इदम्प्रथमतया काश्मीरेष्वेव प्रकाशिताः। नैतेषां काश्मीरोद्भवत्वं साधयितुं शक्यते।

"श्रीमदभिनवगुप्तपादरचिते दार्शनिकग्रन्थे प्रकाशविवेकाख्ये द्वे टीके अपि तेन विरचिते। अयमेवाचार्याभिनवगुप्तपादानां तन्त्रालोकमहार्णवस्य कर्णधारोऽप्यासीत्" (पृ० २३३)। जयरथेन प्रकाशाख्या टीका कस्य ग्रन्थस्य लिखितेत्यन्वेषणीयं वस्तु। विवेकाख्या च व्याख्या तन्त्रालोकस्येति सुप्रथितमेव। तदर्थमेवायं तन्त्रालोकमहार्णवस्य कर्णधारत्वप्रथां लेभे। अपि च, जयरथ एष वामकेश्वरीमतस्यापि काश्मीरग्रन्थमालायां प्रकाशितस्य व्याख्यातेति ज्ञेयम्।

"स (नागार्जुनः) च काश्मीरानध्युष्य तत्रत्यं शैवदर्शनं चाधीत्य 'नाग' नाम्ना प्रसिद्धिं गतः। तेन 'चित्तसन्तोषत्रिंशिका'नामकं पुस्तकं विरचितम्" (पृ० २३५) इति। चित्तसन्तोषत्रिंशिकायाः कर्ता नागभट्टः [1]परमार्चनत्रिंशिका-चिद्विमर्शिनीप्रभृतिग्रन्थानामपि रचयितृत्वेन प्रसिद्धः। ग्रन्थानामेषामवलोकनेन ज्ञायते ग्रन्थकारोऽयं शैवाचार्य इति, न तु

---

१. परमार्चनत्रिंशिका महार्थमञ्जरीपरिमले (पृ० १०८) अर्चनात्रिंशिकानाम्ना समुद्धृता। अस्य ग्रन्थस्य मातृका अपि वाराणसी-लक्ष्मणपुर-(लखनऊ) जोधपुरसंग्रहेषु समुपलभ्यन्ते।

बौद्धाचार्यः। गुह्यसमाजतन्त्रव्याख्याता नागबोधिनामा बौद्धाचार्यस्त्वितो भिन्न एव। बौद्धदार्शनिकनागार्जुनस्य रसशास्त्रप्रवर्तयितृनागार्जुनस्य च जन्मभूरान्ध्रप्रदेशोऽभिमन्यते। त्रिष्वेषु नागेषु चिद्विमर्शिनीकर्ता नागभट्टः कामकलाविलासटीकायां चिद्वल्ल्यामेवं स्मृतः—"तथा नागानन्दाः—विमर्शो नाम विश्वाकारेण वा, विश्वप्रकाशेन वा, विश्वोपसंहारेण वाऽकृत्रिमाऽहमिति स्फुरणम्" (पृ० ४) इति। चिद्विमर्शिनीग्रन्थस्य बीकानेरनगरस्थेऽनूपसंस्कृतपुस्तकालये स्थितायाः ६६६२ संख्याकाया मातृकायाः प्रथमे पत्रे दृश्यते तदेतद्वाक्यम्। तत्रैव पुष्पिकावाक्ये भवभूतिनाम्ना स्मृत एषः। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम् (भा० २, पृ० १९७) अभिनवगुप्तेन स्मृतो भट्टनागोऽस्मान्नागभट्टात् पृथगेवाचार्योऽथवाऽभिन्न इत्यन्वेषणीयम्। त्रिपुरासारसमुच्चयकर्ता नागभट्टोऽस्मात् पृथगेव स्यात्।

मृगेन्द्रागमभाष्यप्रणेता नारायणकण्ठः स्तवचिन्तामणिकाराद् भट्टनारायणात् पृथगेवाचार्य इति डा० कान्तिचन्द्रपाण्डेयकृते[1] ग्रन्थे स्पष्टम्।

कामकलाविलासकारः पुण्यानन्दाचार्यो दाक्षिणात्यो विद्वान्न तु काश्मीरिक इति पूर्वमवोचाम। योगिनीहृदयदीपिकादिग्रन्थकर्तुरमृतानन्दयोगिनो गुरुरयं कामकलाविलासे प्रायः पञ्चाशच्छ्लोकात्मके भगवत्यास्त्रिपुरसुन्दर्यास्तत्प्रतीकात्मकस्य श्रीचक्रस्य चान्तरवरिवस्यां रहस्यात्मिकां भावयामास। ग्रन्थोऽयं नटनानन्दकृतया चिद्वल्ल्याख्यया विस्तृतया व्याख्यया विभूषितो मद्रपुरीतो (मद्रास) मुद्रितः।

काव्यप्रकाशकारेण मम्मटेन चतुर्थोल्लासे रसस्वरूपनिरूपणप्रकरणे भरतमुनेर्नाट्यशास्त्रस्य रससूत्रव्याख्यातारश्चत्वार आचार्याः स्मृता लोल्लटशङ्कुकनायकाभिनवगुप्तनामानः। तत्राभिनवगुप्तपादः प्रथित आलङ्कारिकस्तान्त्रिकाचार्यश्च। अस्य नाट्यशास्त्रव्याख्यानमभिनवभारतीसमाख्यं मुद्रितं वर्तते। अन्येषां त्रयाणां भट्टोद्भटस्य च व्याख्यानं साम्प्रतं नोपलभ्यते। तत्र [2]लोल्लटो मीमांसकाचार्यः, शङ्कुको नैयायिकः,

---

१. "अभिनवगुप्त : एन हिस्टोरिकल एण्ड फिलासफिकल स्टडी" इत्याख्यस्य ग्रन्थस्य द्वितीये संस्करणे १७४ पृष्ठं द्रष्टव्यम्।

२. "इदं हि भरतसूत्रं तट्टीकाकृद्भिर्भट्टलोल्लटश्रीशङ्कुकभट्टनायकाभिनवगुप्तपादैश्चतुर्भिः क्रमेण मीमांसा-न्याय-सांख्य-अलङ्कारमतरीत्या चतुर्धा व्याख्यातम्" (वामनीटीका, चतुर्थं संस्करणम्, पृ० ८७)।

नायकश्च सांख्याचार्य इति प्रसिद्धिः । आचार्याणामेषामेतद्विषयका ग्रन्था अपि साम्प्रतं नोपलभ्यन्ते । किन्त्वालङ्कारिकयोर्भट्टोद्भटवामनयोः[१] क्रमदर्शनाचार्यत्वेन, [२]लोल्लटस्य च स्पन्दकारिकाव्याख्यातृत्वेन समुल्लेखो दृश्यते । [३]नायकविरचितस्य कस्यचन स्तोत्रग्रन्थस्य द्वित्राः श्लोका उद्धृता उपलभ्यन्ते । रत्नकीर्तिज्ञानश्रीमित्रादयो बौद्धनैयायिकास्तान्त्रिकोपासनाविधिमनुवर्तन्ते स्मेति सुप्रथितम् । एवमेवैते लोल्लटादयो विभिन्नदर्शनपदवीष्ववस्थिता अपि तान्त्रिकोपासनाविधिमनुसरन्तस्तदनुगुणां नाट्यशास्त्ररससूत्रव्याख्यां विभिन्नाभिर्दृष्टिभिरवलोकयन्तः सममेव दार्शनिका आलङ्कारिकाश्चासन् । एवं च काश्मीरप्रदेशस्य मिथिलाप्रदेशस्य चायमद्भुतो विद्याव्यासङ्गप्रकारः ।

काश्मीरमण्डले रामकण्ठनामानस्त्रयो विद्वांसः सुप्रथिताः । एकः स्पन्दशास्त्रव्याख्याता स्तोत्रकारश्च । अपरौ सिद्धान्तशैवागमव्याख्यातारौ नारायणकण्ठस्य परमगुरु-सुतौ । स्पष्टीकृतं चैतत् श्रीमता डा० कान्ति-

---

१. "श्रीमदुज्जटोद्भटादिनानागुरुपरिपाटीसन्ततिः" (पृ० १९२) इति तन्त्रालोकविवेकधृतक्रमकेलिवचने भट्टोद्भटः क्रमदर्शनगुरुपरम्परायां स्मृतः । अद्वयसम्पत्तिवार्त्तिककारः संवित्प्रकाशकारश्च वामनो हर्षदत्तसूनुरप्यस्यामेव परम्परायां स्मर्यते ।

२. "भट्टलोल्लटेनापि तदाद्यन्त इत्येवमेव व्याख्यायि स्ववृत्तौ" (पृ० ३४) इति क्षेमराजकृतस्पन्दनिर्णयप्रामाण्येन लोल्लटस्य स्पन्दकारिकाविवृतिप्रणेतृत्वमवगम्यते ।

३. नपुंसकमिदं नाथ परंब्रह्म फलेत् कियत् ।
तत्पौरुषनियोक्त्री चेन्न स्यात् त्वच्छक्तिसुन्दरी ॥

इति भट्टनायकस्य श्लोकोऽयं क्षेमराजेन स्तवचिन्तामणिव्याख्यायां (पृ० ८४), स्पन्दनिर्णये (पृ० १८) च समुद्धृतः । ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां (भा० ३, पृ० ९६) भट्टाभिनवगुप्तेनापि "यदाह मीमांसकाग्रणीर्भट्टनायकः" इत्युक्त्वा श्लोक एष स्मृतः—

महान्ति पातकान्याहुर्यदाज्ञावशतः सुराः ।
पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते ॥ इति ।

काव्यप्रकाशव्याख्यातृभिर्नायकः सांख्याचार्यत्वेन स्मृतः, अभिनवगुप्तमतेनानेन तु स मीमांसकाग्रणीर्विद्यते । अत्र हेतुश्चिन्तनीयः ।

चन्द्रपाण्डेयेन[1]। इदमत्रावधेयम्—[2]भगवद्गीतायाः शैवसम्प्रदायानुयायिन्या व्याख्याया विरचयिता रामकण्ठ एभ्यो भिन्नोऽभिन्नो वेति साम्प्रतं निर्णयसापेक्षम्। [3]मतङ्गतन्त्रव्याख्याता च रामकण्ठो नारायणकण्ठसूनुरेव, न तु स्पन्दशास्त्रव्याख्याता रामकण्ठ इति।

श्रीहर्षो नैषधकाव्यकर्ता कान्यकुब्जदेशीयो गौडदेशीयो वेत्यत्र वर्तते विदुषां विवादः। स्वग्रन्थगौरवख्यापनाय तस्य प्रामाण्याय च स काश्मीरान् जगाम। तत्र कस्मिंश्चित् कूपोद्देशे जलाहरणाय समागतयोर्विवदत्योर्जलहारिण्योस्तत्रत्यां भाषामजानानोऽपि श्रीहर्षः स्मृतिशक्त्युत्कर्षेण सम्पूर्णं विवादवाक्यजालं यथायथं नृपतिसमक्षं श्रावयामासेति किंवदन्ती तस्य काश्मीरानभिजनत्वमेव ख्यापयितुमलम्।

सद्योज्योतिर्विरचिता न केवलं नरेश्वरपरीक्षा, अपि त्वन्येऽपि बहवो ग्रन्थाः सन्तीति डा० कान्तिचन्द्रपाण्डेयकृते [4]ग्रन्थेऽत्रलोकनीयम्। अयमेव खेटपाल-खेटकनन्दन-सिद्धगुरुप्रभृतिनामभिः प्रसिद्धः काश्मीरागमग्रन्थेषु सिद्धान्तशैवागमग्रन्थेषु चेति।

---

१. पूर्वोद्धृतस्य ग्रन्थस्य १५८,१७३-१७५ पृष्ठान्यवलोकनीयानि।

२. राजानकरामकण्ठविरचितसर्वतोभद्राख्यविवरणोपेताया भगवद्गीतायाः काश्मीरग्रन्थमालाप्रकाशितायाः समाप्तौ कविवंशवर्णनापरः श्लोकोऽयम्—

> यो नारायण इत्यभूच्छ्रुतनिधिः श्रीकान्यकुब्जे द्विज-
> स्तद्वंशे स्वगुणप्रकर्षखचितो मुक्ताकणाख्योऽभवत्।
> तस्यैषा सदृशानुजेन रचिता रामेण विद्वज्जन-
> श्लाघ्यत्वात् सफलश्रमेण भगवद्गीतापदार्थप्रभा॥ ५॥ इति।

स्वकीय ईदृशः परिचयो न केनाप्युपर्युक्तेन रामकण्ठेन प्रदत्त इति तेभ्यः सर्वेभ्य एष विलक्षण एव स्यात्। अथापि स्पन्दशास्त्रव्याख्यात्रा रामकण्ठेनास्याभेदस्थापकानि प्रमाणान्यन्वेषणार्हाणि, न नारायणकण्ठपरमगुरुपुत्राभ्याम्।

३. अत्र प्रमाणतया रामकण्ठकृतभगवद्गीताविवरणसंस्करणे पूर्वोक्ते भूमिकायाम् (पृ० ११) उद्धृतः श्लोक एष द्रष्टव्यः—

> श्रीमद्विद्यापादे नारायणकण्ठसूनुना रचिता।
> वृत्तिरियं मातङ्गे काश्मीरकरामकण्ठेन॥ इति।

४. पूर्वोद्धृतस्य ग्रन्थस्य १७० पृष्ठमवलोकनीयम्।

सोमशम्भुना विरचितः कर्मकाण्डक्रमावलीनामको ग्रन्थो यद्यपि काश्मीरग्रन्थमालायामपि[१] मुद्रितस्तथापि सोमशम्भुर्नैव काश्मीराभिजनः। ग्रन्थस्यास्य सम्पादकेन तत्रैव ( पृ० ४ ) भूमिकायामङ्गीकृतमेतत्। वस्तुतस्त्वेष शैवाचार्याणां मत्तमयूर-कदम्बमठिका-शङ्खमठिका-रणिपत्त-आमर्दकवंश्यानां मध्यदेशवर्तिनामन्तेवासिपरम्परामलञ्चकार।

शिवदृष्टिनिर्माता सोमानन्दो यद्यपि [२]परात्रीशिकामपि व्याख्यातवानित्यभिनवगुप्तादिग्रन्थप्रामाण्येन ज्ञायते, तथापि परात्रीशिकातात्पर्यदीपिका नैव सोमानन्दस्य ग्रन्थः, किन्त्वन्यस्यैव कस्यचनाज्ञातनामधेयस्य लेखकस्येति तद्ग्रन्थभूमिकावलोकनतो ज्ञायते। अनेनैव ग्रन्थेन सह मुद्रितं शाक्तविज्ञानमेव सोमानन्दकृतिरिति ज्ञेयम्।

कल्हणकृते राजतरङ्गिणीग्रन्थे "महाव्रतिना तेन हेलाराजद्विजन्मना" इत्युक्तम्। अत्र "महाव्रतिना इति विशेषणेन प्रतीयते यदसौ संभवतो नैष्ठिको ब्रह्मचार्यासीदिति" (पृ० २७०)। तन्न। वस्तुतस्तु सिद्धान्तशैव-पाशुपत-कालामुख-कापालिकादिशैवभेदेषु महाव्रतिनोऽपि परिगण्यन्ते। तेन हेलाराजो महाव्रतिनां सम्प्रदायमनुसरति स्मेत्येवार्थोऽस्य शब्दस्य मन्तव्यः।

अद्वयसम्पत्तिवार्त्तिक-संवित्प्रकाशादिग्रन्थानां रचयिता वामनदत्त-वामननाथादिपर्यायभाग् आचार्य एव ह्रस्वनाथ इति लुप्तागमसंग्रह-द्वितीयभागोपोद्घाते विस्तरेण प्रतिपादयिष्यते।

अघोरशिवाचार्योऽपि न काश्मीराभिजनः, न च भट्टनारायणकण्ठात्मजस्य रामकण्ठस्य शिष्यः, अपि तु चोलदेशाभिजनोऽसौ दाक्षिणात्यः,

---

१. ग्रन्थस्यास्य पाण्डिचेरीतोऽभिनवं संस्करणं १९६३ ई० वर्षे प्रकाशितम्। इतः पूर्वमपि १९३५ ई० वर्षे देवकोट्टैनगरस्थशिवागमसिद्धान्तपरिपालनसंघेन प्रकाशितमस्य संस्करणम्।

२. सोमानन्दस्य परात्रीशिकाविवृतिरभिनवगुप्तकृतपरात्रीशिकाव्याख्यायां ६२-६३, ९५, ९९, ११७, २६८ पृष्ठेषूद्धृता द्रष्टव्या। अपि च—

श्रीसोमानन्दकल्याणभवभूतिपुरोगमाः ।
तथा हि त्रीशिकाशास्त्रविवृतौ तेऽभ्यधुर्बुधाः ॥ (१३।१४९-१५०)

इति तन्त्रालोकप्रामाण्येनापि तस्याः सत्त्वं प्रतीयते। अत्र भवभूतिरपि परात्रीशिकाशास्त्रव्याख्यातृषु स्मृतः। चिद्विमर्शिनीग्रन्थस्य बीकानेरमातृकायां नागभट्टो भवभूतिनाम्नापि स्मृत इत्यवोचामाऽत्रैव। उत्तररामचरितकारः परात्रीशिकाव्याख्याता चिद्विमर्शिनीकारश्च किमभिन्नाः ?

गुरुश्चास्य सर्वात्मशिव आसीदिति तत्त्वत्रयनिर्णयव्याख्यास्थितान्तिम-पद्येन[1] प्रतिपाद्यते। तेन—"असौ 'कोल'स्थित'कुण्डिन'कुलोद्भवोऽभूदिति (पृ० २७३) इत्यत्र 'कोल' इत्यस्य स्थाने 'चोल' इति पठनीयम्।

एवमत्र ग्रन्थस्यास्य काश्मीरेतिहासाख्यस्य प्रामाण्याभिवर्धकानि कानिचन संशोधनानि परिवर्धनानि च समुपस्थाप्यान्ते पुनरपि ग्रन्थकार-सम्पादक-प्रकाशकानभिवर्धयामः संस्कृतभाषायामितिहासग्रन्थानामभाव-प्रतिपादकस्य प्रवादस्य दूरीकरणाय सततोद्यतानिति शम्॥ □

---

१. श्रीमद्घोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया
लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेष्वलङ्कुर्वता।
श्रीसर्वात्मशिवाङ्घ्रिपद्मरजसामाराधकेनामला
श्रीतत्त्वत्रयनिर्णयस्य विवृतिर्लेशादियं निर्मिता॥ इति।

## सम्मोहनतन्त्रं शक्तिसङ्गमतन्त्रादभिन्नम्

श्रीमता डॉ॰ प्रबोधचन्द्रबागचीमहोदयेन 'स्टडीज़ इन द तन्त्राज्' इत्याख्ये १९३९ ई॰ वर्षे कलिकाताविश्वविद्यालयतः प्रकाशिते स्वकीये ग्रन्थे कम्बुज(कम्बोडिया)देशे समुपलब्धं शिलालेखमेकं समाश्रित्य निबन्धद्वयम् (पृ॰ १-२६), सम्मोहनतन्त्रमाश्रित्य च परिशिष्टमेकं (पृ॰ ९६-१०१) प्रकाशितम्। अत्र डॉ॰ बागचीमहोदयाः प्रतिपादयन्ति— "विस्तृतेऽस्मिन् शिलालेखे कम्बुजदेशस्य प्रायः २५० वर्षाणां सांस्कृतिक इतिहासः संगृहीतो वर्तते। यद्यपि नात्र कश्चन काल उत्कीर्णस्तथापि ९७४ शकवर्षस्य (=१०५२ ई॰) उल्लेखोऽत्र वर्तते। ७२४ शकवर्षे (=८१२ ई॰) राजा जयवर्धनो द्वितीयः कम्बुज़देशस्य राजसिंहासनमधिरुरोहेत्यत्र निर्दिश्यते। शिवकैवल्यस्तस्य राजपुरोहित आसीत्। तस्मिन् राजनि राज्यं शासति सति हिरण्यदामनामा ब्राह्मणो भारतवर्षतः समाजगाम। राज्ञाऽनुमतः स शिवकैवल्याय शिरश्छेद-विनाशिख-संमोह-नयोत्तराख्यानि शास्त्राणि समुपदिदेश, यानि तुम्बुरोश्चत्वारि मुखानीव व्यराजन्त" (पृ॰ १-२) इति।

अयमस्ति तत्र रोमन्लिप्यां लिखितानां शिलालेखस्थानां केषाञ्चन श्लोकानां पाठः—

हिरण्यदामद्विजपुङ्गवोऽग्रयधीरिवाब्जयोनिः करुणार्द्र आगतः।
अनन्यलब्धां खलु सिद्धिमादरात् प्रकाशयामास महीभृतं प्रति॥
स भूधरेन्द्रानुमतोऽग्रयजन्मा ससाधनां सिद्धिमदीक्षदस्मै।
होत्रे हितैकान्तमनःप्रसक्ति संबिभ्रते धाम विबृंहणाय॥
शास्त्रं शिरश्छेदविनाशिखाख्यं संमोहनामापि नयोत्तराख्यम्।
तत् तुम्बुरोर्वक्त्रचतुष्कमस्य सिद्ध्येव विप्रः समदर्शयत् सः॥
द्विजः समुद्धृत्य स शास्त्रसारं रहस्यकौशल्यधिया सयत्नः।
सिद्धीर्वहन्तीः किल देवराजाभिख्यां विदध्रे भुवनर्द्धिवृद्ध्यै॥

चतुष्षष्टितन्त्राणां क्रान्ताविभागो नातीव प्राचीन इति कृत्वाऽग्रे डॉ॰ बागचीमहोदयेन निःश्वाससंहिता-ब्रह्मयामल-जयद्रथयामल-पिङ्गला-मतसदृशानां प्राचीनानां तन्त्राणां साहाय्येन शिखालेखोल्लिखितानां

चतुर्णामपि ग्रन्थानां विषये स्वकीया विचाराः समुपस्थापिताः, किन्तु हन्त ! तेषां समक्षं श्रीकण्ठीसंहितावर्णिता चतुष्षष्टितन्त्रनामावली न समायाता, नैव च तैर्दृष्टानि वामकेश्वरीमतवर्णितानि चतुष्षष्टितन्त्राणि, न वा दृष्टिपथमानीतो वैरोचनविरचितः प्रतिष्ठालक्षणसारसमुच्चयाख्यो ग्रन्थो नेपालदरबारपुस्तकालयस्थस्तेषाम्। अत एवात्रत्यश्चतुर्णामपि ग्रन्थानां परिचयो नैव यथार्थतां भजते। एतच्च विवृतमस्माभिः संक्षेपेण 'चतुष्षष्टितन्त्राणि' इति शीर्षकेण नित्याषोडशिकार्णवोपोद्घाते (पृ० २३-३१)। अथाधुना विशेषतः सम्मोहनतन्त्रमधिकृत्य विस्तरेण किमप्युच्यते।

डा० बागचीमहोदयैः 'कल्चरल् हेरिटेज् आफ् इण्डिया' इत्याख्यस्य ग्रन्थस्य चतुर्थे खण्डे 'इवोल्यूशन् आफ दि तन्त्राज्' इति शीर्षके निबन्धे २२१-२२२ पृष्ठयोस्तन्त्राणां तन्त्रोपतन्त्रडामरयामलादिभेदेन परिसंख्यानं क्रियते। एतच्च विवरणं नेपालराज्योपलब्धप्राचीनसमोह(सम्मोहन)-तन्त्राधारेण कृतम्, न तु मुद्रितेन संमोहनतन्त्रेणेति तत्रैव (पृ० २११) टिप्पण्यां ते प्रतिपादयन्ति। त्रिविधस्य संमोहनतन्त्रस्य परिचयः सूचीपत्रेषु समुपलभ्यते। तत्र नेपालदरबारपुस्तकालयसूचीपत्रे[1] (भा० २, पृ० १८३), कलिकातातो मुद्रिते संस्कृतग्रन्थविवरणे[2] (भा० १, पृ० ४००) चैकविधम्, राजेन्द्रलालमित्रसन्दृब्धे संस्कृतग्रन्थविवरणे[3] (भा० १, पृ० ३७१) अपरम्, सरस्वतीभवनपुस्तकालये[4] स्थितं ९५१५९ (३०।३७) संख्याकं चान्यस्वरूपकं वर्तते। मुद्रितं सम्मोहनतन्त्रं नास्माभिरवलो-

---

१. इति श्रीमदक्षोभ्यमहोग्रतारासंवादे संमोहनतन्त्रे द्वितीयखण्डे ब्रह्मजाति-निर्णये दशमः पटलः।

२. इति श्रीमदक्षोभ्यतारासंवादे संमोहनतन्त्रे द्वितीयखण्डे ब्रह्मजातिवर्णने दशमः पटलः।

३. इति संमोहनतन्त्रे उत्तरखण्डे सप्तमः पटलः। कुलकुण्डलिनीशक्ति-प्रातःकृत्यषोढायन्त्रसर्वतोभद्रकवचादिनिरूपणम्।

४. इति संमोहनाख्येऽन्तर्यागो नाम दशमः पटलः (प० १४), बहिर्यागो नाम एकादशः पटलः (प० १५), इति सम्मोहनाख्ये तन्त्रे देवीम(ा)-हात्म्ये भुवनेश्वरीकक्षपुटः समाप्तः (प० २७), इति सिद्धशाबरतन्त्रे कलियुगप्रत्यक्षसिद्धिप्रदे महारहस्ये उमामहेश्वरसंवादे शङ्करेण विरचिते सर्वाभीष्टफलप्रदे श्वेतार्काभीष्टगणपतिकल्पसंग्रहः समाप्तः (प० २९)।

कितम्। अतस्तदेतेष्वन्यतमद् भिन्नं वेति न वक्तुं शक्यते। किन्तु प्रथमं सम्मोहनतन्त्रम्, यस्य हि डॉ० बागचीमहोदयैः 'स्टडीज इन द तन्त्राज्' (पृ० ९६-१०१) इत्यत्र विस्तरेण परिचयो दत्तः, यस्याधारेण च तैः पूर्वोक्ते निवन्धे तन्त्राणां परिगणनं कृतम्, शक्तिसंगमतन्त्रस्य चतुर्थखण्डात् छिन्नमस्ताख्याद् अभिन्नमेव। आसां पङ्क्तीनां लेखकेन संपादितः खण्डोऽयं बटोदर(बड़ोदा)स्थगायकवाडशोधसंस्थानतोऽधुनैव प्रकाशितः। अत्र संमोहनतन्त्रनाम्ना वर्णिताः सर्वेऽपि विषया आनुपूर्व्या अवलोक्यन्ते। अतः शक्तिसंगमापरपर्यायस्यास्य संमोहनतन्त्रस्य प्रामाण्येन चर्चिता विषया नैव तावन्तः प्राचीनाः, यावन्ति हि सन्ति कम्बुजशिलालेखचर्चितानि चत्वारि तन्त्राणि। फलतः संमोहनतन्त्रवर्णिता विषया नैव तस्य प्राचीनस्य संमोहतन्त्रस्य परिचयं समुपस्थापयन्ति।

ननु प्रस्तुतस्य संमोहनतन्त्रस्य परिचायकयोर्ग्रन्थविवरणस्थयोः पुष्पिकावाक्ययोर्द्वितीयः खण्ड इति निर्देशो वर्तते, भवद्भिश्च निर्दिष्टः शक्तिसंगमतन्त्रस्य छिन्नमस्ताख्यः खण्डश्चतुर्थो विद्यत इति कथमनयोरैक्यं संभाव्येतेति चेत्? शृणु—शक्तिसंगमस्य मैथिलीलिपिलिखितं मातृकाद्वयं सरस्वतीभवनपुस्तकालये समुपलभ्यते। तत्रापि चतुर्थः खण्डो द्वितीयखण्डत्वेनैव स्थापितः। एवं च कालभेदाद् देशभेदाद्वा संजातोऽयं खण्डभेदो नानयोर्भिन्नतां साधयितुं क्षमः। तस्मात् शक्तिसंगमतन्त्रस्यैव द्वितीयश्चतुर्थो वा खण्डः कुत्रचित् संमोहनतन्त्रनाम्नापि प्रसिद्धिं जगामेत्येव मन्तव्यम्।

नेपालराजकीयपुस्तकालयतः प्रतिष्ठालक्षणसारसमुच्चयाख्यग्रन्थस्य प्रथमो भागः २०२३ वैक्रमे वत्सरे, द्वितीयश्च भागः २०२५ वैक्रमे वत्सरे प्रकाशितः। प्रथितः शैवाचार्यो वैरोचनोऽस्य रचयिता वर्तते। ग्रन्थस्य रचनाकालो विक्रमसंवत्सरस्य नवमी शताब्दीति सम्पादकैर्निश्चीयते। अत्र शिवस्य पञ्चवक्त्रेभ्यो विनिःसृतानां चतुष्षष्ट्युत्तरं शतं तन्त्राणां नामानि प्रदर्शितानि। तेषु ऊर्ध्वमुखोद्गतानां शैवानां दश तन्त्राणां रौद्राणां चाष्टादशतन्त्राणां नामानि बहुशो ग्रन्थेषु दृश्यन्ते। दक्षिणमुखाद्विनिःसृतानां चतुष्षष्टिभैरवागमानां नामानि तन्त्रालोकविवेकोद्धृतायां श्रीकण्ठीसंहितायां परिगणितानि। गारुडतन्त्राणां भूततन्त्राणां वामतन्त्राणां च नामान्यत्र क्वापि नावलोक्यन्ते, यद्यपि तानि तन्त्रालोकविवेकादिषु स्मर्यन्ते। अतः प्रतिष्ठालक्षणसारसमुच्चयस्य तत्तन्त्रगणनापरोंऽशोऽत्र संगृह्यते। तद्यथा—

हरं हुङ्कारकं चैव बिन्दुसारं कलामृतम् ।
देवत्रासं च्र सुत्रासं साबरं कालसाबरम् ॥

पक्षिराजं शिखायोगं शिखासारं शिखामृतम् ।
पञ्चभूतविभागं च शून्यभेदविनिर्णयम् ॥

कालकण्ठं च कालाङ्गं कालकूटं पटद्रुमम् ।
कम्बोजं कम्बलं कङ्कं कालकुण्डं कटाहकम् ॥

सुवर्णरेखं सुग्रीवं तोतलं तोतलोत्तरम् ।
गारुडस्य त्विमे भेदा अष्टाविंशतिरीरिताः ॥

स्वच्छन्दभैरवं चण्डं क्रोधमुन्मत्तभैरवम् ।
असिताङ्गं रुरुं चैव कपालीशं समुच्चयम् ॥

अघोरं घोषणं घोरं निशासञ्चारदुर्मुखम् ।
भीमाङ्गं डामरारावं भीमं वेतालमर्दकम् ॥

उच्छुष्मं वामकापालं शेखरं पुष्पमद्वयम् ।
त्रिशिरं चैकपादं तु सिद्धयोगेश्वरीमतम् ॥

पञ्चामृतं प्रपञ्चं च योगिनीजालसम्बरम् ।
विश्वविकण्ठसंकोचं तिलकोद्यानभैरवम् ॥

एवं द्वात्रिंशत्तन्त्राणि सोत्तराणि च तद्द्वयम् ।
चतुष्षष्टिप्रमाणानि दक्षिणास्योद्भवानि च ॥

नयं नयोत्तरं मूकं मोहनं मोहनामृतम् ।
करपूजाविधानं तु वीणातन्त्रं तदुत्तरम् ॥

जयं च विजयं चैव अजितं चापराजितम् ।
सिद्धनित्योदयं ज्येष्ठं चिन्तामणिमहोदयम् ॥

वाग्भवं कुहकं चित्रं कामधेनुकदम्बकम् ।
आनन्दरुद्रभद्राख्यं किङ्करं किङ्करानुगम् ॥

अनन्तविजयं शौक्रं दौर्वासं बीजभेदकम् ।
वामदं वामदेवोक्तं चतुर्विंशतिभेदकम् ॥

हलाहलं हयग्रीवं करकोटं कटङ्कटम् ।
चण्डासिधारं हुङ्कारं हाहाकारं शिवारवम् ॥

घोराट्टहासमुच्छिष्टं घुर्घुरं दुष्टत्रासकम् ।
विमलं विकटं चैव सुधारणं महोत्कटम् ॥
यमघण्टं च भूताह्वं विषभेदमजातजम् ।
इत्येवं शैवतन्त्राणि चतुष्षष्ट्युत्तरं शतम् ॥ इति ।
(२।११२-१२८)

नित्याषोडशिकार्णवपरिगणितेषु चतुष्षष्टितन्त्रेषु प्राचीनानां सर्वविधानां तन्त्राणां समावेशो वर्तत इत्यास्माकीनं मतमनेन सन्दर्भेण साधु सिद्धयति । अत्र हि तत्रत्यानां बहूनां तोतल-तोतलोत्तर-सिद्धयोगीश्वरीमत-पञ्चामृत-योगिनीजालसम्बर-नयोत्तरप्रभृतीनां तन्त्राणां नामान्यवलोक्यन्ते । सर्वेषामेतेषां समीक्षणं कालसापेक्षम् । दक्षिणास्योद्भवेषु चतुष्षष्टितन्त्रेषु द्वात्रिंशत्तन्त्राण्यत्र परिगणितानि । तानि च नामानि तन्त्रालोकविवेकधृतश्रीकण्ठीसंहितानामावलीतो विलक्षणानि भवन्ति । अत्र वामतन्त्रेषु नयोत्तरं वीणातन्त्रं च पठ्यते । श्रीकण्ठीसंहितापरिगणितेषु चतुष्षष्टितन्त्रेषु च शिरश्छेद-वीणाशिख-संमोहाख्यानि तन्त्राणि दृश्यन्ते । तदेतेषां प्राचीनानामेव तन्त्राणां कम्बुजशिलालेखे समुल्लेखो मन्तव्यः, न तु श्रीमता डॉ० प्रबोधचन्द्रबागचीमहोदयेन कष्टकल्पनया समुद्भावितानां तेषाम् ।

शिलालेखस्थेन विनाशिखपदेन वीणाशिखाख्यस्य भैरवतन्त्रस्यैव ग्रहणं समुचितं प्रतिभाति, न तु वीणातन्त्रस्य । भैरवस्रोतसि वीणाशिखाख्यं तन्त्रमेव पठ्यते, न तु विनाशिखाख्यम् । कम्बुजशिलालेखे नाम्नि कश्चन विपर्ययस्तु छन्दोमूलको लिपिभ्रंशमूलको वा भवेत् ।

प्रस्तुते शिलालेखे तानीमानि चत्वारि तन्त्राणि तुम्बुरोश्चत्वारि वक्त्राणीव वर्णितानि । तुम्बुरुर्हि शिवस्यावतारविशेष इति योगवासिष्ठप्रामाण्येन साधु समर्थितं डॉ० बागचीमहोदयैस्तत्रैव (पृ० २२) । तथा हि—

इत्यष्टैश्वर्ययुक्तास्ता मातरो रौद्रचेष्टिताः ।
कदाचिन्मिलिता व्योम्नि सर्वाः केनापि हेतुना ॥
उत्सवं परमं चक्रुः परमार्थप्रकाशकम् ।
वामस्रोतोद्भवा पूतास्तुम्बुरुं रुद्रमाश्रिताः ॥
पूजयित्वा जगत्पूज्यौ देवौ तुम्बुरुभैरवौ ।
विचित्रार्थाः कथाश्चक्रुर्मदिरामदतोषिताः ॥
(नि० पू० १९।२४-२६)

अत्र हि तुम्बुरो रुद्रस्य वामस्रोतसा कश्चन संबन्धः प्रतिपाद्यते। "शिवः सदाशिवश्चैव भैरवस्तुम्बुरुस्तथा" (९।११) इति शिवस्यावतार-चतुष्टयं मृत्युञ्जयभट्टारकाख्ये नेत्रतन्त्रेऽपि वर्ण्यते। "सदाशिवादिरूप-तया ध्यातः सिद्धान्त-वाम-दक्षिणादिशास्त्राणां फलं प्रददाति" इति तत्रत्यं क्षेमराजव्याख्यानमपि तुम्बरोर्वामस्रोतसा भैरवस्य च दक्षिणस्रोतसा सम्बन्धं द्रढयति। कम्बुजशिलालेखस्थस्तुम्बरुशब्दोऽत्र नेत्रतन्त्रदिशा शिवपर्यायतया नेयः, अथवा योगवासिष्ठप्रामाण्येन भैरवस्याप्युपलक्षकः सः। एवं च चत्वारीमानि तन्त्राणि तुम्बुरुभैरवयोः स्वरूपप्रतिपादकतया चत्वारि मुखानीव सन्ति। "शैवीमुखमिहोच्यते" (श्लो० २०) इति विज्ञानभैरवश्लोके मुखशब्द उपायपरतया व्याख्यायते। तेन शिवस्वरूपा-धिगत्युपायभूतानीमानि दक्षिणवामस्रोतोभवानि चत्वारि तन्त्राणि भारत-वर्षात् कम्बुजदेशं गतेन हिरण्यदाम्ना विदुषा शिवकैवल्याय समुपदिष्टा-नीत्येव सुवचमिति शिवम् ॥ □

# महाकविभासस्य कालः

अद्यत्वे मिलितेषु रूपकपद्यकाव्यादिषु कविताकामिनीहासेन भासेन निर्मितानि रूपकाण्येव प्राचीनतराणि ।

यद्यपि भाससमयात् प्रागपि बहूनि रूपकाणि काव्यानि च निबद्धान्यासन्, किन्तु तानि कालमहाव्यालनिगलितान्यस्माकं मन्दभाग्यतया न प्राप्यन्ते । यथा महामुनिपाणिनिविरचितानि जाम्बवतीजयादीनि काव्यानि । अस्तु यानि लभ्यन्ते तैरेव वयं "भारतः सर्वविद्यानां जनकः भाण्डागारश्च" इति कथयितुं सगर्वं समर्थाः स्मः ।

एवं सत्यपि केचन पाश्चात्त्या न वयं भारतस्य शिष्याः, अपि तु त एवास्माकं बहुषु विषयेषु शिष्याः सन्तीति कथयन्तः प्राचीनान् भासकालिदासप्रभृतीन् महाकवीन् 'बहु नवीना एते' इति सिषाधयिषन्ति, कथयन्ति च नाटकरचनाप्रणाली भारतेऽस्माकं देशादेवागता इति । अतस्तन्मतनिरासपूर्वकं महाकविसमयादिविचारव्याजेन यथाकथञ्चित् सरस्वतीसमाराधनं कर्तुमिच्छामि ।

एतत्प्रागुक्तमेव यन्मिलितेषु रूपकादिषु भासस्यैव प्राचीनतराणि रूपकाणि सन्ति, अतः प्राक् तस्यैव महाकवेः समयनिर्णयमत्र लेखे करोमि ।

महाकविर्भासो ब्राह्मणवंश्यः केरलदेशीयश्चेति निर्विवादम् । समयविषयेऽस्ति मतभेदः । तत्र पाश्चात्त्येषु केचित् सप्तमशताब्दीभवो महाकविर्भास इति प्रतिपादयन्ति ।

अन्ये तृतीया चतुर्थी वा शताब्दी भासकाल इति वदन्ति । हेतुरत्र तेषां भाषाविज्ञानमेव । अत्र विचार्य्यते—यद्यन्यानि प्रमाणानि समयनिर्णयकरणे न स्युस्तदैव भाषाविज्ञानेन कार्यं कर्तव्यम् । यदा तु तद्विज्ञानविरुद्धानि प्रबलप्रमाणानि प्राप्यन्ते, तर्हि तस्यासम्पूर्णस्य विज्ञानस्य शुद्धीकरणापायः कर्तव्य उत बालकवद् हठं गृहीत्वा "नहि, भाषाविज्ञानेन इदमेव सिध्यति" इति वक्तव्यम् ।

तस्माद् भाससमयनिर्धारणे न भाषाविज्ञानेन किञ्चित् प्रयोजनम् । तत्समयनिर्णये त्वन्या एव सरणिराश्रयितव्या । तद्यथा—

द्वादशशताब्दीभवेन प्रसन्नराघवकर्त्रा जयदेवेन—

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥

इति पद्ये स्मृतः कविताकामिनीहासो भासस्तत्प्राग्वर्ती भविष्यत्येव।

एवमेव जयदेवादपि प्राचीनेन नवमशताब्दीभवेन राजशेखरेणापि स्मृतो भासः, यतो हि द्वादशशताब्दीपूर्वभागस्थितजह्लणकृतसूक्तिमुक्तावलौ—

भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

एष श्लोको राजशेखरनाम्नोद्धृतः, अतस्तस्मादपि प्रत्नो महाकविर्भासः।

सप्तमशतकपूर्वार्धस्थितेन महाकविबाणेन हर्षचरितप्रारम्भे—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥

इत्थं स्तुतो भासस्तस्मात् पुरातन एव महाकविः।

एताभ्यां लोकाभ्यां "स्वप्नवासवदत्तमेव भासनिर्मितम्, अन्यानि तु केनचिदपरेण कविना निर्माय भासनाम्ना प्रख्यापितानि" इत्यपि निरस्तम्। यतो हि 'भासनाटकचक्र' इति पदेन 'नाटकैः' इति बहुवचनेन च भासो बहुनाटकनिर्माता इति सिद्ध्यति।

ख्रीस्ताब्दात् प्राक् प्रथमशतकजातेन कविताकामिनीकान्तेन कालिदासेन स्वविरचितमालविकाग्निमित्रभूमिकायाम्—

"प्रथितयशसां भास-सौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः" इति प्रथितयशस्त्वेन ख्यापितो भासस्तस्मादपि प्राचीनः।

कालिदासादपि बहुप्राचीनेन चन्द्रगुप्तगुरुणा ख्रीस्ताब्दात् पूर्वं चतुर्थशतके स्थितेन कौटिल्येन स्वकीयेऽर्थशास्त्रे उद्धृत एष श्लोकः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥

इदमेव पद्यं प्रतिज्ञायौगन्धरायणेऽपि चतुर्थेऽङ्के विद्यते।

अत्र संशयः—"किमेष श्लोकः कौटिल्येन निर्मित उत भासेन" इति ? तत्र कौटिल्येन स्वकीये ग्रन्थे—"तुल्यवेतनोऽपि" इत्याद्युक्त्वा "अपीह श्लोकौ भवतः" इत्यनन्तरं द्वौ श्लोका उदाहृतौ ( कौटिल्यार्थ० अधि० १० अध्या० ३ इत्यत्र )। ग्रन्थकाराः स्वकीयं श्लोकम् "अपीह श्लोकौ भवतः" इत्युक्त्वा कदापि न लिखन्ति, परकीयमेव श्लोकं तत्र समुद्धरन्ति। यथा गृह्यसूत्रधर्मसूत्रादिषु उद्धृताः। एवं चेदं पद्यं न कौटिल्यस्य, किन्तु तेनान्यस्य कृतिरुद्धृता इत्यायाते भासस्यैवेयं कृतिरिति सिध्यति। अतो भासपद्यसमुद्धर्ता कौटिल्यस्तस्मान्नवीन एवेति ख्रीस्ताब्दात् प्राक् चतुर्थी पञ्चमी वा शताब्दी ( २३०० वर्षपूर्वम् ) भासकाल इति सिद्धम्।

अत्र पाश्चात्याः स्वमतरक्षणार्थम्—"महाकविना भासेनापीदं पद्यमन्यस्माद् ग्रन्थादुद्धृतं य इदानीं न लभ्यते। तथा चोभयोर्मध्ये न कस्यापि कृतिरपि तु अन्यस्यैव कस्यचित्। तथा च भासः कौटिल्यात् प्राचीनो नास्ति" इति वदन्ति। अहोधाष्टर्यं तेषाम् ! यदा साधारणकवयोऽपि—

कविरनुहरति च्छायां पदमेकं पादमेकमर्धं वा।
सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥

इत्युक्त्यनुसारेणाऽन्यनिर्मितं पद्यं स्वकीये ग्रन्थे स्थानं न ददति, किन्तु यदि भवेदावश्यकता तादृशस्य पद्यस्य, तर्हि तस्य च्छायामात्रमेव स्वीये ग्रन्थे समुद्धरन्ति, तदा कविताकाननकण्ठीरवेण महाकविना भासेन कथमन्यस्य पद्यमुद्धृतं भवेत् ? कथं न लज्जन्ते परकीयगौरवमपहर्तुं प्रवृत्ताः पाश्चात्याः शुद्धसात्त्विकवृत्तीन् महाकवीन् चौरा इति कथयन्तः। अहो ! चरितार्थोऽत्र 'उल्टा चोर साहूकार को डाटे' इति लौकिकन्यायः।

एषा प्रणाली तेषामेव देशे सुखं लभताम्। अत्र तु न केचिदपि परकीयं श्लोकं स्वनाम्ना स्वकीये ग्रन्थ उद्धरन्ति। तस्माद् भासप्रणीत एवायं श्लोकः।

ख्रीस्ताब्दात् प्राक् षष्ठशतकभवस्य वत्सराजस्योदयनस्य चरितमनेन कीर्तितं प्रतिज्ञायौगन्धरायणे, स्वप्नवासवदत्ते च। अतः ख्रीस्ताब्दात् प्राक् षष्ठशतकमारभ्य चतुर्थशतकं यावद् भाससमय इति सिद्धम्।

भासनाटकचक्रप्रकाशका गणपतिशास्त्रिमहोदयाः पाणिनेरपि प्राचीनं भासं मन्यन्ते, तत्तु पाश्चात्यनिर्धारितपाणिनिसमये विश्वासकरणमूलकम्। पाश्चात्या हि पाणिनेः प्रादुर्भावमुपरिनिर्दिष्टभाससमय एव मन्यन्ते।

वस्तुतो महामुनिभगवत्पाणिनेः प्रादुर्भावस्तु कलियुगारम्भाद् द्वित्रिशतकानन्तरमेव जात इति मन्तव्यम् ।

एवं च प्राचीनतरात् पाणिनेराचार्यान्न कथमपि भासः प्राचीनो भवितुमर्हति । भगवतः पाणिनेरतिप्रसिद्धिश्च महाभाष्यकारपतञ्जलिकालानन्तरं जाता । अतो भगवत्पतञ्जलिपूर्वंभवस्य भासस्य नाटकचक्रे यद्यार्षप्रयोगाः स्युस्तत् स्वाभाविकमेव । अपरञ्च, भासनाटकचक्रदर्शनादिदमाभाति यत्तेन रामायणमहाभारतयोः सुचारुरीत्याऽभ्यासः कृत इति । एवं च तत्प्रभावादपि आर्षप्रयोगाधिक्यं भवितुमर्हति । एवं च सिद्ध न पाणिनेः प्राचीनो भास इति । एतावता प्रबन्धेनेतस्त्रयोविंशतिशतकपूर्वं भासस्थितिरासीदिति सुतरां सिद्ध्यति ।

---

## भट्टगोविन्दस्य श्रुतिविकासः

अद्यावधि ऋग्वेदोपरि स्कन्दस्वामि-नारायण-उद्गीथ-वेङ्कटमाधव-आनन्दतीर्थ-सायणभाष्याणि समुपलब्धानि । संस्कृतसाहित्ये शङ्कराचार्य-शिष्यहस्तामलक-शारदातनयप्रपितामहलक्ष्मण-धानुष्कयज्वन्(धन्वयज्वन्)--रावण-मुद्गल-चतुर्वेदस्वामिनां भाष्याणामुल्लेखो विद्यते । वैदिकवाङ्मय-गवेषकाणां पुरत एकं नवीनं भाष्यमुपस्थापयत् सरस्वतीभवनमद्य स्वकीयं गौरवपदमनुभवति । अस्य भाष्यस्य संस्कृतसाहित्येऽद्यावधि कुत्रापि नामापि न श्रुतम्, हस्तलेखप्राप्तेस्तु का कथा । सोऽयं भट्टगोविन्दविरचितः श्रुतिविकासः ।

त्रिशदधिकैकोनविंशतिशततमे (१९३० ई०) वर्षे महामहोपाध्यायैः श्रीनारायणशास्त्रिखिस्तेमहोदयैः 'रीवाँ'नगरतो द्विसहस्रपरिमितानि हस्तलिखितपुस्तकानि समानीतानि। तानि सरस्वतीभवने 'रीवाँ संग्रह' इति नाम्ना प्रसिद्धानि । तस्मिन्नेव संग्रहे एतदपूर्वं पुस्तकमासीत् । सरस्वतीभवनस्थविदुषो विहाय अद्याप्येतद्भाष्यविषये कोऽपि किमपि न जानाति । अतोऽद्यास्य भाष्यस्य विषये किमपि कथयन्नहमतीव हर्षमनुभवामि । आशासे एतद् वैदिकवाङ्मयेतिहासे कामपि नवीनतामाविर्भावयिष्यति ।

हस्तनिर्मितसुपुष्टतूलपत्रो(पेपर)परि 'पृष्ठमात्रादि' विशेषतायुक्तैः प्राचीन-देवनागराक्षरैर्लिखितमेतद्भाष्यपुस्तकम् । पुस्तके १–२५, २८-५९ संख्याकानि पत्राणि सन्ति । २६–२७ अङ्काङ्किते पत्रे न स्तः । एवमेव ३९-४० पत्रयोर्मध्येऽपि पत्रमेकमावश्यकम् । यद्यप्यत्राङ्कदर्शनेन पुस्तके न काचिदपि त्रुटिर्विभाव्यते, तथापि तत्र कतिचिद्वर्गभाष्यानुपलब्धेरियं त्रुटिर्ज्ञायते । एवं च पुस्तकस्थानि त्रीणि पत्राणि त्रुटितानि । प्रत्येकपत्रस्य निरङ्कसाङ्कपृष्ठयोः षोडश षोडश सप्तदशाष्टादश वा पङ्क्तयो विद्यन्ते । प्रथमपत्रस्य निरङ्कं पृष्ठं रिक्तमस्ति, तत्र केवलं मध्यभागे "श्रुतिविकासः भट्टगोविन्दविरचितः" इति केनाप्यभिनवेन पुस्तकस्वामिना लिखितमस्ति । अन्तिमस्यैकोनषष्टितम(५९)पत्रस्य साङ्के पृष्ठे च त्रयोदश पङ्क्तयः सन्ति । प्रतिपङ्क्ति द्विपञ्चाशत्परिमितान्यक्षराणि विद्यन्ते । ग्रन्थान्ते लेखकेन ग्रन्थसंख्या ३००० दत्ताऽस्ति ।

पत्राणामाकारः १२"×४·६" परिमितो विद्यते। पत्राणां दैर्घ्यदिशोः ·६" ·६" परिमितं रिक्तं स्थानं (मार्जिन), विस्तृतिदिशोश्च ·४" ·४" परिमितं विद्यते। रिक्तस्थानेषु कुत्र कुत्रचिद् लेखनसमये त्रुटिता भाष्यांशा लिखिताः सन्ति। प्रथमपत्रस्यान्तिमपत्रस्य च दैर्घ्यदिशोः स्थितं रिक्तं स्थानं नष्टप्रायम्, एतेन तत्रैकद्वयक्षरहानिरपि सञ्जाता।

हस्तलेखोऽयमतीव प्राचीनः। पुस्तकान्ते लिपिकालः १३६७ विक्रमसंवत्सरो दत्तः। लिपिकर्ता चास्य आनन्दपुर[1]वास्तव्यो द्विवेदोपाह्वो धारिगनामा विद्यते। हस्तलेखस्यातिप्राचीनत्वे सत्यपि पुस्तकस्य लेखस्य वा न काचिदपि जीर्णत्वकीटदष्टत्वादिरूपा हानिः सञ्जाता। केवलं कुत्रचित् पत्रप्रान्तौ शीर्णौ, अथापि लेखहानिस्तु नैव संवृत्ता। अन्तिमपत्रस्य साङ्कपृष्ठस्थानि कतिचिदक्षराण्यदर्शनतामाप्तानि। लेखस्तु शुद्धप्रायः, प्राचीनत्वात् कष्टेन पठनार्हश्च।

## ग्रन्थारम्भः

ॐ स्वस्ति॥ प्र होतेति॥ प्रकर्षेण यः जातो होता महानादित्यस्य बोद्धा। तस्मादेव जातः तत आहृतो वायुनान्तरिक्षं प्रापितः। ततस्तत्रैवा-(पा)मुपस्थाने प्रशस्तेषु मध्यस्थाने देवगणेषु मध्ये तिष्ठेत्। योऽसौ धाता यज्ञे स्थितः स ते हविर्लक्षणानामन्नानां नियन्ता कल्याणरूपाणां यस्मात्तस्मै परिचरते त्वं शरीरस्य रक्षिता भवसि॥ इममिति॥ सूर्यमण्डले निगूढे चरन्तं भृगवो मुनयः कामयमाना वायुद्वारेण तमग्निमलभन्त। तमेवाग्निमन्तरिक्षं प्राप्तं तत्र हारितं पशुमिव पदान्यनुसृत्यान्वगच्छन् परिचरन्तः॥ इममिति॥ त्रितो नाम कश्चिन्मुनिः। तमेवाग्निमिच्छन् विभूवसोः सम्बन्धी रश्मिरूपाया गोर्मूर्द्धनि सूर्यमण्डलेऽग्निमलभत। स एव सुखयिता पृथिव्यां गृहेषु जातः। यज्ञेन हवींषि प्राप्य तस्यैव भ्राजमानस्य सूर्यस्य तैरेव हविर्भिर्न्निचकरो भवति। तस्यात्मस्थितिहेतुः वृद्धोऽपि सन् पुनर्युं(वा)॥ मन्द्रमिति॥ मदयितारं देवानां ह्वातारं कामयितारो हविर्लक्षणैरन्नैर्यज्ञमुपगतं यज्ञानां देवान् प्रति नेतारं ते भृगवोऽकुर्वन् मनुष्याणाम् आश्रयणीयं मानुष्यमर्थिनं हविषां वोढारं धारयन्तः॥ प्रेति॥ तमीर्ज्जयन्तं रक्षो गताः महान्तं वाचां धारकं रश्म्या अश्वं

---

[1] उव्वटपितुर्वज्रटस्य निवासस्थानमपि 'आनन्दपुरम्' एवासीदिति—'आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना। उव्वटेन·····' इत्यादिसंहिताप्रातिशाख्यादिभाष्यस्थेनोव्वटश्लोकेन ज्ञायते।

तथाधारमसूर्यम् । दस्यूनां गृहाणां विदारयितारं मूढा इमे जडा अरण्या गर्भं बहिर्भवं नयन्तः वननीया स्तुतिं तं प्रतिधारयन्ति । हरिद्रूपं अग्न्याख्यकेशम् । अथवा सूर्यं तथाभूतमिव अन्येषाम् आश्रयं धनैरर्च्चनीयम्[1] ।।१।।

## पुष्पिका

भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे सप्तपञ्चाशोऽध्याय ।।[2]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे अष्टपञ्चाशोऽध्यायः ।।[3]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे एकोनषष्टोऽध्यायः ।।[4]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे षष्टितमोऽध्यायः ।।[5]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे एकषष्टोऽध्यायः ।।[6]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे द्वाषष्टोऽध्यायः ।।[7]
भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुःषष्टिविवरणे त्रिषष्टोऽध्यायः ।।[8]

## ग्रन्थसमाप्तिः

संसमिति ।। इह संवनन ऋषिः । अग्निः स्तुत्यः । हे अग्ने, रश्मितस्त्वं सर्वाणि देवमनुष्यादीनि भूतानि परस्परं संबध्नासि यज्ञादिद्वारेण उत्तरवेद्यां हविषां स्थाने त्वं संदीप्यसे स त्वं धनान्याहर ।। समिति ।। इदं सत्रे बहून् यजमानान् प्रत्युच्यते संप्रतिपत्त्यर्थं यूयं गमने संसृष्टा भवत । संप्रतिपत्त्या च वाचं वदत । युष्माकं च मनांसि संप्रतिपत्त्या जानन्तु यथा सर्वे (पूर्वे) देवाः हविरादिभागं संगतिमेव जारयन्तः प्राप्नुवन् ।।समान इति।। युष्माकं मन्त्रः समानो मनु संगतिश्च समानरूपा मनश्च····समानार्थाभिलाषादियुक्तं मनसश्च यश्चेतनाव्यापार····हसैव प्रवर्ततां कार्येषु एकरूपमेव च मन्त्रं स्तुतियागादिसिद्धयर्थमह····रोमि । युष्माकं च यज्वनां संबन्धिना समानेन हविषा जुहोमि ।। समानीति ।। युष्माकमभिप्रायः समानो भवतु ।

---

१. ऋग्वेदे अष्टमाष्टक-प्रथमाध्याय-प्रथमवर्गः ।
२. पत्रे ९, निरङ्कपृष्ठे, पङ्क्तिः १०–११ ।
३. प० १६, निरङ्कपृष्ठे, प० ५ ।
४. प० २४, निरङ्कपृष्ठे, प० १० ।
५. प० ३०, निरङ्कपृष्ठे, प० १७ तथा साङ्क पृ०, प० १ ।
६. प० ३७, नि० पृ० १ ।
७. प० ४२, नि० पृ०, १७ तथा सा० पृ०, प० १ ।
८. प० ५०, नि० पृ० प० ११–१२ ।

हृद्गतानि जानाहि....राटीनि समानानि सन्तु। तथा युष्माकं मनः समानं भवतु। तत्रेत्युक्तेऽपि पुनर्वचनं निखिलसंकल्पादिमनोव्यापारभेद-सिद्ध्यर्थं येन प्र....कारेण युष्माकं तन्मनः सुष्ठु मननीये सुखं भवतु ॥ तच्छंयोरिति ॥ बृहस्पतिपुत्रः शंयुः। तस्माद्वयं प्रार्थयामहे....गतिं देव-विषयां यज्ञपत्यर्थां च स्वर्गमोक्षगतिं देवेभ्यः सकाशादस्माकं सातिशयश्रेयो-भावोऽस्तु मनुष्येभ्यश्च सुधा शा....य यद्यु लोकगतं भेषजं तदस्मानागच्छतु। अस्माकं द्विपदे पुत्रपौत्रादिरूपाय चतुष्पदे च गवादिकाय श्रेयो भवतु[1] ॥ ४९ ॥

## पुष्पिका

इति भट्टश्रीगोविन्दविरचिते श्रुतिविकासाख्ये चतुष्षष्टिविवरणे चतुः-ष्षष्टोऽध्यायः ॥ समाप्तिमिदम् ॥ छ ॥ श्रीमद्विक्रमकालस्य संवत्सरशतेष्विह। त्रयोदशसु यातेषु सप्तषष्ट्यधिकेषु च ॥ मार्गे मासि सिते पक्ष एकादश्यां गुरोर्दिने। द्विवेदधारिगेनेदमलेख्यृग्भाष्यपुस्तकम् ॥ २ ॥ छ ॥ संवत् १३६७ वर्षे मार्गशु ११ गुरौ श्रीनान्दुरब्बार्यां श्रीमदानन्दपुरवास्तव्येन द्वि० धारिगेन इदम् ऋग्भाष्यपुस्तकमलेखि ॥ छ ॥ सहस्यनुत्तरे दले हरेस्तिथौ गुरोर्दिने। ऋचां तु भाष्यपुस्तकं द्विवेदधारिगोऽलिखत् ॥ छ ॥ मङ्गलं महाश्रीः ॥ राजहंसाविमौ यावत् क्रीडतः पृथुपुष्करे। विद्वद्भिर्मान्यमानोऽसौ तावन्नन्दतु पुस्तकः ॥ ग्रन्थः ॥ ३००० ॥ 'भट्ट श्रीधर नी पोथी' ( भिन्नाक्षरेषु )

उपरितनेन विवरणेन ज्ञायते प्रस्तुतोऽयं हस्तलेखो भट्टगोविन्दरचितस्य श्रुतिविकासनामकस्य ऋग्वेदभाष्यस्याष्टमाष्टकमात्रस्य विद्यते, अस्यापि च त्रीणि पत्राणि त्रुटितानीति। तत्र २६-२७ पत्रयोरभावाच्चतुर्थाध्यायसप्तम-वर्गतो द्वाविंशतितमवर्गपर्यन्तस्य भाष्यग्रन्थस्य क्षतिः सञ्जाता। एवमेव ३९-४० पत्रयोर्मध्येऽपि षष्ठाध्यायत्रयोदशवर्गतः षोडशवर्गपर्यन्तं भाष्यं लुप्तम्।

ऋग्वेदस्य द्विविधो विभागो दृश्यते—मण्डलानुवाकसूक्तादिरूपोऽष्टका-ध्यायवर्गादिरूपश्च। एतौ द्वावपि विभागौ भट्टगोविन्देन न स्वीकृतौ। तेन तु केवलमध्यायवर्गविभाग एव स्वीकृतः। सम्पूर्णे ऋग्वेदेऽष्टावष्टकानि।

---

१. अष्टमाष्टक-अष्टमाध्याय-अन्तिमवर्गः। अस्य वर्गस्यान्तिमो मन्त्रः ( तच्छंयोरिति ) खिलरूपः, सायणाचार्येण न व्याख्यातः।

प्रत्येकाष्टके अष्ट अष्ट अध्यायाः। इत्थं संकलनेन सम्पूर्णे ऋग्वेदे चतुष्षष्टिरध्यायाः सन्तीति भट्टगोविन्देन चतुष्षष्ट्यध्यायेषु संहिता विभक्ता, तदनुसारमेव च स्वकीयभाष्यस्य 'श्रुतिविकासाख्यं चतुष्षष्टिविवरणम्' इति नाम धृतम्। एषोऽपि विभागो न भट्टगोविन्दकल्पनाप्रसूतः, अपि तु प्राचीन एव। भूर्जपत्रेषु शारदालिप्यां बूल्हरमहाशयमतेन ४०० वर्षेभ्यः प्राग् लिखिते काश्मीरपुस्तके, ऋग्वेदस्य शाङ्खायनशाखाया नागरीलिप्यां लिखितयोर्जूनागढ़-नवानगरपुस्तकयोः, उद्गीथभाष्ये, कुत्र कुत्रचिद् वेङ्कटमाधवभाष्ये च भट्टगोविन्दस्वीकृतोऽध्यायविभाग एव दृश्यते।

यद्यपि भट्टगोविन्दभाष्यस्याष्टमाष्टकमात्रस्यैवोपलब्धिर्जाता, तथाप्येतेनैवांशेनेदं ज्ञायते यद्भट्टगोविन्देन सम्पूर्णस्य ऋग्वेदस्य भाष्यं विरचितम्। 'चतुष्षष्टिविवरणम्' इति नामतस्तत् सुस्पष्टमेव। अन्यदपि—अष्टमाष्टकप्रथमाध्यायसमाप्तौ "भट्टगोविन्दविरचिते श्रुतिविकासाख्ये चतुष्षष्टिविवरणे सप्तपञ्चाशोऽध्यायः" इति लेखो दृश्यते। एवमेव द्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमाष्टमाध्यायसमाप्तिषु क्रमशः "........अष्टपञ्चाशोऽध्यायः,....एकोनषष्टोऽध्यायः,....षष्टितमोऽध्यायः,........एकषष्टोऽध्यायः,........द्वाषष्टोऽध्यायः, ........त्रिषष्टोऽध्यायः,........चतुःषष्टोऽध्यायः" इति विद्यते। एतेन ज्ञायते यद् भट्टगोविन्देन सप्तस्वष्टकेषु विद्यमानानां संकलनेन षट्पञ्चाशदध्यायानां विवरणं पूर्वं कृतम्। साम्प्रतं स अष्टमाष्टकस्थानां सप्तपञ्चाशदाद्यध्यायानां विवरणं करोतीति। अस्य हस्तलेखस्य प्रारम्भे किमपि मङ्गलाचरणादिकं नास्ति। अतोऽप्युपर्युक्तस्यैव कथनस्य पुष्टिर्भवति। सम्पूर्णभाष्यस्य समुपलब्धये यत्नो विधेयो वैदिकवाङ्मयगवेषकैः।

सोऽयं भट्टगोविन्दः सायणाचार्यात् प्राचीनः। अस्य हस्तलेखस्य लिपिकालः पुस्तकसमाप्तावित्थं दत्तः—

श्रीमद्विक्रमकालस्य संवत्सरशतेष्विह।
त्रयोदशसु यातेषु सप्तषष्ट्यधिकेषु च॥
मार्गे मासि सिते पक्ष एकादश्यां गुरोर्दिने।
द्विवेदधारिगेनेदमलेख्यृग्भाष्यपुस्तकम्॥ इति।

अतो भट्टगोविन्दः १३६७ विक्रमसंवत्सरात् पूर्वमेव स्वकीयं भाष्यं विरचितवानिति सिद्ध्यति। सायणाचार्यस्य समयश्चेतिहासज्ञैः १३७२-१४४४ विक्रमसंवत्सरो निर्धारितः। अतः सायणाचार्यात् प्राचीनो भट्टगोविन्द

इति स्पष्टमेव। भट्टगोविन्दविषयेऽस्माद्भाष्यपुस्तकादितोऽधिकं किमपि न ज्ञायते। अन्यत्किमप्यनुमानाधारेणैव कथयितुं पार्यते।

मया लेखप्रारम्भे वेङ्कटमाधवस्य नाम गृहीतम्। वेङ्कटमाधव-गोविन्द-भाष्ययोः पर्यालोचनेन ज्ञायते—उभयोर्भाष्ययोर्व्याख्यानशैली समानेति। सायणाचार्यः १०।८६।१॥ ऋचो भाष्ये वेङ्कटमाधवं 'माधवभट्ट' इति नाम्ना व्यवहरति।

"माधवभट्टास्तु वि हि सोतोरित्येषर्गिन्द्राण्या वाक्यमिति मन्यन्ते। तथा च तद्वचनम्। इन्द्राण्यै कल्पितं हविः कश्चिन्मृगोऽदूदुषदिन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानः। तत्रेन्द्रमिन्द्राणी वदति" इति।

वेङ्कटमाधवस्य ( माधवभट्टस्य ) स्वकीयभाष्येऽध्यायसमाप्तिस्थेनैकेन श्लोकेन तस्य पुत्रस्य 'गोविन्द' इति नाम ज्ञायते—

सङ्कर्षणानुजो यस्य भ्रातासीदनुजः कविः।
आत्मजो वेङ्कटो यस्य गोविन्दस्तदनन्तरः॥ इति।

किं श्रुतिविकासकारो भट्टगोविन्दो माधवभट्टस्य ( वेङ्कटमाधवस्य ) पुत्रः ? षड्गुरुशिष्यस्य षट्सु गुरुष्वेको गोविन्दनामा विद्यते। यद्यपि—

विनायकः शूलपाणिर्मुकुन्दः सूर्यो व्यासः शिवयोगीति षड् वै।
नमामि तान् सर्वदा पान्तु मां ते यैर्वै षड्भिः सप्त विद्यास्तु दत्ताः॥

इति सर्वानुक्रमणीवृत्तिस्थे श्लोके गोविन्दस्य नाम न दृश्यते, तथापि मुकुन्दस्यैवापरं नाम 'गोविन्द' आसीदिति तत्रत्य'मैकडानल्ड'महोदय-टिप्पणीदर्शनेन ज्ञायते। आफ्रेख्टबृहत्सूच्यां तु 'गोविन्द' इत्येव नाम दत्तम्। एवं स्थिते यदि भट्टगोविन्द एव षड्गुरुशिष्यस्य गोविन्दनामको गुरुः स्वीक्रियेत, माधवभट्टश्च (वेङ्कटमाधवः) भट्टगोविन्दस्य पितृत्वेन स्वीक्रियेत, तर्हि भट्टगोविन्दस्य वेङ्कटमाधवस्य च कालनिर्णयो जायेत। षड्गुरुशिष्येण हि १२४४ विक्रमसंवत्सरसमीपे वेदार्थदीपिकानाम्नी सर्वानुक्रमणीवृत्तिर्निर्मिता—

खगोत्यान्मेषुमायेति कल्यहर्गणने सति।
सर्वानुक्रमणीवृत्तिर्जाता वेदार्थदीपिका॥
लक्षाणि पञ्चदश वै पञ्चषष्टिसहस्रकम्।
सद्वात्रिंशच्छतं चेति दिनवाक्यार्थ ईरितः॥ इति।

अर्थात् ४२८८ कलियुगवत्सरेषु व्यतीतेष्वेषा सर्वानुक्रमणीवृत्तिर्विरचिता। साम्प्रतं ५०५० कलिवत्सरं विद्यते। एवञ्च ७६२ वर्षेभ्यः प्रागेषा वृत्तिर्निर्मिता। एष च समयः १२४४ विक्रमसंवत्सरसमीपे समायाति। अतः षड्गुरुशिष्यस्य कालो विक्रमत्रयोदशशताब्द्याः पूर्वार्धं इति निश्चितमेव। अनेनैवाधारेण तद्गुरुत्वेन सम्भावितस्य भट्टगोविन्दस्य कालो विक्रमद्वादशशताब्द्या अन्तिमांशस्त्रयोदशशताब्द्याः प्रारम्भांशश्चेति निश्चेतुं शक्यते। यस्य भाष्यस्य हस्तलेखः १३६७ विक्रमसंवत्सरकालिकः समुपलभ्यते, तस्य भाष्यकर्तुरुपर्युक्तः समयः सत्यमेव संभाव्येत। एवमेव भट्टगोविन्दस्य पितृत्वेन सम्भावितस्य वेङ्कटमाधवस्य समयोऽपि विक्रमद्वादशशताब्द्या उत्तरार्द्धं इति कथयितुं पार्येत।

> एकोनषष्टमध्यायं व्याकरोदिति माधवः।
> जगतामेकवीरस्य विषये निवसन् सुखम्॥

इति वेङ्कटमाधवभाष्यस्थेन श्लोकेन ज्ञायते यदेकवीरराजस्य राज्ये निवसता तेन भाष्यं कृतमिति। चोलराजवंशावलीषु वीरोपाधिधारिणः पञ्च राजानः सञ्जाताः। तेषां समयश्च विक्रमसंवत् ११११–१३१२ [1]पर्यन्तोऽस्ति। एतेषु तृतीयवीरचोलसमयः (११९२–१२०६ वि०) यदि वेङ्कटमाधवस्य स्वीक्रियेत तर्ह्युपर्युक्तायाः संभावनाया एव पुष्टिर्जायेत। इयं च स्थापना अनन्तशयनसंस्कृतग्रन्थावल्याः संस्कृतग्रन्थप्रकाशनकार्याध्यक्षैः श्रीके०साम्बशिवशास्त्रिभिः स्वकीयऋक्संहिताभूमिकायां कृतया "द्वादशशतकपूर्वार्धाद् (११५० ई०) अनर्वाचीनत्वमस्य स्वत एव स्थापितं भवति" इति सम्भावनया, 'वैदिक-वाङ्मय का इतिहास' नाम्नि पुस्तके श्रीभगवद्दत्तमहाशयैः कृतया संभावनया च निकाममनुरुध्यते।

षण्णां गुरूणां नामदर्शनाज्ज्ञायते षड्गुरुशिष्यस्य सर्वे गुरवो दाक्षिणात्या इति। वेङ्कटमाधवश्च स्वनिवासस्थानं दक्षिणापथे चोलदेशं मन्यते—

> अध्यायमष्टपञ्चाशं व्याख्यदार्येषु कश्चन।
> दक्षिणापथमाश्रित्य वर्तमानेषु माधवः॥

---

१. द्रष्टव्यम्—क्वार्टर्ली जर्नल ऑफ दि माइथिक सोसाइटी, भाग २१ अङ्क १, जुलाई १९३० ई०, पृ० ४४–४६।

तीरमाश्रित्य निवसन् कावेर्या दक्षिणं सुखम् ।
चोलेषु निवसन् ग्रामे गोमत्यार्यैः समावृते ॥ इति ।

अतस्तत्पुत्रत्वेन सम्भावितो भट्टगोविन्दोऽपि दाक्षिणात्य एव । इत्थं च स एव षड्गुरुशिष्यस्य गोविन्दनामको गुरुरिति स्वीकर्तुं शक्यते ।

कल्पनामात्रमेवैतत् सर्वम् । विशेषप्रमाणानामभावे किमपीदमित्थन्तया कथयितुं न पार्यते । अत्र विद्वद्भिर्विशेषसामग्रीसमुपलब्धये यत्नो विधेयः ।

---

# महीधरसंग्रहः

शुक्लयजुर्वेदभाष्यकारस्य महीधरस्य समयविषये द्वे मते वर्तेते। श्रीसत्यव्रतसामश्रमिमहोदयैः स्वीये 'निरुक्तालोचने' तस्य समयो विक्रम-द्वादशशताब्दीचतुर्थपाद इति निरणायि। तथाहि—

"तथा शुक्लयजुर्भाष्यप्रणेता महीधरमिश्रः खलु सायणमाधवयोरग्रज इत्यपि ध्रुवम्, महाराजजयचन्द्रप्रदत्तदानपत्रतो महीधरपौत्रस्य १२३२ संवत्समायामवस्थित्युपलब्धेः। तथाहि तत्ताम्रशासनत एवेह किञ्चिदुद्ध-रामः—"यश्चोपरिलिखितग्रामौ सजलस्थलौ सलोहलवणाकरौ समत्स्याकरौ सगर्तोषदौ सगिरिगहननिधानौ समधूकाम्रवनवाटिकाविटपतृण + तिगो-चरपर्यन्तौ सोर्ध्वाधश्चतुराघाटविशुद्धौ स्वसीमापर्यन्तौ द्वात्रिंशदधिकद्वादश-संवत्सरे भाद्रे मासि शुक्लपक्षे त्रयोदश्यां तिथौ रविदिने, अङ्कतोऽपि संवत् १२३२ भाद्रसुदि १३ रवौ, अद्येह श्रीमद्विजयवाराणस्यां गङ्गोदकेन स्नात्वा....महापण्डितश्रीमहीधरपौत्राय महामिश्रपण्डितश्रीहालेपुत्राय महापण्डितश्रीहृषीकेशशर्म्मणे ब्राह्मणाय....प्रदत्तौ मया" इत्यादि। मुद्रितं चैतत्पत्रं ताम्रफलकतः 'काशीविद्यासुधानिधौ' (सितम्बर, १८६९)।

नन्वेवं महीधरीयप्रथममङ्गलाचरणवाक्यत एव यदवगम्यते माधवीय-भाष्यस्य च ततः प्राचीनत्वं "भाष्यं विलोक्यौवटमाधवीयम्" इति, अस्य का गतिरिति चेत्, अत्र वच्मि देवराजेनापि दृष्टं प्राचीनतरमेव माधवीय-भाष्यं तत्र प्रामाणिकत्वेनोपन्यस्तं महीधरेणेति। इह हि नैघण्टुकनिर्वचने उद्धृतानां माधवीयभाष्यवचनानामेकमपि नोपलभ्यते सायणमाधवीयेऽस्मद्-दृष्टभाष्ये, अत आसीदेव तदानीं तद्भाष्यान्तरं माधवीयं नामेत्यत्रास्ति किं विचार्यम्? वाजसनेयिसंहिताभाष्ये यदवोचन्महीधरो माधवस्त्वित्यादि (१३।४५), तदपि न सायणमाधवीयवचनमिति च ध्येयम्।

तदेवं १२३२ संवत्समायां स्थितस्य हृषीकेशस्य पितामहो महीधरः प्रायो द्वादशशताब्दीचतुर्थपादे (सं० ११७६-१२००) प्रणिनाय वेददीपं नाम शुक्लयजुर्भाष्यमित्यनुमानं च भवेन्नासङ्गतम्" इति।

(निरुक्तालोचन—दो, दौ)

तथैव डा० लक्ष्मणस्वरूपमहोदया अपि "इण्डेक्सेज एण्ड अपेण्डिक्सेज

ऑफ् दि निरुक्त" नामकपुस्तकभूमिकायां ७३-७४ पृष्ठयोस्तमेव कालं स्वीकृतवन्तः। निरुक्तालोचनापेक्षयैतदधिकं तत्र वर्तते—

"कन्नौजराज्याधिपतिना महाराजाधिराजजयचन्द्रदेवेन मातापित्रो-रात्मनश्च पुण्ययशोऽभिवृद्धये शार्कराक्षगोत्राय भार्गवच्यवनाप्नवानौर्व्वं-जामदग्न्येति पञ्चप्रवराय महापण्डितश्रीहृषीकेशशर्म्मणे ब्राह्मणाय राजपुत्र-हरीश्चन्द्रनामकरणमहोत्सवे द्वौ ग्रामौ ताम्रपत्रोपरि लिखित्वा दत्ता-वास्ताम्। एष च ताम्रलेखः 'इण्डियन एण्टिक्वेरी' नामके पत्रेऽपि (भा० १८, पृ० १२९-१३४, सन् १८८९) मुद्रितो वर्तते, वाराणसीत उत्तरपूर्व-दिशायां स्थिते सिहवारनामके ग्रामे च उपलब्धः" इति।

'ऑफ्रेक्ट'बृहत्सूचीपत्रे तु महीधरविषये एवं लिखितं वर्तते—

"रामभक्तस्य पुत्रः, रत्नाकरस्य पौत्रः, केशवसुतरत्नेश्वरस्य शिष्यः, महीधरः काश्यां निवसति स्म, इमान्यधोलिखितानि पुस्तकानि च तेन प्रणीतानि—

| | |
|---|---|
| अद्भुतविवेकः | मातृकाक्षरनिघण्टुः |
| ईशावास्योपनिषद्भाष्यम् | योगवासिष्ठसारविवृतिः |
| एकाक्षरकोषः | रामगीताटीका |
| कात्यायनगृह्यसूत्रभाष्यम् | विष्णुभक्तिकल्पलताप्रकाशः |
| कात्यायनशुल्बसूत्रभाष्यम् | वाजसनेयिसंहिताभाष्यम् (वेददीपः) |
| नृसिंहपटलः | षडङ्गरुद्रभाष्यम् |
| पुरुषसूक्तटीका | सारस्वतप्रक्रियाटीका |
| मन्त्रमहोदधिः | सौत्रामणीविनियोगसूत्रार्थः |
| मन्त्रमहोदधिटीका ( नौका ) | |

एतेषु मन्त्रमहोदधिः १६४५ विक्रमे वत्सरे, विष्णुभक्तिकल्पलता-प्रकाशश्च १६५४ विक्रमे वत्सरे लिखितो महीधरेण" इति।

एतेन विक्रमसप्तदशशताब्द्या मध्यभागे महीधरस्य स्थितिः सिद्धा भवति।

ऑफ्रेक्टसूच्याधारमेवाङ्गीकृत्य श्रीभगवद्दत्तमहाशया अपि स्वकीये 'वैदिक वाङ्मय का इतिहास' नामके हिन्दीभाषापुस्तके श्रीसत्यव्रतसाम-श्रमि-डा०लक्ष्मणस्वरूपयोर्मतं निरस्य विक्रमसप्तदशशताब्द्या मध्यभागे महीधरस्य स्थितिं स्थिरीकृतवन्तः। तदित्थम्—

"महीधरः काश्यां निवसति स्म। 'प्रणम्य लक्ष्मीं नृहरिं गणेशं भाष्यं विलोक्यौवटमाधवीयम्' इत्यत्र मङ्गलश्लोके महीधरः सायणमाधवस्य स्मरणं करोति। १३।४५ मन्त्रभाष्ये माधवस्तु—"पृथिव्या उपरिस्थादुत वा.........' इत्यादिना सायणमाधवभाष्यमुद्धरति। यच्च डा० लक्ष्मणस्वरूपादिभिर्नेदं सायणमाधववचनमपि तु सायणमाधवातिरिक्तस्य वेङ्कटमाधवादेरिदं वचनं भविष्यतीत्युक्तम्, तन्न, पूर्वोक्तस्थले महीधरेण यावत्यः पङ्क्तय उद्धृतास्तासां सर्वासां स्वल्पेन पाठभेदेन सह सायणमाधवस्य काण्वसंहितायाश्चतुर्दशाध्यायस्य चतुर्थानुवाकभाष्ये सद्भावोपलब्धेः। अतो मङ्गलाचरणे माधवपदेन सायणमाधवस्यैव ग्रहणम्, सायणमाधवभाष्यस्यैव चोद्धरणं महीधरेण दत्तमिति सिद्ध्यति।

ऑफ्रेख्टसूचीतो ज्ञायते यन्मन्त्रमहोदधिकारो वेददीपकारश्च एक एव महीधरः। उभयोः पुस्तकयोर्मङ्गलश्लोकदर्शनेनैतत् स्पष्टतरं भवति। वेददीपस्य मङ्गलश्लोक उपरि दत्त एव, मन्त्रमहोदधौ च—"प्रणम्य लक्ष्मीं नृहरिं महागणपतिं गुरुम्" इत्येवं वर्तते। अत्रोभयोरपि मङ्गलश्लोकयोः समानदेवतानमस्कारदर्शनादवगम्यते एक एवानयोर्निर्मातेति। मन्त्रमहोदधौ च महीधरेण ग्रन्थसमाप्तिकाल इत्थं दत्तः—

अब्दे विक्रमतो जाते बाणवेदनृपैर्मिते।
ज्येष्ठाष्टम्यां शिवस्याग्रे पूर्णो मन्त्रमहोदधिः॥

मन्त्रमहोदधिटीकायां नौकायां तस्य व्याख्यानमित्थं कृतम्—"पञ्चचत्वारिंशदुत्तरषोडशशततमे विक्रमनृपाद् गते सति.........' इति। वेददीपनिर्माणकालोऽप्यस्य समीप एव स्वीकर्तव्य इत्येवमुपरि प्रतिज्ञातः समयो महीधरस्य सिद्ध्यति" इति।

इत्थं महीधरसमयविषये द्वे मते वर्तेते। तयोः कतरत् समीचीनमेष एवात्र विचारणीयो विषयः। उभयोरपि मतयोर्महीधरः काशीनिवासीति सुनिश्चितमेव। 'भाष्यं विलोक्यौवटमाधवीयम्' इति मङ्गलश्लोकतो ज्ञायते यद् उव्वटभाष्यं माधवभाष्यं च दृष्ट्वा महीधरः स्वकीयं शुक्लयजुर्वेदभाष्यं प्रणिनाय। तत्र उवटभाष्यवन्माधवभाष्यमपि शुक्लयजुर्वेदस्यैव मन्तव्यम्। तेनैव तत्र साहाय्योपलब्धिसम्भवात्, साहचर्याच्च। नहि सायणमाधवातिरिक्तेन केनचिन्माधवेन शुक्लयजुर्वेदस्य प्रणीतं भाष्यं विद्यते। वेङ्कटमाधवस्य भाष्यं तु ऋग्वेदस्योपरि विद्यते। एतदेव 'प्राचीनतरम्' वेङ्कटमाधवीयं भाष्यं देवराजेन दृष्टम्, स्वकीये 'नैघण्टुकनिर्वचने' च

तेनास्यैवोद्धरणं कृतम्। तानि च ऋग्वेदभाष्यवचनानि सायणमाधवीये शुक्लयजुर्भाष्ये नोपलभ्यन्त इति तूचितमेव। तस्माद् 'भाष्यं विलोक्यौवट-माधवीयम्' इत्यत्र माधवीयपदेन सायणमाधवभाष्यमेव ग्राह्यम्। स्वल्पेन पाठभेदेन सहात्र १३।४५ मन्त्रे सायणमाधवभाष्यमुद्धृतं वर्तते इति पूर्वमुक्तमेव। तथा च महीधरो न सायणमाधवयोरग्रजः, अपि तु पश्चाद्भव एवेति। एवं च वेदभाष्यकारो महीधरभट्टस्ताम्रपत्रोद्धृतहृषी-केशपितामहमहीधरमिश्रतो भिन्न एवेति स्वीकर्तव्यम्।

अत्र दृढतरमेकं प्रमाणं दीयते। वाराणस्यां कालभैरवमन्दिरसमीपे घासीटोलाख्ये स्थाने एकस्मिन् गृहे नृसिंहभगवतः प्राचीना मूर्तिवर्तते। एतच्च गृहं वेदभाष्यकारस्य महीधरस्येति तत्र सुप्रसिद्धतरम्। महीधरकुले श्रीनृसिंह इष्टदेव आसीत्, अत एव महीधरः सर्वत्र ग्रन्थारम्भे तस्य स्मरणं करोति। यद्यप्यधुना महीधरकुले कोऽपि पुरुषो न वर्तते, अन्तिमपुरुषस्य वाराणस्यां प्रसिद्धतरस्य श्रीदामोदरवैद्यस्य पुत्री जयपुरनगरे विवाहिता वर्तते, तथापि श्रीदामोदरवैद्यमित्रस्य श्रीचुन्नीलालवैद्यस्य कनिष्ठभ्रातुः श्रीमुन्नीलालौदीच्यस्य संरक्षकतायां नृसिंहपूजादिकं सर्वविधकार्यजातमधु-नाऽपि सम्पद्यते। अस्मिन् कुले बहूनि हस्तलिखितानि पुस्तकान्यासन्। तेषु वैदिकसाहित्यस्य विशिष्टपुस्तकानि काशीस्थराजकीयसंस्कृतमहा-विद्यालयस्य भूतपूर्ववेदाध्यापकैः श्रीविजयचन्द्रमहोदयैः कुत्रचिन्नीतानीति श्रीनारायणशास्त्रिखिस्तेमहोदयसकाशाज्ज्ञातम्। अवशिष्टानि पुस्तकानि च १९३१ ईशवीये वर्षे श्रीनारायणशास्त्रिभिरेव सरस्वतीभवनाय क्रीतानि। अस्मिन् संग्रहेऽधुनापि सार्द्धद्विसहस्रपरिमितानि पुस्तकानि विद्यन्ते। अस्य संग्रहस्य च नाम 'महीधरसंग्रहः' इत्येव कृतं वर्तते। अत्र बहूनि पुस्तकानि महीधरहस्तलिखितानि, कानिचिच्च महीधरेण क्रीतान्यपि वर्तन्ते। पुस्तकानां लेखनसमयश्च विक्रमसंवत् १६३० तः१६६८ पर्यन्तं विद्यते। तत्र बहुषु स्थलेषु महीधरेण स्वनाम 'महीदास' इति धृतं वर्तते। ऑफ्रेक्टबृहत्सूच्यामप्युक्तमेव—'महीदास इति सुप्रसिद्धतरस्य महीधरस्यैव अपरं नाम' इति।

महीधरसंग्रहस्थसामग्रीतो महीधरविषये पर्याप्तः प्रकाशः पतति, अतः सा सर्वा सामग्री क्रमेणात्र संगृह्यते।

(३९) अङ्काङ्कितायां 'पदस्वरचर्चायां' विंशतितमे पत्रे—'संवत् १६३१ वर्षे आषाढ बदि ५ बुधे। महीदासो व्यलेखीत्।' समाप्तौ च—

नरहरिः सकलाघविनाशनो रविहिमांशुहुताशनलोचनः ।
नर····यात्मजया परिचुम्बितोऽवतु जनं निजसेवनतत्परम् ॥

(४०) अङ्काङ्कितस्य 'वेदाङ्गचतुष्टयस्य' मुखपृष्ठे—'भट्टश्रीमहीधरस्य पुस्तकमिदं दत्तं भानुदेवोपाध्यायमहादेवाभ्याम् । शुभं भूयात् ।' मध्ये यत्र तत्र टिप्पणीरूपेण महीधरहस्तलेखो विद्यते । अन्तिमपृष्ठे च—'श्रीमद्दिव्यलक्ष्मीनृसिंहो जयति । इदं श्रीमत्परमतार्किकभट्टश्रीवेणीदत्तस्येति ज्ञातव्यम् ।'

(४२) अङ्किते सर्वानुक्रमणीभाष्ये—'संवत् १६३१ वर्षे आषाढ सुदि रवौ महीदासेन काश्यामनुक्रमणीभाष्यं क्रीतं विप्रसन्निधौ । ............' पुस्तकमध्ये यत्र तत्र महीधरेण टिप्पणी लिखिता । खण्डितपत्राण्यपि पूरितानि । २०७ सङ्ख्याकेऽन्तिमपत्रे च—

भूरामाङ्गधरामितेऽब्द इषमास्यन्त्ये दले वह्न्यहे
वारेऽर्कस्य च नीलकण्ठनगरे भूदासनामा पठन् ।
सर्पच्छत्रधरामरान्वयभवो विद्वत्फनूनन्दनोऽ-
क्रीणात् स्वीयकृते नृसिंहभजनेऽनुक्रान्तिभाष्यं रतः ॥

शिवा नीलकण्ठो गजास्यो नृसिंहो रविर्दण्डपाणिर्गुहो भैरवोऽजः ।
कलिन्दात्मजा जाह्नवी ब्रह्मपुत्री महीदासविप्रं सदाऽवन्तु काश्याम् ॥
श्रीभानुदीक्षित इति प्रथिताभिधानो नारायणो द्विजवरः कमलाकरश्च ।
श्रीकृष्णपण्डितवरः पुरुषोत्तमश्च गोपीति शास्त्रजलधौ कलशोद्भवो यः ॥
वेदाङ्गशास्त्रकुशलः खलु माधवो यो ज्ञश्चैकनाथ इति वामनवासुदेवौ ।
सोमेश्वरो द्विजवरो बुधभानुदेवो यश्चेन्द्रनन्दनगुरुर्बुधविश्वनाथः ॥
श्रीमुद्गलो द्विजवरः खलु रामविज्ञोऽनन्ताह्वयः शिवपुरीवसतिकरा ये ।
ये माधवप्रभृतियोगिवराश्च काश्यां ते मां स्मृताः सकलदुःखहराः प्रपान्तु ॥

(४७) उपनिषत्संग्रहः । अत्र महीधराक्षराणि कतिपयस्थानेषु टिप्पणीरूपेण लिखितानि दरीदृश्यन्ते ।

(२५५) अङ्कितो ग्रन्थः (३५५१) अङ्कितस्य पुस्तकस्य प्रारम्भांशो विद्यते । अनवधानेन द्वयोः स्थानयोः स्थापितः ।

(२५४३) आचार्यहेमचन्द्रविरचितोऽनेकार्थसंग्रहः । अत्र ४७ तमे पत्रे—'संवत् १६४१ वर्षे फाल्गुन सुदि १३ बुधे महीदासेन काश्यामलेखि श्रीनृसिंहप्रीत्यै ।' ६४ तमे पत्रे च—

नेत्रेष्वङ्गधरामिते तु समये श्रीविक्रमार्काद् गते .
चैत्रे मासि सिते दले फणितिथौ वारे गुरोर्वह्निभे ।

विश्वेशे पुटभेदने समलिखद् भूदासविप्रस्त्विमान्
नानार्थान् स्वपरोपकारविधये पौत्रादिपाठाय च ॥

संवत् १६५२ वर्षे चैत्रशुक्लपञ्चमीगुरौ महीदासेन काश्यामनेकार्थसंग्रहोऽलेखीश्वरप्रीत्यै ॥ श्री ॥

श्रीमन्नृसिंहो जगदेकवन्द्यः सुधाकराभो रमया समेतः ।
सुनीलकण्ठो चरचक्रचापाभयानि बिभ्रद् भजतां श्रियेऽस्तु ॥

हरिशम्भुस्मरक्रोडैः सपत्नीकैश्चतुर्दिशम् ।
सेवितः सततं भूयान्महागणपतिः श्रिये ॥

(२५४४) अशोकत्रिरात्रव्रतम् । अन्तिमे पत्रे—'संवत् १६४६ आश्विनशुक्लचतुर्दश्यां महीदासेनालेखि ।'

(२५४५) उत्तरतापनीयोपनिषद्दीपिका । मुखपृष्ठे—'संवत् १६४० वर्षे काश्यां महीदासेन उत्तरतापनीयदीपिका क्रीता ।' अन्तिमपृष्ठे—'महीदासेन क्रीतं काश्यां संवत् १६४० वर्षे स्वपाठाय, तेन नरकेसरी प्रीयतां श्रीनृसिंहः ।'

(२५४६) काव्यादर्शटीका । (प्रथमद्वितीयपरिच्छेदौ) प्रथमपत्रे—

गणेशं नृहरिं श्रीशं वाणीं गिरिशमद्रिजाम् ।
प्रणम्य विलिखाम्येतत् काव्यादर्शस्य टिप्पणम् ॥
तं वन्दे यस्य नखरैरुत्पलादपि कोमलैः ।
शिक्षितं दृप्तदैत्येन्द्रवक्षःपाटनपाटवम् ॥

एकादशे पत्रे—

गणेशं नृहरिं वाणीं रमां नत्वा महीधरः ।
दण्डिद्वितीयकोल्लासे टीकां लिखति बुद्धये ॥

(२५४७) काव्यादर्शटीका । (तृतीयपरिच्छेदः) प्रथमपत्रे—

गणेशश्रीनारसिंहान् नत्वा दण्डितृतीयके ।
उल्लासे लिख्यते टीका यमकालङ्कृतौ शुभा ॥

पञ्चविंशतितमेऽन्तिमे पत्रे—

बाणाङ्गाङ्गेन्द्वब्द ऊर्जे शिवाहे कृष्णे काश्यां भूमिदासो व्यलेखीत् ।
काव्यादर्शे भाष्यमेतद् बुधोक्तं स्वीयालोकायोपकाराय यत्नात् ॥

श्रीनृसिंह रमानाथ नीलकण्ठ त्रिलोचन ।
त्वत्पादपद्मयोः स्वामिन् षट्पदं कुरु मां सदा ॥

(२५४८) गरुडपुराणम् । अन्तिमे पत्रे—'श्रीमन्नृकेसरिणे नमः । गुणनिगमरसद्मासम्मिते हायनेशे धवलमदनघस्रे फाल्गुने मासि काश्याम् । इह गरुडपुराण····खण्डं व्यलेखीन्महिध····जन्मा माधवस्तेन तुष्यात् ॥ महीदासः पूर्णम········'

(२५५०) नलोदयकाव्यम् । अत्र महीधरेण टिप्पणी कृता । अन्तिमपत्रे—'महीदासोऽलिखत् काश्याम्········' । अन्तिमपृष्ठे च—'भट्टश्रीमहीदासस्य नलोदयम् ।'

(२५५१) नारसिंहपूर्वतापनीयोपनिषत् षट्स्वरसामप्रकारश्च । प्रथमपत्रे—'इति षट्स्वरसामप्रकारोऽलेखि महीदासेन ।' अन्तिमपत्रे च—'महीदासोऽलिखत् काश्याम् । संवत् १६३४ चैत्र बदि १३'

(२५५३) नृसिंहपरिचर्या । (वैष्णवानुष्ठानपद्धतिः) मुखपृष्ठे—'संवत् १६४० वर्षे काश्यां महीदासेन क्रीता नृसिंहपरिचर्या स्वस्य पुत्रस्य च विलोकनाय ।' अन्तिमपत्रे—

नभोवेदाङ्गभूवर्षे वाराणस्यामजार्चनाम् ।
महीदासः स्ववसुनाऽक्रीणात् प्रीत्यै हरेः शुभाम् ॥

अस्य पुस्तकस्य महीधरेण स्वयमेव विषयानुक्रमणी रचिता—'इति नृसिंहपरिचर्यानुक्रमणिका महीदासेन कृता नृहरिप्रीत्यै, संवत् १६४७ वैशाखशुदबुधे ।'

(२५५४) नृसिंहार्चनरत्नमाला । समाप्तौ—'महीदासेनालेखि काश्याम् ।'

(२५५५) पूर्वतापनीयोपनिषद्भाष्यम् । मुखपृष्ठे—'संवत् १६४० वर्षे काश्यामुपनिषद्भाष्यं महीदासेन क्रीतं पाठाय ।' अन्तिमपृष्ठे—'महीदासेन क्रीतं काश्यां संवत् १६४० वर्षे स्वपाठाय तेन नरकेशरी प्रीयताम् ।'

(२५५६) प्रक्रियाकौमुदीटीका ।

रसशराङ्गधरामितवत्सरे····शम्भुदिने हरितुष्टये ।
व्यरचि कारकषट्कवृतिर्मुदा महिधरेण निजेक्षणहेतवे ॥
षडिषुषड्वसुधामितवत्सरे सहसि मासि सिते वसुवासरे ।
विवरणं तु समासभवं मुदा निजकृते व्यलिखन्महिकिङ्करः ॥

(२५५७) कात्यायनप्रणीतं प्रातिशाख्यसूत्रम् । समाप्तौ—
'संवत् १६२१ वर्षे कार्तिकशुक्लपञ्चम्यां महीदासः काश्यां प्रातिशाख्यमलेखीत् ।'

(२५५८) प्रातिशाख्यसूत्रभाष्यम्। समाप्तौ—'वाल्मीकिज्ञातीयेन शिवाख्येन लिखितमिदं भट्टमहीदासपठनार्थम्।' अन्तिमपृष्ठे च—'स्वस्ति संवत्

चन्द्ररामरसभूमिहायने आश्विनाद्यदलविष्णुवासरे।
विश्वनाथपुरि भूमिकिङ्करः प्रातिशाख्यविवृतिं त्वलीलिखत्॥

(२५५९) मन्त्रराजरहस्यदीपिका। समाप्तौ—'श्रीनृसिंहप्रीत्यै महीदासेनालेखि काश्याम्। सं० १६४१ आश्वि....'

(२५६१) वैदिकीप्रक्रियाटीका। अस्य पुस्तकस्याद्यपत्रद्वयमनवधानतया (२५५) क्रमाङ्के पातितम्। समाप्तौ—

स्वस्ति श्रीमति खाग्निषोडशमिते वर्षे सहस्ये सिते
वह्नेरह्नि सितस्य वासर इमां श्रीवैदिकीप्रक्रियाम्।
श्रीब्रह्मर्षिसुगोत्रजः फनुसुतो नाम्ना महीकिङ्करः
श्रीविश्वेश्वरपत्तने समलिखल्लक्ष्मीपतेस्तुष्टये॥

(२५६२) ईश्वरकृष्णप्रणीता साङ्ख्यकारिका। समाप्तौ—

वस्वङ्गाङ्कधरावर्षे शुचौ कृष्णे दिशातिथौ।
महीदासोऽलिखत् काश्यां साङ्ख्यं स्वीयावलोकने॥
तेन श्रीनरपञ्चास्यः प्रीयतां रमया युतः।

(२५६३) स्वरप्रक्रिया। अन्तिमे पत्रे—

श्रीमन्नागातपत्रद्विजकुलतिलको विज्ञरत्नाकरस्य
सूनुर्भूमीतलेऽस्मिन् जयति फनुबुधो रामचन्द्रैकचेताः।
तत्सूनुर्भूमिदासोऽधिगिरिशनगरं स्नाञ्जले जाह्नवीये
स्वारीमेतां व्यलेखीत् स्वपठनकृतये प्रक्रियां विष्णुतुष्ट्यै॥
खगुणाष्टमिते वर्षे पौषान्त्याजदिने रवौ।
महीदासोऽलिखत् काश्यां प्रक्रियां स्वर.... ॥

एवमत्र त्रयोविंशतिपुस्तकानामुद्धरणानि दत्तानि। एतेषु (२५५, २५६१) अङ्काङ्किते पुस्तके वस्तुतो न भिन्ने, अपि त्वेकमेव पुस्तकं द्वयोः स्थानयोः स्थापितम्। एवं च महीधरसंग्रहे महीधरसम्बद्धानि द्वाविंशतिपुस्तकानि वर्तन्ते। तेषु पञ्चदशपुस्तकानि महीधरेण स्वयमेव लिखितानि। चत्वारि पुस्तकानि तेन क्रीतानि। एकस्मिन् पुस्तके टिप्पणी कृता। क्रीतपुस्तकेष्वपि तेन यत्र तत्र टिप्पणी कृता। एका पुस्तिकोपायने लब्धा,

अपरा च तस्य पठनार्थं वाल्मीकिज्ञातीयेन शिवाख्येन लिखित्वा दत्तेति।

एतदतिरिक्तास्तिस्रो लघुपुस्तिका महीधरहस्तलिखिता महीधरसंग्रहादन्यत्र सरस्वतीभवन एव लेखकेनोपलब्धाः। तासां विवरणमिदम्—

(१) कृत्यासूक्तम्। प्रथमपत्रे—'श्रीनृसिंहाय नमः। अथर्ववेदे दशमकाण्डादौ कृत्यासूक्तं त्रिवर्गं लिख्यते।' द्वितीयपत्रे—'वाराणस्यां महीदासेनालेखि। संवत् १६४५ वर्षे।'

(२) अथर्ववेदे दशमकाण्डे कृत्यासूक्तपदानि।

(३) प्रत्यङ्गिराकल्पः, ऋणधनचक्रं च।

अत्र 'महीदास' इति नाम्नः षड्विंशतिवारमावृत्तिः सञ्जाता, द्विवारं महीधरभूदासभूमिदासमहिधराणाम्, महिकिङ्करभूमिकिङ्करमहीकिङ्कराणां त्वेकवारमेव। महीधरमहीदासावित्येव वास्तविके नामनी, भूदासादयस्तु श्लोकयोजनार्थमेवेति सुस्पष्टतरमाभाति। तत्रापि 'महीदास' इत्यपि वैनयिकं नाम प्रतीयते। तस्य वास्तविकं तु नाम 'महीधर' इत्येव, मन्त्रमहोदध्यादौ तस्यैव सर्वत्र दर्शनात् प्रसिद्धतरत्वाच्च। महीधरस्य वैष्णवत्वात् 'महीदास' इति संज्ञा वैष्णवमतानुसारिणीत्यपि वक्तुं शक्यते।

एष च महीधरो नृसिंहभगवतः परमभक्त आसीदिति लेखदर्शनत एव प्रतीयते। गणेशादीनामप्येष यत्र तत्र स्मरणं करोति। मन्त्रमहोदधिसमाप्तावपि—

राजा लक्ष्मीनृसिंहो जयति सुखकरं श्रीनृसिंहं भजेय<br>
दैत्याधीशा महान्तोऽहसत नृहरिणा श्रीनृसिंहास्य नौमि।<br>
सेव्यो लक्ष्मीनृसिंहादपर इह नहि श्रीनृसिंहस्य पादौ<br>
सेवे लक्ष्मीनृसिंहे वसतु मम मनः श्रीनृसिंहाऽव भक्तम्॥

विश्वेशो गिरिजा बिन्दुमाधवो मणिकर्णिका।<br>
भैरवो जाह्नवी दण्डपाणिर्मे तन्वतां शिवम्॥

इत्येवं लक्ष्मीनृसिंहविश्वेश्वरादीनां स्मरणं विदधाति।

अत्र 'सर्पच्छत्रधरामरान्वयभवः','श्रीमन्नागातपत्रद्विजकुलतिलकः' इति द्वाभ्यामुद्धरणाभ्यां तेन स्वकीयकुलस्य परिचयो दत्तः। तथैव 'विद्वत्फनूनन्दनः', 'विज्ञरत्नाकरस्य सूनुर्भूमीतलेऽस्मिन् जयति फनुबुधो रामचन्द्रैकचेताः। तत्सूनुर्भूमिदासः' इत्याभ्यां स्वपितुः पितामहस्य च नामनिर्देशः कृतः। एतदेव तथ्यं मन्त्रमहोदधिसमाप्तौ स्थितैरेभिः श्लोकैरपि स्फुटीभवति—

अहिच्छत्रद्विजच्छत्रो वत्सगोत्रसमुद्भवः ।
आसीद् रत्नाकरो नाम विद्वान् ख्यातो' धरातले ॥
तत्तनूजा रामभक्तः फनूभट्टाभिधोऽभवत् ।
महीधरस्तदुत्पन्नः संसारासारतां विदन् ॥
निजदेशं परित्यज्य गतो वाराणसीं पुरीम् ।
सेवमानो नरहरिं तन्त्रग्रन्थमिमं व्यधात् ॥
कल्याणाभिधपुत्रेण तथान्यैर्द्विजसत्तमैः ।
सम्प्रार्थितः स्वमत्यासौ नाम्ना मन्त्रमहोदधिम् ॥

इयांस्तु विशेषः—महीधरो वत्सगोत्रसमुद्भवः, एष च संसारस्यासारतां विदित्वा निजदेशं परित्यज्य स्वयमेव वाराणसीमागत इति। पितृपितामहादीनां भूमिस्तु 'आनर्त' देश आसीदिति 'अहिच्छत्रद्विजच्छत्रः' इत्यादिना प्रतीयते। आनर्तदेशश्च सौराष्ट्रे द्वारावतीसमीपस्थः प्रदेश उच्यते। स्कन्दपुराणीयनागरखण्डतो जातिभास्करीयनागरब्राह्मणोत्पत्तिप्रकरणतश्च ज्ञायते यदानर्तदेशे कश्चिदहिच्छत्रनामको ग्राम आसीत्। अनेन ग्रामेणैव सम्बद्धयैकया कथया पिशुनहरापरपर्यायाहिच्छत्रवंशीयानां नागरब्राह्मणानामुत्पत्तिस्तत्र निर्दिष्टा विद्यते। पिशुनहरशब्द एव कालक्रमेण 'प्रश्नोरा' सञ्जातः। तथा चानर्तदेशीयः, अहिच्छत्रवंशीयः, नागरविभागान्तर्गतपिशुनहरज्ञातीयः, वत्सगोत्रीयः, विज्ञरत्नाकरस्य पौत्रः, रामभक्तस्य फनूभट्टस्य पुत्रो महीधरः स्वदेशं त्यक्त्वा वाराणस्यामागत इति सिद्ध्यति।

ऑफ्रेक्टबृहत्सूच्यां महीधरस्य पितुर्नाम 'रामभक्त' इति दत्तमस्ति। तच्च न साधु। फनूभट्ट इत्येव तस्य नाम। स च रामचन्द्रस्य भक्त आसीदिति 'रामचन्द्रैकचेताः' इत्यादिना स्पष्टं प्रतीयते। एवं च मन्त्रमहोदधौ 'तत्तनूजो रामभक्तः फनूभट्टाभिधोऽभवत्' इत्यत्र विशेषणतया समागतो रामभक्तशब्द एव ऑफ्रेक्टसूच्यां मुख्यनाम्ना दत्त इति प्रतीयते।

ऑफ्रेक्टसूच्यां महीधरस्य गुरोर्नाम रत्नेश्वर इति दत्तम्, स च केशवस्य पुत्र इति। उपर्युद्धृतायां सामग्र्यां महीधरस्य प्रकाशितेषु ग्रन्थेषु चैतन्नाम न दृश्यते। यद्यपि (४२) अङ्काङ्किते पुस्तके 'श्रीभानुदीक्षित इति प्रथिताभिधानः' इत्यादिना बहूनां विदुषां नामान्युट्टङ्कितानि, किन्तु तत्र रत्नेश्वरः केशव इति वा नाम न दृश्यते। गुरोर्नामधेयस्य कुत्रापि चर्चा नास्तीत्यस्य किं कारणमिति न जानीमः।

महीधरस्य पुत्रस्य नाम 'कल्याण' आसीदिति मन्त्रमहोदधिस्थश्लोकेन ज्ञायते। एष च कल्याण आयुर्वेदीयबालतन्त्रनामकग्रन्थस्य प्रणेताऽऽसीदिति ऑफ्रेख्टसूचीतो ज्ञायते। यतो हि तत्र बालतन्त्रग्रन्थस्य प्रणेता कल्याणो महीधरस्य पुत्र इति स्पष्टमेवोक्तम्।

महीधरस्य पौत्रः प्रसिद्धो महानैयायिको वेणीदत्त आसीदित्येषा जनश्रुतिरत्र विद्यते। महीधरसंग्रहस्य (४०) अङ्काङ्किते पुस्तके 'इदं पुस्तकं श्रीमत्परमतार्किकभट्टवेणीदत्तस्येति ज्ञातव्यम्' इति लिखितं विद्यते। इदं च पुस्तकं महीधराय भानुदेवोपाध्यायमहादेवाभ्यां दत्तम्। तस्मिन्नेव पुस्तक उपर्युक्तं वाक्यमपि भिन्नाक्षरेण लिखितं विद्यते। तेन ज्ञायते यद् भट्टवेणीदत्तेन महीधरसम्बन्धिना भाव्यमिति। तेन च वेणीदत्तो महीधरस्य पौत्र इति नामूलेयं जनश्रुतिरित्यपि कथयितुं पार्यते।

महीधरेण वैदिकप्रक्रियाटीका स्वरप्रक्रिया च १६३० मिते विक्रमे वत्सरे लिखिता। १६२८ तमे वत्सरे लिखितं वेदाङ्गचतुष्टयपुस्तकमस्मिन्नेव समय उपायने लब्धम्। १६३१ मिते वत्सरे च सर्वानुक्रमणीभाष्यं प्रातिशाख्यसूत्रं च लिखितम्। अस्मिन् समये यदि महीधरो विंशतिवर्षवयस्कः स्वीक्रियेत तर्हि तस्य जन्मकालः १६१० विक्रमवत्सरसमीपे समायाति। एवमेव तेन काव्यादर्शटीका १६६५ मिते वर्षे लिखिता, १६६८ तमे वत्सरे च साङ्ख्यकारिका। एवं च १६१० विक्रमवत्सरतः १६६८ वत्सरपर्यन्तं महीधरस्य स्थितिः साधु सिद्धा भवति। तथा च ऑफ्रेख्टभगवद्दत्तमहोदयाभ्यां स्वीकृत एव महीधरसमयः साधु। सत्यव्रतसामश्रमि-डा०लक्ष्मणस्वरूपमहोदययोर्मतं तु न शोभनमित्यनयोपर्युद्धृतया सामग्र्या निर्विवादरूपेण सिद्ध्यति।

अस्मिन् महीधरसंग्रहे यद्यपि महीधरलिखितानि बहूनि पुस्तकान्युपलभ्यन्ते, तथापि ऑफ्रेख्टसूच्यनुसारं महीधरप्रणीतेषु सप्तदशसु ग्रन्थेषु मध्ये एकमपि पुस्तकं तेन लिखितमत्र नोपलभ्यत इति महान् खेदस्य विषयः। चत्वारः पञ्च वा महीधरप्रणीता ग्रन्था अत्रोपलभ्यन्ते। तेऽप्यत्याधुनिकलेखकलिखिता इति साम्प्रतमेतावदेवोक्त्वा विरम्यते॥

---

# सौत्रामणीविनियोगसूत्रार्थः

सुषमायाः पञ्चमोपाधिवितरणोत्सवाङ्के 'महीधरसंग्रह'-नामको लेखः प्रकाशितपूर्वः। तत्र 'आफ्रेख्ट'सूचीतो महीधरग्रथितानां सप्तदशग्रन्थानां नामान्युट्टङ्कितानि। शर्मण्यदेशीयेन 'आफ्रेख्ट'-महाशयेन तत्रैव वसता तदाप्रभृति प्रकाशितानां ग्रन्थागारसूचीनामन्यासां च गवेषणासामग्रीणां साहाय्येन ग्रथितैषा महासूची। अतस्तत्रत्यानां गुणदोषादीनां संक्रमणमत्र स्वतः सिद्धम्। सर्वासां महीधरकृतीनां समालोचनमन्यस्मिन् कस्मिश्चिल्लेखे विधास्यते। अत्र केवलं सौत्रामणीविनियोगसूत्रार्थविषये किमपि संक्षेपेणोच्यते।

एष ग्रन्थ आफ्रेख्टसूच्यां सरस्वतीभवनप्रकाशितसूचीतो गृहीतः। सरस्वतीभवनस्थितां महीधरसम्बद्धां विप्रकीर्णां सामग्रीमन्वेषयता मयैकदा दृष्ट एष ग्रन्थः। महीधरसंग्रहे स्वेनैव लिखिता महीधरकृतिर्नैकाप्युपलब्धा, किन्तु ग्रन्थोऽयं स्वयमेव रचितो लिखितश्च महीधरेण। एवं चाद्यावध्युपलब्धेषु महीधरग्रन्थेषु स्वहस्तलिखिता प्रथमेयं तत्कृतिरिति।

एष च ग्रन्थः सरस्वतीभवनस्यातिप्राचीनसंग्रहस्थः साम्प्रतं वैदिकविभागे स्थापितः। अत्रातीव जीर्णानि द्वादशपत्राणि। ग्रन्थसमाप्तौ—"इति प्रायश्चित्तानि समाप्तानि। इति संहितासप्तमाष्टमाध्यायमन्त्राणां विनियोजकसूत्राणि समाप्तानि। द्विसायकाङ्गभूवर्षे पौषाद्यगणपत्यहे। महीदासोऽलिखत् काश्यां सूत्रभाष्यं निजेक्षणे॥ श्रीनृसिंहाय रमेश्वराय नमो नमः।" इति पुष्पिका वर्तते।

अस्याः पुष्पिकाया अनन्तरमेवान्येन केनचिदाधुनिकेन ग्रन्थस्वामिना 'सौत्रामणीविनियोगसूत्रार्थः' इति ग्रन्थनाम स्थापितम्। किन्तु पुस्तकस्यैतस्य पर्यालोचनया प्रमाद एवैष इति प्रतिभाति, ग्रन्थारम्भे—"श्रीनृसिंहाय नमः। सप्तमाध्यायमारभ्य मन्त्रविनियोजकसूत्राणि लिख्यन्ते" इति दर्शनात्, ग्रन्थसमाप्तिपुष्पिकावाक्यात्, ग्रन्थस्यान्तरङ्गपरीक्षणाच्च शुक्लयजुर्माध्यन्दिनसंहितायाः सप्तमाष्टमाध्यायस्थानां मन्त्राणां विनियोजकानि कात्यायनश्रौतसूत्रस्थानि सूत्राण्यत्र व्याख्यातानीति स्पष्टं प्रतीयते। एतानि च सूत्राणि प्रायशः कात्यायनश्रौतसूत्रस्य नवमदशमाध्यायस्थानि। तत्र च

नहि सौत्रामण्या निरूपणम्, तत्रत्य एकोनविंशाध्याय एव तस्या निरूपणात्। एवं चास्य ग्रन्थस्य नामकरणे प्रमाद एव संजातः। तद्वशादेव सरस्वतीभवनसूचीपत्रे परम्परया चाफ्रेक्टबृहत्सूच्यामपि भ्रमोऽयं यथावदवस्थितः।

वस्तुतस्तु महीधरेण स्वकीयस्य प्रसिद्धतरस्य माध्यन्दिनसंहिताभाष्यस्य रचनायाः प्राक् कात्यायनश्रौतसूत्रस्य संहितामन्त्रविनियोजकानां सूत्राणां किमपि संक्षिप्ततरं व्याख्यानं भाष्यरचनायां साहाय्यार्थं विहितमिति प्रतिभाति, अत्रत्यानां सर्वेषां सूत्राणां संहितासप्तमाष्टमाध्यायभाष्ये आनुपूर्व्या यथावदुपलम्भात्। अन्यच्च, अत्र द्विविधा पत्रसंख्या दृश्यते। एका १-१२ पर्यन्ता, अपरा च ३२-४३ पर्यन्तेति। अत्र या ३२-४३ पर्यन्ताऽपरा संख्या तया ज्ञायतेऽस्य ग्रन्थस्यैकत्रिंशत् पत्राणि व्यतीतानीति। एवं चैतदनुमातुं सुशकमेष्वेकत्रिंशत्पत्रेषु पूर्वेषां षण्णामध्यायानां मन्त्रविनियोजकानि सूत्राणि व्याख्यातानि स्युरिति। तथा च कात्यायनश्रौतसूत्रस्य मन्त्रविनियोजकसूत्राणां व्याख्यानमेतन्न तु सौत्रामणीविनियोगसूत्रार्थं इति सुधीभिर्विभाव्यम्।

वेदभाष्यकारो महीधरो मन्त्रमहोदध्यादितान्त्रिकग्रन्थनिर्मातुर्महीधराद्भिन्नोऽभिन्नो वेत्यत्र साधकबाधकानि प्रबलानि प्रमाणान्यद्यावधि नोपलब्धान्यासन्। पुस्तकस्यैतस्योपलब्ध्या विवादस्यास्यैक एव महीधरो न तु द्वाविति पक्षे निर्णयो जातः। अस्य प्रमाणं च सर्वेषामत्रत्यानां सूत्राणामानुपूर्व्या महीधरभाष्ये समुपलम्भनमेव। अपि च—'अयं वेन इत्येके' (९।६।१२) इति मुद्रितश्रौतसूत्रपाठः, अत्र तु—'मन्थिनमयं वेन इति' इति, महीधरभाष्येऽपि (७।१६) एष एव पाठः। एवमेव—"आघा ये (७।३२) इति मन्त्रस्य सोपयामस्यैष ते इत्यस्य च विनियोगः कात्यायनेनोक्तः" इत्यत्रत्यः पाठः, महीधरभाष्येऽपि—"अस्या विनियोगः कात्यायनेनोक्तः" इति। एभिः प्रमाणैरन्यैश्चान्तरङ्गपरीक्षणैरेक एव सर्वेषामेषां ग्रन्थानां रचयितेति स्फुटं प्रतिभाति।

म० म० श्रीविद्याधरगौडमहाशयैः कात्यायनश्रौतसूत्रभूमिकायामस्य श्रौतसूत्रस्य चतुर्णां भाष्याणामुल्लेखः कृतः। तत्र महीधरभाष्यस्य नास्ति चर्चा। तथापि द्वयोरनयोर्व्याख्यानवृत्त्योरतीव साम्यं दृश्यते। द्वयोरप्यनयोरन्यत्किमपि मूलं स्यादिति संभाव्यते॥

# प्राचीनं निर्णयपत्रम्[1]

कस्यचिद् ब्राह्मणस्य चत्वारः पुत्राः पित्रुपरमानन्तरं पित्रर्जितं महाराज्ञीदत्तं निबन्धं तत्तज्जन्यपुत्रपौत्रादिभोगयोगलेखकं चतुर्द्धा विभज्य गृहीत्वा पृथक् पृथक् स्थिताः। तेष्वेकः पत्नीपुत्ररहितः कन्यां त्यक्त्वा दिवं जगाम। ततः सा कन्या तत्पितृदाये जाताधिकारा पश्चात्परिणीता सती निरपत्या मृता। ततस्तत्प्राप्तपितृदाये तद्भर्ता तत्पितृव्यादयश्च विवदन्ते। तत्र कस्याधिकार इति यवनानीलिखितप्रश्नपत्रं भर्त्रधिकारबोधकव्यवस्थापत्त्रत्रयेण पितृव्याद्यधिकारबोधकव्यवस्थापत्रद्वयेन च सहितं लक्ष्मणपुरराजधानीस्थरजीडण्ड [ रेजीडेन्ट ] साहबप्रेषितमवलोक्य वाराणस्यधिकरणकश्रीमत्कम्पनीसंस्थापितसंस्कृतपाठशालास्थविद्वद्भिरुत्तरं दीयते। तथा हि—

उक्तपितृदाये पितृकुलीनसत्त्वे भर्तुर्नाधिकारः, किन्तु पितृप्रत्यासन्नानां पितृव्यादीनामेव, तादृशकन्यायाः प्रागभावे पितृप्रत्यासन्नानामेवाधिकारप्रसक्तेस्तद्ध्वंसं(सेऽ)पि तेषामेवाधिकारौचित्यात्। अत एव [2]दायक्रमसंग्रहे—"कुमारी जाताधिकारा पश्चात्परिणीता सत्यविद्यमानपुत्रा यदि म्रियेत तदा तत्पितृदाये सपुत्त्रायाः सम्भावितपुत्त्रायाश्च भगिन्यास्तुल्योऽधिकारो न तु तद्भर्त्रादीनाम्, स्त्रीधन एव तेषामधिकारात्" इत्युक्तं सङ्ग-

---

१. आंग्लशासकैर्भारते स्वसाम्राज्यस्थापनानुकालमेव दायभागादिविषयकाणामभियोगानां निर्णये काठिन्यमनुभूतम्। एतदर्थं तैः समये समये पण्डितानां साहाय्यं प्रार्थितम्। अनन्तरमेतदर्थमेव वाराणस्यामेकस्याः संस्कृतपाठशालायाः स्थापना विहिता। अत्रत्याध्यापकैरीदृशानां बहूनां विवादानां विषये व्यवस्थापत्रमदायि। तेषु बहूनि निर्णयपत्राणि सरस्वतीभवनपुस्तकालये सुरक्षितानि तिष्ठन्ति। तेष्वेकतमस्य लक्ष्मणपुरीय-'रेजीडेन्ट'-महाशयप्रेषिताभियोगस्य निर्णयपत्रमेतत् प्रकाश्यते। अत्र संस्कृतपाठशालीयानां नवाध्यापकानां हस्ताक्षराणि सन्ति। तानि च समानलिपिदर्शनादेकेनैव लेखकेनोट्टङ्कितानीति ज्ञायते। अनुमीयते—मूलभूतं निर्णयपत्रम्, यस्मिन् पण्डितानां हस्ताक्षराण्यासन्, लक्ष्मणपुरं प्रेषितम्, तस्यैषा प्रतिलिपिश्चात्र स्थापितेति।

२. दायाधिकारक्रमसंग्रहापरनामधेयो जयकृष्णतर्कालङ्कारकृतो धर्मशास्त्रग्रन्थ इति आफ्रेक्टबृहत्सूच्याम्। वस्तुतस्तु जीमूतवाहनकृतदायभागस्य श्रीकृष्णतर्कालङ्कारकृता टीकेयम्, सा चाधुना कलिकाततः प्रकाशिता। अनयोर्ग्रन्थयोर्वङ्गबिहारयोर्विशिष्टा मान्यता विद्यते।

च्छते। सङ्गच्छते च—[1]'अप्रजः स्त्रीधनं भर्तुः' इत्यस्य ब्राह्मादिविवाह-निमित्तकधनविषयकताया व्याख्यानाद् दायभागकृतां पितृदायत्वेन प्राप्तस्य धनस्य पितृकुलगामित्वमभिमतम्। यद्यपि मिताक्षराकारेण स्त्रीधनं यौगिक-मेवाङ्गीकृतम्, तथापि 'अप्रजः स्त्रीधनम्' इत्यस्य पितृदायातिरिक्तविषये चारितार्थ्येन पितृदायस्थले प्रागभावकालिकप्रसक्ताधिकारिणो ध्वंसेऽप्यधि-कारत्यागे मानाभावेन पितृसम्बन्धिसत्ताकालिकपितृदायातिरिक्तविषय-कताया एवौचित्यात्। अन्यथा 'अप्रजः स्त्रीधनम्' इत्यस्य पिण्डप्रत्यासत्त्याऽऽ-वश्यकप्राप्तभर्त्रधिकारानुवादकस्योक्तस्थले विधायकत्वकल्पने विधिवैषम्य-प्रसङ्गो गौरवं च स्यात्। 'शेषेषु[2] पितृगामि तत्' इत्यस्य भर्तुः पिण्ड-प्रत्यासत्तिरस्तीति बोधनद्वारा पिण्डप्रत्यासत्तिप्राप्तस्यैव भर्त्रधिकारस्य बाधकत्वमिति बाधनार्थम् 'अप्रजः स्त्री' इत्यस्य पिण्डप्रत्यासत्तिप्राप्तार्था-नुवादकत्वं स्पष्टमेव। अत एव आसुरादिविवाहेषु भर्तृतो दायप्राप्तस्य स्त्रीधनस्य न पितृकुलगामिता प्रागभावे सति यस्याधिकारस्तस्यैव ध्वंसेऽ-प्यधिकार इत्यनेन पितृकुलगामिताबाधात्। न च प्रकृतधने पिण्डप्रत्या-सत्त्या भर्तुरेवाधिकार इति वाच्यम्, बाधकान्तरसद्भावे पिण्डप्रत्यासत्ते-रप्रयोजकत्वात्। अत एव पुत्रसत्त्वेऽपि स्त्रीधने दुहितॄणामेवाधिकार इति सर्वैरेव सिद्धान्तितम्। एवं चासुरादिविवाहेषु भर्तृदायप्राप्तस्य भर्तृकुल-गामित्ववद् ब्राह्मादिष्वपि पितृदायप्राप्तस्य पितृकुलगामिता निर्बाधैव। अत एव 'ऋक्थं मृतायाः कन्यायाः' इति बौधायनवचसो[2] मिताक्षराकारमते एतादृशविषयकताकल्पनं युक्तमेव। एतेन 'अप्रजः स्त्रीधनं भर्तुः' इत्यस्य यथाश्रुतमिताक्षराकारकृतविवरणाभिप्रायेण प्रकृते भर्त्रधिकारं वर्णयन्तोऽपि निरस्ताः। तत्तज्जन्यपुत्रपौत्रादिविषयकयोगदानमप्येतादृशनिबन्धस्य तादृशपितृकुलगामित्व एवानुकूलमित्यपि ध्येयम्। एवं चैतादृशधनस्य पितृकुलगामित्वव्यवस्थापनमेव सम्यगिति।

आषाढकृष्णनवम्यां बुधे लिपिरियम्। संवत् १९१० ॥

| | | |
|---|---|---|
| ईश्वरदत्त प० | दुर्गादत्त प० | नारायण शा० |
| हीरानन्द प० | देवदत्त प० | कालीप्रसाद भ० |
| उमराव प० | काशीनाथ शा० | गुल्ज़ार प० |

१. याज्ञवल्क्यस्मृतौ व्यवहाराध्याये, श्लो० १४५।

२. याज्ञवल्क्यस्मृतिटीकाकारादिभिर्बौधायननाम्नोद्धृतम्। बौधायनस्मृतौ दाय-प्रकरणे तु नोपलभ्यत एतद्वचनम्।

# महीधरीयमनादिदीपविवरणम्

'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के महीधरविषयक एको लेखः प्रकाशितः। सप्तमवर्षद्वितीयाङ्के च सौत्रामणीविनियो।सूत्रार्थशीर्षकोऽपरो निबन्धः प्राकट्यं नीतः, यत्र महीधररचितेषु नास्ति कोऽप्येतन्नामको ग्रन्थोऽपि तु भ्रमवशादेव कात्यायनश्रौतसूत्रव्याख्यानस्य तद्विरचितस्य केनचित् सौत्रामणीविनियोगसूत्रार्थ इति नाम स्थापितमिति सप्रमाणं प्रतिपादितम्। निबन्धयोरनयोः प्रकाशनानन्तरं महीधरसंबन्धिनी बहुविधा सामग्री दृष्टिपथमायाता प्रकाशिताऽप्रकाशिता च। प्रकाशितासु सामग्रीषु सरस्वतीभवनग्रन्थमालायां प्रकाशितयोर्वेणीदत्तप्रणीतयोः पदार्थमण्डन-भेद-जयश्रीनाम्नोर्ग्रन्थयोर्भूमिके, ब्रह्मविद्यायां (व० ४, पृ० १३५, श्रीके० एम० शर्मणा, भाण्डारकरप्राच्यगवेषणासंस्थानशोधपत्रिकायां (व० २१, पृ० २४८) श्रोपी० के० गोडेमहाशयेन च प्रकाशितौ लेखौ, द्वित्राश्च महीधरविरचिता ग्रन्थाः, अप्रकाशितासु च सरस्वतीभवने विद्यमाना विविधविषयका हस्तलेखा अवसेयाः। समुपलब्धायामेतस्यां सामग्र्यां प्रथमे निबन्धे परिवर्तनपरिवर्द्धनयोरतीवावश्यकता समनुभूयते। सा च सति काले पूर्तिं गमिष्यत्येव। अधुना त्वज्ञातचरस्य महीधररचितस्यानादिदीपविवरणनाम्नो ग्रन्थस्य परिचयो विदुषां पुरतः समुपस्थाप्यते। मन्ये महीधरविषयेऽपि कापि नूतनानेन सूचनाऽधिगता स्यात्।

सरस्वतीभवनस्थे महीधरसंग्रहे २२३० संख्याङ्किता विद्यतेऽस्य ग्रन्थस्य हस्तलेखः। हस्तनिर्मितसुपुष्टतूलपत्राधारे पृष्ठमात्रादिविशेषतायुतैर्देवनागराक्षरैर्लिखितोऽयं ग्रन्थो धारयत्यात्मनोऽखण्डितं वपुः १–१९० पत्रात्मकम्। १५८–१५९ पत्रयोर्द्वयोरपि १५९ आत्मिका संख्यैव स्थापितेति तां विहायान्यत्र पत्रसंख्याङ्कने न कोऽपि व्यतिक्रमः। प्रतिपत्रं षोडश पङ्क्तयः, प्रतिपङ्क्त्यक्षराणि चत्वारिंशदासते। मुखपृष्ठं रिक्तप्रायम्, अन्तिमे पत्रे च चतुर्दश पङ्क्तयो विद्यन्ते। पत्राणामाकारः ११" × ४½" परिमितः। ग्रन्थान्ते लिपिकालः १६७८ विक्रमसंवत्सरः स्थापितः। [1]लेखकस्य तु

---

१. वेणीदत्तरचितस्य पदार्थमण्डनस्य भूमिकायाम् (पृ० ५)—"लक्ष्मणः १६७८ वैक्रमसंवत्सरे स्वपितामहरचितस्यानादिदीपटीकाविवरणस्य प्रति-

नाम तत्र न दृश्यते। हस्तलेखोऽयमतीव शुद्धः, शोभनाक्षराङ्कितः, सुरक्षितदशायां च तिष्ठन्नास्ते। अस्यैकस्यैव हस्तलेखस्य साहाय्येनैतस्य ग्रन्थस्य शुद्धतरं संस्करणं संपादयितुं शक्यते।

साम्प्रतमत्र हस्तलेखस्य ग्रन्थारम्भमध्यसमाप्तिस्था आवश्यकांशा उद्ध्रियन्ते—

### ग्रन्थारम्भः

ॐ नमो गुरुभ्यः शिवादिभ्यो नमः ॥ नृसिंहशर्वार्करमाभवानीगणेशवाणीगुरुपादपद्मान्। प्रणम्य तेषां कृपयैव सम्यगनादिदीपं विवृणोमि काश्याम् ॥ १ ॥ वृद्धो लेखाऽसमर्थोऽहं स्वापतेयाल्पतान्वितः। नारायणाग्रहादेवानादिदीपं प्रकाशये ॥ २ ॥ संसारार्णवमग्नानामज्ञानजम्बालव्याकुलानामीशानभजनहीनानां नृणामनुजिघृक्षयाऽनादिभूपोऽनादिदीपमाविरकरोत्कृपया। तत्रादौ शिष्टाचारावनाय निर्विघ्नग्रन्थसमाप्त्यै गणेशादिस्मरणरूपं मङ्गलमाचरति—देवमिति। देवं विघ्नभिदं शिवं शशिभृतं देवीं गिरां मातरं विद्याकल्पतरोर्गुरोश्च चरणाम्भोजे प्रणम्यादरात्। विश्वं नेतुमनादिभूपमुनिनाऽनादिप्रदीपोऽधुना स्वर्मुक्त्योः पथि मोहवत्यतितमश्छन्नेऽधिकं द्योत्यते ॥ १ ॥ अनादिभूप एव मुनिस्तेनानादिदीपो नाम ग्रन्थो द्योत्यते प्रकाश्यते।

### पुष्पिकाः

[1]इति श्रीमहीदासकृतेऽनादिदीपविवरणे सन्ध्याविधिः।

[2]इति परमशैवाचार्यसरोजराजीभास्वतः प्रणतिनतधराधीशधोरणिचिकुरचयान्धकारपरिचयरोचिष्णुचरणनखनक्षत्रमयूखस्य श्रीमदनादिभूपस्य कृतौ स्नानतर्पणविधिर्नाम अनादिदीपके नित्याधिकारे प्रथमप्रकरणे प्रथमः समुद्देशः ॥ छ ॥ इत्यनादिदीपविवरणे महीदासकृते प्रथमोद्देशः ॥

---

लिपिलेखकः" इत्युक्तिर्हस्तलेखसमाप्तौ—"पुस्तकमिदं भ(ट ?ट्ट) लक्ष्मणस्य" इति वाक्यदर्शनमूला। एतच्च वाक्यं नैव प्रतिलिपिलेखकस्य, तत्र भिन्नाक्षरत्वस्य स्पष्टत्वात्।

१. सप्तविंशतितमपत्रस्य षष्ठ्यां पङ्क्तौ।

२. प० ३१, प० ५।

[1]चौलुक्यकुलपरमाराध्यस्य चरमजलधिवेलाविपिनालीविस्तृताश्रम-सोमेश्वरापरवपुषः पश्चिमगोलकीवंशमुक्तामणेः परमशैवाचार्यश्रीमदनादि-भूपस्य कृतौ प्रथमप्रकरणे नित्याधिकारे सूर्यार्चनं नाम द्वितीयः समुद्देशः ॥

[2]इति सकलजगतोयाचकचकोरपारणापूर्णपीयूषमयूखस्य निरन्तर-विसृज्यमानमानदानमन्दाक्षीकृतकल्पवृक्षस्य श्रीमदनादिदेवभूपस्य कृता-वनादिदीपके प्रथमप्रकरणे तृतीयः समुद्देशः ॥ इत्यनादिबोधविवरणे मही-दासकृते शिवपूजाप्रतिपादनं तृतीयः समुद्देशः ॥

[3]इत्यनादिदीपविवरणे महीदासकृते शिवार्चनं नाम प्रकरणम् ॥

[4]इत्यनादिदीपविवरणे चण्डार्चनविधिर्दशमं प्रकरणम् ॥

[5]इत्यनादिदीपविवरणे महीदासकृते धेनुपूजादिप्रकरणम् ॥ ११ ॥

[6]इति निरन्तरार्थिजनदीयमानदानजितचिन्तामणिकल्पवृक्षकनकाद्रि-घनदप्रभृतिप्रस्तूयमानयशस इति परमशैवाचार्यश्रीमदनादिदेवभूपस्य कृतावनादिप्रदीपे नित्याधिकारे प्रथमप्रकरणे चतुर्थः समुद्देशः । इत्यनादि-प्रदीपविवरणे महीधरविरचिते भोजनादिनिरूपणं द्वादशं प्रकरणम् ॥

[7]इत्यनादिदीपविवरणे महीदासकृते हेरम्बार्चाप्रकरणं त्रयोदशम् ॥

[8]इति परमशैवाचार्यश्रीमदनादिदेवस्य कृतावनादिदीपके द्वितीये नैमि-त्तिकाधिकारप्रकरणे पवित्राधिवासनं नाम प्रथमः समुद्देशः ॥ छ ॥ इति महीदासकृतेऽनादिदीपविवरणे पवित्राधिवासनम् ॥ छ ॥

[9]इति नि(नै)मित्त(त्ति)का धिका)रे प्रथमप्रकरणे ? यत्तपोरूपतपनसमा-चामितत्रिलोकीवर्तिमहामोहान्धकारस्य श्रीमदनादिदेवभूपस्य कृतावनादि-दीपके नैमित्तिकाधिकारे द्वितीयप्रकरणे द्वितीयः समुद्देशः ॥ छ ॥ इति महीदासकृतेऽनादिदीपविवरणे पवित्रार्पणविधिश्चतुर्दशं प्रकरणम् ॥

[10]इति नैमित्तिकाधिकारे द्वितीयप्रकरणेऽनादिदीपके तृतीयः समुद्देशः ॥ इति श्रीमहीदासकृतेऽनादिदीपविवरणे दमनोत्सवान्दोलनविधिः पञ्चदशं प्रकरणम् ॥ १५ ॥

---

१. प० ३७, प० १६ ।
२. प० ७२, प० १ ।
३. प० ७५, प० ८ ।
४. प० ७६, प० १५ ।
५. प० ८४, प० १ ।
६. प० ९१, प० ५ ।
७. प० ९५, प० १३ ।
८. प० १२३, प० ६ ।
९. प० १२९, प० २ ।
१०. प० १३५, प० १ ।

[1]इत्यनादिदीपके द्वितीयप्रकरणे प्रायश्चित्तं नाम चतुर्थः समुद्देशः ॥ इत्यनादिदीपविवरणे महीदासकृते प्रायश्चित्ताधिकारः ॥ १७ ॥

[2]इति श्रीस्वच्छन्दभैरवागमे विविधपूजार्च्चनेऽयुतलक्षार्चनविधिः संपूर्णः ॥ छ ॥ इति महीदासविरचितेऽनादिदीपविवरणे लक्षपुष्पार्च्चनविधिः ॥

### ग्रन्थसमाप्तिस्तत्रत्या पुष्पिका च

[3]इत्युक्तः शशिशेखरेशवदनप्रोद्गीतदुग्धाम्बुधिप्रख्यातागमसारशीकरचितो दीक्षाधिकारः क्रमात् । स्वस्मै बोधकृते मुदे गुणवतां त्रातुं भवाम्भोनिधेर्विश्वं श्रीमदनादिभूपमुनिना प्रत्यक्षकामारिणा ॥ ७३ ॥.........इति सेवामिलितमहीशमौलिमाणिक्यमयूखमालामांसलितचरणनखचन्द्रचन्द्रिकाचान्तत्रैलोक्यान्तरतिमिरनिकरस्य परमशैवाचार्यस्य श्रीमदनादिदेवभूपस्य कृतावनादिदीपके नैमित्तिकाधिकारे द्वितीयप्रकरणे पञ्चमः समुद्देशः ॥ छ ॥

[4]श्रीमदनादिदेवभूपरचितेऽनादिदीपाख्ये ग्रन्थे नैमित्तिकाधिकारे द्वितीयप्रकरणे पञ्चम उद्देशः । कीदृशस्यानादिभूपस्य—सेवेति । सेवार्थे मिलिता आगता ये महीशा राजानस्तेषां मौलिषु मुकुटेषु माणिक्यानि रत्नानि तेषां मयूखमाला किरणपङ्क्तिस्तया मांसलिता पुष्टीकृता चरणनखरूपचन्द्रस्य या चन्द्रिका कान्तिस्तयाचान्तो नाशितस्त्रैलोक्यान्तर्वर्ती तिमिरनिकरोऽन्धकारसमूहो येन तस्य, परमो मुख्यः शिवभक्तानामाचार्यस्तस्य ॥ छ ॥ इति श्रीमहीदासरचितेऽनादिदीपविवरणे व्रतोद्धारा ॥ छ ॥ स्वर्णकाररमणीयवंशजो विष्णुदास इति वैष्णवोऽभवत् । श्रीमदाद्य इह पालसंज्ञकस्तस्य नन्दनवरः शिवार्चकः ॥ १ ॥ कनककारवरो द्विजसेवको वहिचरोऽभवदस्य तनूद्भवः । सुरसरिन्निकटे मणिकर्णिकामधिगतः सुकृतैः स्वयमर्ज्जितैः ॥ २ ॥ तत्सूनुनारायणदासनामा श्रीकण्ठपादार्चनसक्तचित्तः । आस्ते धरादेवपदारविन्दभक्तो यशःश्वेतितसर्वलोकः ॥ ३ ॥ तत्प्रेरितो विन्महिदासनामा वाराणसीवासरतोऽजभक्तः । अनादिदीपे विवृतिं बुधानां प्रीत्यै व्यधात् तेन हरिः प्रतुष्यात् ॥ ४ ॥ भाष्यं समाप्तम् । संवत् १६७८ वर्षे द्वितीयाषाढसिते पक्षे षष्ठीगुरौ लिखितोऽयं ग्रन्थः ॥ श्रीरस्तु ॥ श्रीमालज्ञातीयसोनीबहिचरसुतेन नारायणदासेन (लिखायितः ? लेखितः)

1. प० १४१, प० ९ ।
2. प० १६५, प० ६ ।
3. प० १८९, प० ८ ।
4. प० १९०, प० २ ।

शिवभक्तानामवलोकनार्थं परोपकारार्थम् ॥ छ ॥ छ ॥ श्रीशिवो जयतु ॥ छ ॥ छ ॥

( भिन्नाक्षरेषु )—पुस्तकमिदं भ(ट?ट्ट)लक्ष्मणस्य ।

अनेन विवरणेनानादिदेवभूपरचितस्यानादिदीपकस्य महीदासरचितस्यानादिदीपविवरणस्येति द्वयोर्ग्रन्थयोः परिचयोऽधिगम्यते । द्वयोरप्येतयोर्ग्रन्थयोः शर्मण्यदेशीयाफ्रेख्टमहाशयसंगृहीतायां बृहत्सूच्यां डा० वी० राघवसंगृहीतायां नूतनायां बृहत्सूच्यां च नामापि नोपलभ्यते । तत्रानादिवीरशैवसंग्रहानाद्यागमनामानौ द्वौ ग्रन्थौ दृश्येते शैवागमप्रतिपादकौ । अयमपि ग्रन्थः शैवागमस्यैव, विशेषेण नित्यनैमित्तिकक्रियाप्रतिपादक इत्यत्रोद्धृतपुष्पिकाभ्यः स्पष्टमेव । अत्र च नित्याधिकारनैमित्तिकाधिकारनामनी द्वे प्रकरणे स्तः । तत्र प्रथमे प्रकरणे चत्वारः, द्वितीये च पञ्च समुद्देशा वर्तन्ते । विवरणकारो महीदासः स्वपुष्पिकास्वेतदतिरिक्तामपि कामपि प्रकरणसंख्यां स्थापयति, एकत्र च वदति—"इति श्रीस्वच्छन्दभैरवागमे······" इति । किमत्र मूलमिति नैव ज्ञायते ।

[1]कोऽयमनादिदीपकप्रणेतानादिदेवभूपतिरिति मनीषिणामैतिहासिकानां विचारणीयो विषयः । अत्र खलु तेषां प्रथमप्रकरणीयद्वितीयसमुद्देशसमाप्तिस्था—"चौलुक्यकुलपरमाराध्यस्य चरमजलधिवेलाविपिनालीविस्तृताश्रमसोमेश्वरापरवपुषः पश्चिमगोलकीवंशमुक्तामणेः परमशैवाचार्यश्रीमदनादिभूपस्य कृतौ·····" इयं पुष्पिका किमपि साहाय्यं गमिष्यत्येव । गुर्जरदेशीया मूलराजप्रभृतयश्चौलुक्या राजानः परमशिवभक्ता आसन्निति नैव तिरोहितमितिहासविदाम् । तत्रत्यायामेव कस्याञ्चिद्वंशपरम्परायामनादिदेवो जनिमलभतेति बाढं कल्पयितुं शक्यते । अनादिदीपविवरणकारस्य महीदासस्य [2]गुर्जरदेशप्रभवत्वमुक्तानुमानसमर्थकमेव स्यात् ।

---

१. मूलग्रन्थपुष्पिकासु ग्रन्थस्यानादिदीपकानादिप्रदीपे इति द्वे नामनी, विवरणकारपुष्पिकासु चानादिदीपविवरणानादिदीपभाष्यमित्यादीनि विवरणनामानि दृश्यन्ते ।

२. 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७२ तमे पृष्ठे, अत्रैव च १३६ तमे पृष्ठे द्रष्टव्यम् । तत्रत्येन विवरणेनोत्तरप्रदेशीयबरेलीमण्डलसमीपस्थाऽहिच्छत्रपुर(रामनगर)वास्तव्य आसीन्महीधर इति केषाञ्चिद्वाचोयुक्तिर्नैव साध्वीति प्रतीयते ।

विवरणकारो महीदासस्तु प्रसिद्धाद् वेददीपकारान्महीधरादभिन्न[1] एव। अत्रत्यं मङ्गलमपि तमिममर्थं स्पष्टं सूचयति। किञ्च, अनादिदीप-विवरणपुष्पिकास्वेकत्र (९१ प०, ८ प०) दृश्यमानम्—"महीधरविरचिते" इति वाक्यखण्डं नावशेषयति तद्विषयिणीं शङ्काकणिकामपि।

वित्तकार्श्यपीडितेन तेन महानुभावेन वृद्धावस्थावशात् स्वयं लेखा-समर्थेन च [2]नारायणाग्रहादेवान्यस्मात् कस्माच्चित् पुरुषादेष ग्रन्थो लेखितः। १६७८ वर्षस्य द्वितीयाषाढशुक्लपक्षस्य षष्ठ्यां गुरौ लिखितोऽयं ग्रन्थः। ईश्वरकृष्णरचितायाः सांख्यकारिकायाः प्रतिलिपिः स्वयमेव महीधरेण १६६८ तमे वि० वत्सरे[3] कृता। अनादिदीपविवरणे च स वदति—"वृद्धो लेखासमर्थोऽहम्" इति। अतः १६६८ वत्सरानन्तरं कतिचित्सु वत्सरेषु व्यतीतेष्वेव तस्य लेखासामर्थ्यं सभाव्यते। महीधरस्य जीवनवेलायां तत्समक्षमेवास्य हस्तलेखस्य लेखनकार्यं संजातं स्यादिति किं न कल्पयितुं शक्यते?

महीधरविषये विस्तरेणास्माभिः—'महीधरसंग्रहः' इति शीर्षके निबन्ध एवोहापोहः कृतः। इयांस्त्वत्र विशेषः—स्वगुरोः केशवसुतरत्नेश्व-रस्योल्लेखो महीधरेण स्वकृतशुल्वसूत्रविवृतिसमाप्तौ—"श्रीरत्नेश्वर-मिश्रस्य गुरोः केशवजन्मनः" इत्यादिना कृत इति। अपि च महानैयायिको वेणीदत्तो न महीधरस्य साक्षात् पौत्रः, किन्तु तत्पौत्रस्य पौत्र इति। तथा च पदार्थमण्डनभूमिकायां ग्रन्थकर्तृपरिचयः—"तदेवं प्रसिद्धस्य विद्वद्वरस्य महीधरस्य पुत्रः कल्याणस्तत्पुत्रो रामानुजो लक्ष्मणः····तस्य पुत्रो भट्ट-वीरेश्वरस्तस्य पुत्रः सुगृहीतनामधेयस्तर्कवागीशभट्टाचार्यतर्कधुरन्धरादि-

---

१. 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७१ तमे पृष्ठे, अत्रैव च १३५ तमे पृष्ठे द्रष्टव्यम्।

२. एष नारायणश्च विष्णुदासस्य प्रपौत्रः, श्रीपालस्य पौत्रः, वह्निचरस्य पुत्रः, श्रीमालज्ञातीयः स्वर्णकार आसीदिति ग्रन्थसमाप्तिपुष्पिकातो ज्ञायते। श्रीमालज्ञातीयानां गुर्जराणां स्वर्णकाराणां वसतिः साम्प्रतमपि तत्रैव विद्यते, यत्र हि महीधरेण नृसिंहभगवतो मूर्तिः स्थापिताऽऽसीत्। एतच्च निकेतन-मधुना दण्डपाणि-कालभैरवयोः प्रसिद्धतरयोर्मन्दिरयोः समीपस्थे घासीटोलाख्ये स्थाने द्रष्टुं शक्यते।

३. 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७० तमे पृष्ठे, अत्रैव च १३४ तमे पृष्ठे द्रष्टव्यम्।

विरुदावलिविराजितस्तत्रभवान् प्रस्तुतग्रन्थकर्ता वेणीदत्त आसीत्। ग्रन्थकर्तुः पुत्रश्च कृष्णदत्त आसीदिति....'' (पृ० ५) इति। अत्र च प्रमाणान्तरमपि विद्यते। महीधरसंग्रहे स्थितस्य १२७० संख्याङ्कितस्य हस्तलेखस्यान्तिमपृष्ठे—''फनुभट्टपुस्तकं....भट्टमहीदासपुस्तकं कल्याणभट्ट-पुस्तकं रामभट्ट-लक्ष्मणभट्टपुस्तकं भट्टभट्टवीरेश्वरपुस्तकं भट्टवेणीदत्त-पुस्तकं भट्टकृष्णदत्तपुस्तकम्'' इति लिखितं दृश्यते। अस्य ग्रन्थस्य स्वामी च कृष्णदत्त इति तस्मादेव हस्तलेखात् प्रतीयते। अपि च वेणीदत्तेन स्वरचितस्यालङ्कारचन्द्रोदयस्य[1] समाप्तौ स्ववंशपरिचय इत्थं स्थापितः—

नागच्छत्रधराद्द्विजोत्तमकुले विख्यातकीर्तिर्वरः
संजातो हि महीधराभिधबुधः काशीपुरीमान्त्रिकः।
तत्पुत्रः सकलार्तिमर्दनकरः कल्याणनामाऽभवत्
तस्यानन्दनराममलक्ष्मणवरौ जातौ धराधीश्वरौ ॥१॥
तत्र श्रीवरलक्ष्मणाङ्गजबुधो वीरेश्वरः श्रीवरो
येन स्वेष्टमणिः सदाशिवपरब्रह्मापरोक्षीकृतम्।
तज्जन्याखिलतर्कवारिधिपरं पारङ्गमोऽयं बुधो
वेणीदत्त इति प्रभासमुदयाच्चन्द्रोदयोऽलङ्कृतः ॥२॥

एवमेभिः सुदृढैः प्रमाणजातैर्या हि महीधरवंशावलिः प्रमिता भवति, तस्याश्चित्रं पदार्थमण्डनभूमिकायां (पृ० ७) द्रष्टव्यम्। एतेषां च सर्वेषा-मन्येषामपि च महीधरवंशीयानामपरपुरुषाणां समयादिविषये स्वतन्त्रे कस्मिंश्चिदपरे निबन्धे विचारः करिष्यते।

अनादिदीपविवरणातिरिक्तानां सप्तदश महीधरग्रन्थानां नामान्या-फ्रेख्टसूच्यां दृश्यन्ते। महीदासरचितानामन्येषामपि षण्णां ग्रन्थानां नामानि तत्रावलोक्यन्ते। किमेषां समेषामपि ग्रन्थानां रचयितैक एव पुरुषः, आहोस्विदन्यः? एषु भूयांसो ग्रन्था महीधररचिता एवेति श्री पी० के० गोडेमहाशयनिबन्धतो ज्ञातुं सुशकम्। सौत्रामणीविनियोगसूत्रार्थविषयेऽ-स्माभिर्लेखारम्भ एव निवेदितम्। अन्यान् ग्रन्थानुपलक्ष्य च स्वतन्त्र एव निबन्ध आवश्यक इति साम्प्रतमेतावदेवोक्त्वा विरम्यते ॥

---

१. सरस्वतीभवनस्थे महीधरसंग्रहे १९४२ संख्याङ्कितोऽस्य हस्तलेखो द्रष्टव्यः।

# महाकवेः श्रीहर्षस्य कालनिर्णयविषये किञ्चित्

श्रीमतो डाक्टरगजाननशास्त्रिमहोदयस्य "महाकवेः श्रीहर्षस्य कालनिर्णयः" इति शीर्षको निबन्धः सूर्योदयपत्रस्य विगतेऽङ्के प्रकाशितः सावधानमधीतोऽस्माभिः। न वयमितिहासचणा इति कस्य नृपतेः समसामयिकः श्रीहर्ष इत्यत्र न किमपि वक्तव्यमस्माकम्। किन्तु निबन्धेऽस्मिन् काश्चनासङ्गतय इव प्रतीयन्ते। तत्परिहारायैव समुद्यमोऽयमस्माकम्। क्षमापनपुरःसरं लेखकमहोदया विद्वांसश्च प्रार्थ्यन्ते याथातथ्यविवेचनाय।

वयमत्र नैषधटीकाकारस्य चाण्डूपण्डितस्य टीकारम्भे—"प्रथमं तावत् कविर्विजिगीषुकथाभिः स्वपितृपरिभावकमुदयनमत्यमर्षणतया कटाक्षयंस्तद्ग्रन्थग्रन्थीनुद्ग्रथयितुं खण्डनं प्रारिप्सुश्चतुर्विधपुरुषार्थैरभिमानमवधार्य मानसमेकताननतां निनाय" इमामुक्तिम्, राजशेखरस्य च—"श्रीहर्षः शास्त्रार्थे स्वपितुर्हारस्य विजेतारं पण्डितं पुनः स्वयं शास्त्रविचारे स्वबुद्धिविभवेन जित्वा स्वपितुर्वैरं निरयातयत्" इत्युक्तिं च लेखकमहोदयैः प्रमाणत्वेन समुद्धृतामङ्गीकृत्यैवात्र प्रवर्तामहे।

चाण्डुपण्डितस्य राजशेखरस्य चात्रोद्धृताभ्यां वचनाभ्यां श्रीहर्षापेक्षया उदयनाचार्यस्य वृद्धत्वं निर्विवादतया सिद्ध्यति। उदयनाचार्येण च वाचस्पतेस्तात्पर्यटीकायाः परिशुद्धिनाम्नी टीका निरमीयत। अतो वाचस्पतेस्ततोऽपि वृद्धत्वमायाति। अत्र च लेखकमहोदयेन—"श्रीहर्षप्रणीतखण्डनखण्डखाद्यस्य खण्डनरूपस्य खण्डनोद्धारग्रन्थस्य रचयिता वस्तुतः षड्दर्शनटीकाकारो वाचस्पतिमिश्रश्चेत् तेनापि स्वरचिते न्यायसूचीनिबन्धग्रन्थे तद्रचनाकालः (शक ८९८, सं० १०३३, सन् ९७६) स्वयमङ्कितः। तथाहि—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।<br>
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे॥

एवं च एतत्पूर्वकालवर्तित्वस्यावश्यमभ्युपेयत्वेन नवमदशमशताब्दोरान्तरालिकः श्रीहर्ष इति निश्चिनुमो वयम्" (पृ० १६०-१६१) इत्येवं श्रीहर्षस्य वाचस्पत्यपेक्षयाऽपि प्राचीनत्वं समसाधि। तन्न रोचतेऽस्मभ्यम्, यतो हि षड्दर्शनटीकाकारो वाचस्पतिर्नहि खण्डनोद्धारग्रन्थस्य रचयिता,

अन्य एव पञ्चदशशताब्दीभवो वाचस्पतिमिश्रः खण्डनोद्धारग्रन्थं निर्मिमायेति जानन्त्येव विद्वांसः। 'चेत्'पदेन निबन्धकारस्याप्यस्वारस्यमिव तत्र प्रतीयत एव। अतो न खण्डनोद्धारप्रामाण्येन श्रीहर्षस्य भामतीकारवाचस्पतिमिश्रापेक्षया प्राचीनत्वं संसाधनीयम्। अपि च, न्यायसूचीनिबन्धरचनाकालो वाचस्पतिमिश्रेण शकसंवत्सरेषु विक्रमसंवत्सरेषु वा सूचित इति विषये विवदन्ते इतिहासविदः। अप्रासङ्गिकतया तद्विषये नात्र किमपि वदामः।

उदयनाचार्यकृतलक्षणावलीस्थेन—

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

अनेन पद्येन लेखकमहोदयस्य उदयनवाचस्पत्योः समसामयिकत्वं सिषाधयिषितमिव प्रतिभाति। अत्र स्पष्टं शकसंवत्सरेषु लक्षणावलीरचनाकालः प्रदर्शितः। न्यायसूचीनिबन्धरचनाकालोऽपि वाचस्पतिमिश्रेण शकसंवत्सरेष्वेव प्रदर्शितश्चेदनयोः समसामयिकत्वं साधु सिद्ध्येत, यतो हि तदा न्यायसूचीनिबन्धलक्षणावल्यो रचनाकालयोर्वर्षाष्टकस्यैव व्यवधानं भवति। एतच्च प्रमाणपराहतमिव प्रतीयते। यतो हि—

१. जानन्त्येव विद्वांसः श्रीमान् षड्दर्शनव्याख्याता वाचस्पतिमिश्रो गौतमन्यायसूत्रवात्स्यायनभाष्ये पाशुपताचार्येणोद्योतकरेण विरचितस्य न्यायवार्त्तिकस्य व्याख्यानं तात्पर्यटीकाख्यं रचयामास। टीकाया अस्या वैशिष्ट्यमनेनैव ज्ञातुं शक्यते यत्तदा वाचस्पतिमिश्रो विद्वद्गोष्ठीषु तात्पर्याचार्य इति नाम्ना प्रसिद्धिं भेजे। अस्याष्टीकायाः खण्डनं बौद्धविद्वद्भ्यां गुरुशिष्याभ्यां ज्ञानश्रीमित्र-रत्नकीर्तिभ्यां व्यधायि। तदुद्धाराय चोदयनाचार्यस्तात्पर्यटीकायाः परिशुद्धिनाम्नीं टीकां व्यधात्।

२. ज्ञानश्रीमित्रो रत्नकीर्तिश्च बौद्धाचार्यस्य दीपंकरश्रीज्ञानस्य समसामयिकावास्ताम्, यो हि १०४१ तमे ई० वर्षे भोटदेशं जगाम। एवं च भोटदेशीयेतिहासप्रामाण्येन गुरुशिष्ययोरनयोः स्थितिकालो ग्रन्थरचनाकालश्च ई० एकादशशताब्द्याः पूर्वार्धं इत्यङ्गीक्रियते। उदयनाचार्येण च तात्पर्यपरिशुद्धौ बौद्धधिक्कारापरनामधेये आत्मतत्त्वविवेके च नामग्राहमुद्धरणमुखेन चैतयोर्मन्तव्यं खण्डितम्। उभयोर्गुरुशिष्ययोर्निबन्धाः साम्प्रतं मुद्रिता उपलभ्यन्ते। उदयनाचार्येण खण्डितान्येतयोर्वचांसि तत्रा-

विकलं समुपलभ्यन्ते। अतोऽवश्यमेवोदयनाचार्यस्य तत्परवर्तित्वं कनिष्ठ-समसामयिकत्वं वाङ्गीकर्तव्यम्। लक्षणावलीस्थं "तर्काम्बराङ्क" इत्यादिकं वचनं बह्वीषु लक्षणावलीमातृकासु नोपलभ्यत इति निबन्धावलीद्वयसंपादकाः श्रीमदनन्तलालठक्कुरमहोदयाः[1] कथयन्ति। अत उदयनाचार्यस्य समय एकादशशताब्द्याः पूर्वार्धेऽङ्गीकर्तव्यः, न तु दशमशताब्द्या उत्तरार्धे।

३. किञ्च, उदयनो नासीदेव कनिष्ठः समसामयिकोऽपि वाचस्पति-मिश्रस्य। यतो हि स्वकीयेषु ग्रन्थेषूदयनः श्रीवत्साख्यं स्वगुरुं स्तौति। श्रीवत्सेन च तत्र तत्र समालोचितानि वाचस्पतिमतानि। यदि कनिष्ठः समसामयिकः स्यादुदयनो वाचस्पतिमिश्रस्य कथं हि नाम स तमपहायान्यं गुरुमङ्गीकुर्यात्, यदा स तस्य ग्रन्थेष्वतीव श्रद्दधानो व्याख्याति तान्। उभावपि मिथिलादेशवास्तव्यौ प्रथिततमौ पण्डितावित्यत्र विषये न किमपि वक्तव्यं वर्तते। एवं सत्यपि तस्य ग्रन्थेषु न कुत्रापि वाचस्पतिमिश्रस्य तत्समये वर्तमानत्वद्योतकं किमपि वचनमुपलभामहे। न चान्येनापि केनचित् प्राचीनेन ग्रन्थकारेण वाचस्पत्युदयनयोः समसामयिकत्वं कुत्रापि निर्दशितम्। यदि हि नाम वाचस्पत्युदयनयोः समसामयिकत्वं स्यात्, तदा वाचस्पतिवदुदयनमतस्यापि ज्ञानश्रीमित्र-रत्नकीर्तिभ्यां कृतं खण्डनं समुपलभ्येत। न चैतदुपलभ्यते। प्रत्युतोदयनकृतं ज्ञानश्रीमित्र-रत्नकीर्तिमत-समालोचनमेवोपलभ्यते। अतस्तर्काम्बराङ्कत्युदयनश्लोकस्य प्रक्षिप्तत्व-मेवाङ्गीकर्तव्यम्। एवं चोदयनस्य ई० दशमशतकोत्तरार्धे स्थितिर्न कथमपि सुसाधा।

४. अपि च, खण्डनखण्डखाद्ये (पृ० १३२७) श्रीहर्षो व्यक्तिविवेककारं महिमभट्टं सस्मार[2]। अभिनवगुप्तपादानन्तरं (१०१५ ई०) समजायत महिमभट्टः। म० म० पी० वी० काणेमहोदयैः १०२०-११०० ई० मध्ये महिमभट्टस्य स्थितिकालः साधितः। अनेनापि श्रीहर्षस्य स्थितिकाल एकादशशतकादीशवीयात् पूर्वं न कथमपि सिद्ध्येत।

५. "कान्यकुब्जेश्वराज्ञया भूदेवपण्डितेन नैषधीयचरितस्य टीका संदृब्धा। आरम्भ एव तेन टीकारचनाकालः (श० ९७२, सं० ११०७, सन् १०५०) स्वयमङ्कितः" (पृ० १६०) इत्यनेनापि निबन्धकारोद्धृतप्रमाणेन

१. रत्नकीर्तिनिबन्धावली, आंग्लभूमिका, पृ० २१।
२. हिस्ट्री आफ नव्य न्याय इन मिथिला, पृ० ४६।

उपर्युद्धृत उदयनकालो न व्याहन्यते। एकादशशताब्द्याः पूर्वार्धं एव समेषामेतेषां विदुषां स्थितेः संसाधने एव ग्रन्थस्य स्वारस्यात्।

६. किञ्च, सम्पूर्णेऽपि निबन्धे श्रीहर्षस्य १०५० ई० पूर्वं स्थिति-साधकमेकमात्रं प्रमाणमेतदेव भूदेवकृतं नैषधचरितव्याख्यानं नाम। कुत्रास्य मातृका समुपलब्धेति न प्रमाणितं निबन्धकारमहोदयेन। एतच्च प्रमाणं नोपलब्धमितिहासकारैरन्यैरिति ते श्रीहर्षं द्वादशशतकवर्तिनं साधयन्ति। प्रामाणिकमेवैतद् वचनं स्यादिति स्वीकृतेऽप्यनेन ततः कियत्पूर्वमेव श्रीहर्षस्य स्थितिः सिद्ध्येत। महिमभट्टस्य खण्डनखण्डखाद्ये स्मरणान्न तस्य स्थितिर्महिमभट्टकालात् पूर्वं दशमशतकोत्तरार्धे स्थापनार्हा।

समेतैरेतैः प्रमाणैः श्रीहर्षस्य स्थितिकाल एकादशशतकस्य पूर्वार्धात् पूर्वं न कथमपि सुस्थिरः स्यात्। एवं च—"नवमदशमशताब्द्योरान्तरालिकत्वं श्रीहर्षस्य निःसन्दिग्धं निर्धार्यते" (पृ० १६१) इति वचः प्रमाणपराहतमेवाङ्गीकर्तव्यम्। अपि च, समालोच्यनिबन्धोपस्थापितैः प्रमाणैरपि श्रीहर्षस्य दशमैकादशशताब्द्योरान्तरालिकत्वमेवायाति, न तु नवमदशमशताब्द्योरान्तरालिकत्वमिति विचारयन्तु तत्रभवन्तः। तत्र च श्रीहर्षस्य दशमशताब्दीस्थितिसाधकानि वचांसि प्रमाणाभासान्येव। भूदेववचः प्रमाणं चेदवश्यमेव सर्वैरितिहासविद्भिस्तत्पूर्ववर्तित्वं श्रीहर्षस्य स्वीकार्यम्, अनेनैव च प्रमाणेन चाण्डूपण्डितराजशेखरादिधृतस्योदयनश्रीहर्षयोः समसामयिकत्वसाधकस्यैतिह्यस्य याथातथ्ये च न सन्देष्टव्यमित्येतावदेवोक्त्वा विरम्यते॥

---

# गैरिकसूत्राणि

सवृत्तिकानि

## जडच्युपनामकगङ्गारामोन्नीतानि

रघुनाथशर्मविरचितविवरणसमेतानि

# प्रस्तावना

अथेमानि प्रकाश्यन्ते सवृत्तिकानि सविवरणानि च गैरिकसूत्राणि। अत्र केवलं सूत्राणां नवकं विद्यते। सूत्रकारेणैतेषु गैरिकं कुत्र कुत्र लापनीयं हस्तलिखितेषु ग्रन्थेष्विति संक्षेपतः प्रतिपादितम्, स्वोपज्ञवृत्तौ तदुदाहरण-मुखेन स्पष्टीकृतं च। यद्यपि विविधाकारेषु शीशकाक्षरेषु विद्यमानेषु मुद्रण-युगेऽस्मिन् न प्रतिभाति तस्य गैरिकरञ्जनविधेः कापि साम्प्रतमुपयोगिता, किन्तु यदा बृहत्तमा भाष्यवृत्तिटीकादिग्रन्था हस्तेनैव लिख्यन्ते स्म, पद-च्छेदानुच्छेदविरामचिह्नानामभावयुगे तस्मिन् हस्तामलकवत् प्रत्यक्षं तस्यो-पयोगित्वं न केषाञ्चन तिरोहितचरम्। किञ्च, साम्प्रतमपि मुद्रितपुस्त-केषु विशेषावधानाय स्थलविशेषरञ्जनप्रकारो दृश्यत एव। सोऽयं गैरिक-रञ्जनसम्प्रदायो यद्यपि प्राचीनतमस्तथापि तत्प्रतिपादकसाहित्यस्याभाव इवावलोक्यते। इदम्प्रथमतयेवेमानि सूत्राणि विरचितानीति तद्वृत्ति-समाप्तौ—"समूलमपि निर्मूलम्" इति ग्रन्थकृदुक्त्या प्रतीयते। तदत्र प्रथमं सूत्रवृत्तिप्रतिपाद्यविषयजातस्य परिचयः प्रदीयते, तदनु च ग्रन्थकर्तृतदितर-ग्रन्थानुद्दिश्य कापि चर्चा प्रतंस्यते।

### ग्रन्थप्रतिपाद्यपरिचयः

गैरिकं कुत्र कुत्र लापनीयमिति प्रश्नस्योत्तरमुखेनैव सूत्राणामेषां प्रवृत्ति-रवलोक्यते। तत्र प्रथमसूत्रेण तद्वृत्त्या च ग्रन्थारम्भे तदवान्तरप्रकरणा-रम्भे च "श्रीगणेशाय नमः, श्रीसरस्वत्यै नमः" इत्यादीनीष्टदेवतानम-स्कारसूचकानि वाक्यानि गैरिकेण रञ्जनीयानीति प्रतिपाद्यते। द्वितीय-स्मिन् सूत्रे प्रतीकस्याद्यन्तयोर्भागयोः स्वीयसम्प्रदायानुसारमेकतरो भागो रञ्जनीय इति, वृत्तौ च सोदाहरणं प्रतीकलक्षणं प्रतिपाद्य योगविभागेन सूत्रश्रृङ्खलितभाष्यवृत्त्यादावापाततः समापतितानि सूत्राणि सर्वत्र रञ्ज-नीयानीति प्रतिपाद्यते। शङ्कामतान्तरयोराद्यन्तौ द्वावपि भागौ रञ्जयेदिति तृतीयसूत्रस्य, अवान्तरशङ्कामतान्तरवाक्ययोरपि तौ, 'आहुः' इत्यादयः शब्दाश्च रञ्जनीया इति च तद्वृत्तेः प्रतिपाद्यो विषयः। संमतिव्यञ्जकाः "ओम्, तदाहुः, यदाहुः" इत्यादयः शब्दाः, अपिशब्दात् "अत्र ब्रूमः" इत्यादीन्युपसंहारवाक्यानि च रञ्जनीयानीति चतुर्थसूत्रस्य तद्वृत्तेश्च प्रतिपाद्यम्। पञ्चमं सूत्रं तद्वृत्तिश्च "तच्चिन्त्यम्, तन्न" इत्यादीनि

निषेधसूचकानि "एतेन, अत एव, अपास्तम्, अलम्" इत्यादीनि पदानि च रञ्जनीयानीति प्रतिपादयति। षष्ठेन सूत्रेण तद्वृत्त्या च पक्षान्तरबोधकं "यद्वा, अथवा" इत्यादिकं पदम्, दोषान्तरबोधकं "किञ्च, अपि च" इत्यादिकं पदं च रञ्जनीयमिति; सप्तमेन सूत्रेण ग्रन्थदेवतयोर्नामसु गैरिकं लापनीयमिति; अष्टमेन सूत्रेण "इति श्री" इत्यादिग्रन्थसमाप्तिसूचक-पुष्पिकादिषु सम्पूर्णे वाक्ये व्यवधानेन गैरिकं देयमिति, वृत्त्या च न केवलं ग्रन्थसमाप्तिपुष्पिकास्वेवापि तु पर्वाध्यायसर्गादिपुष्पिकास्वप्येष एव न्यायोऽनुसरणीय इति प्रतिपादितम्। नवमसूत्रस्य तद्वृत्तेश्च 'अङ्केऽङ्के' गैरिकं लापनीयमिति, अस्य सूत्रस्य ज्योतिःशास्त्र एव प्रवृत्तिरिति च प्रतिपादनीयो विषयः।

## ग्रन्थस्य महत्त्वम्

उपरिनिर्दिष्टस्य प्रतिपाद्यविषयजातस्यावलोकनेन सुष्ठु खल्विदं परिज्ञायते यदमुना लघुकायेन ग्रन्थेन कथं नामाऽनायासेन परिहृतास्ता बाधाः, याः साम्प्रतिकेन सम्पादनकलाताण्डवेन परिहृता अपि संत्रासयन्ति सचेतसां चेतांसि। विविधाकारैरायसाक्षरैः, विरामचिह्नादिभिः, परिच्छेद-पदच्छेदानुच्छेदादिभिः, अध्यायादिसमाप्तिषु पृष्ठपरिवर्तनैश्च महताऽऽयासेन यदभीष्टं संसाध्यते साम्प्रतम्, अत्र केवलं गैरिकप्रदानविधिना तत्सर्वं समसाधि। "ग्रन्थदेवतयोर्नाम्नि" इति सप्तमे सूत्रे ग्रन्थकारनाम्नामपि समावेशः सुसाध एव। "अङ्केऽङ्के" इति नवमं सूत्रं ज्योतिःशास्त्रे कथमभ्रान्तत्वाय कल्पत इति विवरणावलोकनेन स्फुटं प्रतिभासेत।

## ग्रन्थकर्तृपरिचयः

सवृत्तिकानामेतेषां सूत्राणां कर्ता वर्तते जडीत्युपनामको वाराणसेयो नीलकण्ठशिष्यो रसतरङ्गिणीव्याख्या(नौका)-सव्याख्यरसमीमांसा-सव्याख्यतर्कामृतचषकानां रचयितेति तत्कृतग्रन्थेभ्य उपलभ्यते। तथा हि सूत्रसमाप्तौ—"इति जड्युपनामकगङ्गारामकृतगैरिकसूत्राणि समाप्तानि" इति, वृत्तिसमाप्तौ च—"इति श्रीजड्युपनामकगङ्गारामोन्नीता गैरिकसूत्रवृत्तिः" इति च वर्तते पुष्पिका। ईदृश्येव पुष्पिकाऽन्येषु नौकाप्रभृतिग्रन्थेष्वपि दृश्यते। तेन सर्वेषामेककर्तृकत्वमवगम्यते। उट्टङ्किताश्चैते आफ्रेख्टसंगृहीतायां बृहत्सूच्यामेककर्तृकत्वेनैव। तेषु च रसमीमांसाटीकाया आरम्भे—"हृदि नारायणतातमाश्रये" इति, तर्कामृतचषकप्रारम्भे च—"तातं

नारायणं वन्दे" इति दृश्यते। तथैव तर्कामृतचषकारम्भे—"नीलकण्ठगुरवे नमो नमः" इत्यवलोक्यते। तेनैष नारायणस्य पुत्रो [1]नीलकण्ठस्य च शिष्य इत्यायाति। एष वाराणसीवास्तव्य आसीदित्यत्र यद्यपि न किमपि कण्ठोक्तं प्रमाणं समुपलभ्यते, तथापि मुक्तावलीप्रकाशकर्तुर्दिनकरस्य स्वमातामहत्वोक्त्या, दिनकरदिवाकरमहादेवभारद्वाजनीलकण्ठप्रभृतीनां च वाराणसीवास्तव्यत्वस्य सुप्रसिद्धत्वात्, वाराणस्यामेवास्य सर्वेषां ग्रन्थानां बाहुल्येनोपलब्ध्या, अधुनापि तत्परिवारस्य तत्र स्थितस्य महत्त्वपूर्णस्य

१. लन्दननगरीस्थ-इण्डिया आफिस-पुस्तकालयस्य विवरणात्मके सूचीपत्रे २१२३ संख्यकपुस्तकविवरणे—"गङ्गारामेण मुक्तावलीप्रकाशस्योपयोगः कृतः, महादेवभट्टसुतदिनकरो हि यस्य रचयिता, यश्चाप्यस्यैव नीलकण्ठस्य शिष्यः" इति दृश्यते। एतन्न शोभनम्; भगवन्तभास्करापरपर्यायद्वादशमयूखनिर्माता भट्टवंशावतंसो नारायणभट्टस्य पौत्रः शङ्करभट्टस्य पुत्रो नीलकण्ठो हि तिथ्यर्काऽऽचारार्काद्यनेकधर्मशास्त्रनिबन्धरचयितुर्बालकृष्णात्मजमहादेवभारद्वाजज्येष्ठपुत्रस्य दिवाकरस्य मातामह आसीदिति बहुशस्तद्ग्रन्थेभ्यः परिज्ञायते। तथा हि—

> श्रीरामेश्वरसूरिसूनुरभवन्नारायणाख्यो महान्
> येनाकार्य्यविमुक्तके सुविधिना विश्वेश्वरस्थापना।
> तत्पुत्रो विबुधाधिपः क्षितितले श्रीशङ्करस्तत्सुतो
> जातो भास्करपूजकः पृथुयशाः श्रीनीलकण्ठो बुधः ॥३॥
> भारद्वाजकुलेऽमले समभवत् श्रीबालकृष्णाभिधः
> साहित्यामृतवारिराशिरतुलः सर्वद्विजानां गुरुः।
> तत्सूनुः प्रथमो महामणिरिव प्रख्यातकीर्तिर्गुणै-
> र्जातो न्यायनये बृहस्पतिसमो नाम्ना महादेवकः ॥४॥
> तत्पुत्रेण दिवाकरेण विदुषा श्रीनीलकण्ठप्रभो-
> र्दौहित्रेण.............................................।
> तिथ्यर्कः क्रियते प्रणम्य पितरं बालां तथा मातरं

(काशीस्थाच्युतग्रन्थमालायां प्रकाशिते तिथ्यर्के, पृ० १-२)

अस्यैव दिवाकरस्य कनिष्ठभ्राताऽऽसीद्दिनकरः। एवं च भारद्वाजदिवाकरदिनकरयोर्मातामहो विद्यागुरुरप्यासीद् भट्टो नीलकण्ठः। स एव (मातामहस्य मातामहः) दिनकरनप्तुर्गङ्गारामस्यापि गुरुर्भवेदित्यत्र न किमपि प्रामाण्यं प्रतीयते। अतो गङ्गारामगुरुर्नीलकण्ठस्तद्भिन्न एव भवितुमर्हति।' अपि च,

हस्तलेखसंग्रहस्य चात्र स्थित्या नूनं सिद्धयति। [1]बालकृष्णात्मजस्य महादेवभारद्वाजस्य तनयो मुक्तावलीप्रकाशस्य खण्डितांशस्य पूरयिता दिनकरोऽस्य ग्रन्थकर्तुर्मातामह आसीदिति तर्कामृतचषकस्य स्वोपज्ञतात्पर्य-

---

म०म०पाण्डुरङ्गवामनकाणेमहोदयेन "हिस्ट्री आफ धर्मशास्त्र"-ग्रन्थस्य प्रथमे भागे व्यवहारमयूखभूमिकायां च नीलकण्ठभट्टस्य साहित्यरचनासमयः १६१०-१६४५ ई० निर्धारितः। एवं च वैक्रमसप्तदशशताब्द्या अन्तिमोऽष्टादशशताब्द्या आरम्भिको भागश्च तस्य स्थितिसमयः। एष एव नीलकण्ठो वैक्रमाष्टादशशताब्द्या अन्तिमभागभवस्य गङ्गारामस्य गुरुर्न कथमपि भवितुमर्हतीति सुधीभिर्विभाव्यम्।

श्रीबालकृष्णात्मजसूनुनिर्मितां वर्षे खवेदाश्वहिमांशुसंयुते।
कृतिं विलोक्याखिलकालनिर्णयं निःशङ्कमाशंसतु पण्डितो जनः॥

इति तिथ्यर्कसमाप्तिश्लोकतः (पृ० २६९) १७४० वि० संवत्सरस्तस्य रचनाकालः परिज्ञायते। अत्र तिथ्यर्कभूमिकायां दृश्यते—"तिथ्यर्कस्य निर्माणकाले (१७४० वि०) ग्रन्थकृतः पञ्चाशद्वर्षासन्नमपि वयो यदि कल्प्येत तदास्य जनिर्विक्रमसप्तदशशतकस्यान्ते (१६९० वि०) समभूदित्यायाति। अयमेवास्य जन्मकाल इत्यभियुक्तेभ्योऽपि श्रूयते" (पृ० १३) इति। वयं तु तिथ्यर्कनिर्माणकाले ग्रन्थकृतः पञ्चाशद्वर्षासन्नवयःकल्पने न किमपि प्रमाणमुपलभामहे। १८१८ वि० वत्सरे दिवाकरस्य कनिष्ठभ्रात्रा दिनकरेण तर्कामृतचषकः संशोधित इति साधयिष्यते। एवं च यदि तिथ्यर्करचनासमकालं दिनकरस्य जन्म स्वीक्रियेत, तथापि तस्य १८१८ वि० वत्सरे ७८ वर्षपरिमितं वयः संभवति। तथा च तस्य ज्येष्ठभ्रातुर्जन्म पञ्चाशद्वर्षेभ्यः पूर्वं संजातमिति वदन्तो नैवाभियुक्ताः, अपि तु किंवदन्तीसमाराधका एव स्युः।

१. लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवास्याम्बुजात्।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-
गूढार्थांस्तनुते यथामति महादेवः परेषां मुदे॥

इति मुक्तावलीप्रकाशमङ्गलाचरणश्लोकतः, "इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टविरचिते मुक्तावलीप्रकाशे उपमानपरिच्छेदाख्यः पञ्चमः परिच्छेदः" इत्युपमानपरिच्छेदान्तपुष्पिकाभ्यश्चोपमानपरिच्छेदपर्यन्तप्रकाशनिर्माता महादेवभारद्वाजः, "इति श्रीभारद्वाजकुलाम्बुधिपूर्ण-

टीकातो[1] ज्ञायते। तत्र हि—"दिनकरकरकृतपरामर्शम्" इति ग्रन्थसमाप्तिस्थश्लोकांशव्याख्यायां स्वयमेवोक्तं ग्रन्थकृता—"दिनकरेण मन्मातामहेन कर्त्रा करेण हस्तेन लेखनसाधनत्वात् करणेन कृतः परामर्शः शोधनं यस्य तत्" इति। ग्रन्थारम्भे च[2]—"मुक्तावलीप्रकाशात् स्फुरिते चषके" इत्यादिना मुक्तावलीप्रकाशादेव चषकग्रन्थस्य स्फुरणमित्युक्तम्।

## ग्रन्थकर्तुरितरे ग्रन्थाः

आफ्रेख्टबृहत्सूच्यां स्वोपज्ञटीकायुता रसमीमांसा, रसतरङ्गिणीटीका (नौका), दिनकरीखण्डनम्, स्वोपज्ञटीकायुततर्कामृतचषकश्चेतीमे ग्रन्था गङ्गारामकृतित्वेनोट्टङ्किताः। तत्र सटीका रसमीमांसा, [3]भानुदत्तविरचि-

---

चन्द्रवालकृष्णभट्टात्मजमहादेवभट्टारब्धे तत्पुत्रदिनकरभट्टप्रपूरिते मुक्तावलीप्रकाशे शब्दपरिच्छेदाख्यः षष्ठः परिच्छेदः" इति शब्दखण्डपुष्पिकातः, "भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः। सद्युक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु॥" इति ग्रन्थसमाप्तिश्लोकतश्चावशिष्टांशस्य पूरयिता तत्पुत्रो दिनकर इति प्रतीयते। आफ्रेख्टबृहत्सूच्याम्—"महादेवभट्टो दिनकरः स्वपित्रा वालकृष्णभट्टेन साकमेतां प्रकाशटीकां निर्मितवान्" (भा० १, पृ० ४३६) इति दृश्यते। भ्रान्तमेतद्विवरणमिति तिथ्यर्कभूमिकायां तत्संपादकैः श्रीकृष्णपन्तमहाशयैः खण्डितं तत्।

१. सरस्वतीभवनस्थ आ० ८७३२ संख्याको हस्तलेखो द्रष्टव्यः। अयं हस्तलेखः खण्डितः ४०–२२५ पत्रात्मको वर्तते।

२. यू० पी० हिस्टोरिकल सोसाइटी-पत्रिकायाः प्रथमभागस्य द्वितीये खण्डे १४८ पृष्ठे म०म० गोपीनाथकविराजमहोदयेन—"गङ्गारामेण मया मुक्तावलीप्रकाशादस्मन्मातामहग्रन्थात् स्फुरिते निष्पन्ने चषके सुधिया दत्तावधानया बुद्ध्या समर्पितं व्याख्यातमिति यावत्" इत्युपर्युद्धृतस्य श्लोकस्य व्याख्यानं १-२४ पत्रात्मकात् तर्कामृतचषकतात्पर्यहस्तलेखादुद्धृतं वर्तते। सरस्वतीभवनस्थो न्या० ७८७ संख्याकोऽयं हस्तलेखः। तर्कामृतचषकतात्पर्यटीकायाः सम्पूर्णो न० ९७६ संख्याकोऽन्योऽपि हस्तलेखो वर्तते सरस्वतीभवने।

३. भानुदत्तो मिथिलावास्तव्यो गणपतिमिश्रस्य पुत्रो रसमञ्जरी-रसतरङ्गिणी-अलङ्कारतिलक-गीतगौरीश-कुमारभार्गवीय-चित्रचन्द्रिकादिग्रन्थनिर्माता प्रसिद्ध आलङ्कारिकः। अस्य स्थितिकालः १४५०-१५०० ई० वर्तते। काणेमहोदय-

ताया रसतरङ्गिण्या नौकाख्या टीका च वाराणसीतः १९४२ वै० वत्सरे शिलाक्षरेषु मुद्रिते स्तः। तत्रैव रसमीमांसाग्रन्थसमाप्त्यनन्तरं सवृत्तिकानि गैरिकसूत्राण्यपि विद्यन्ते। एतेषां सवृत्तिकानां सूत्राणामुल्लेखो गङ्गाराम-कृतित्वेनाऽन्यत्राऽऽफ्रेख्टसूच्यां वा नास्ति। तर्कामृतचषकस्य चषकतात्पर्या-ख्यायास्तट्टीकायाश्च हस्तलेखा बहुषु ग्रन्थालयेषूपलभ्यन्ते। अनयोः प्रकाशनं सरस्वतीभवनग्रन्थमालायां भविष्यतीति निश्चयो वर्तते।

दिनकरीखण्डनस्यैक एव हस्तलेखो बृहत्सूच्यां निर्दिष्टः। १८८४ ई० वत्सरे प्रयागनगरतः प्रकाशितस्य हस्तलेखविवरणस्याष्टमखण्डता ज्ञायते यदेष हस्तलेखः काशीस्थायां ब्रह्मामृतवर्षिण्यां सभायामासीदिति (पृ० २६)। गङ्गारामजटीयनामकमेकं दिनकरीटिप्पणं[1] मद्रासनगरतः प्रका-शितं दृश्यते। एतच्च टिप्पणं दिनकरीखण्डनात्मकम्। कुत एतस्य हस्त-लेखादिकं समुपलब्धमिति ग्रन्थभूमिकातो नोपलभ्यते, न च सन्ति गङ्गा-रामकृतित्वपरिचायकानि लक्षणानि तत्र। "मुक्तावलीप्रकाशात् स्फुरिते चषके" इति तर्कामृतचषकस्य मङ्गलाचरणश्लोकतः, "चषकसुवर्णस्पर्शं दिनकरकरकृतपरामर्शम्" इति तत्रैव समाप्तिश्लोकतश्च यस्माद् ग्रन्थरत्ना-च्चषकनिर्माणस्फूर्तिर्लब्धा, यत्कर्तुः स्वमातामहस्य करस्पर्शेन स्वकीयग्रन्थ-संशोधनं च स्वीकृतम्, तस्यैव ग्रन्थस्य खण्डनात्मको ग्रन्थस्तेन निर्मित

---

कृते हिस्ट्री आफ संस्कृत पाइटिक्स-ग्रन्थे २९३-२९८ पृष्ठेष्वस्य विस्तरं वृत्त-मवलोकनीयम्।

१. मद्रासनगरस्थमैलापुरस्थानतः श्रीबालमनोरमामुद्राक्षरशालायां १९२३ ई० वर्षे श्रीविश्वनाथतर्कपञ्चाननकृता कारिकावली मुक्तावली-प्रभा-मञ्जूषा-दिनकरीय-रामरुद्रीय-गङ्गारामजटीयटीकाभिः समन्विता बालमनोरमाग्रन्थ-मालायाः षष्ठसंख्यारूपेण संमुद्रय प्राकाश्यं नीता। अत्र ८५५-८७८ संख्याकेषु पृष्ठेषु गङ्गारामजटीयं नाम दिनकरटिप्पणं विद्यते। तस्यायमादिमः श्लोकः-

यस्माद् भवन्ति लोका येनोज्जीवन्ति यत्र लीयन्ते।
तस्मै कस्मैचिदिदं भवतु परस्मै नमः पुंसे ॥ इति।

समाप्तौ च—

"दिनकरीयटिप्पणं गङ्गारामजटीयं सम्पूर्णम्" इति।

सम्पूर्णे चास्मिन् ग्रन्थे महादेवनाम्ना दिनकरनाम्ना वा मुक्तावलीप्रकाशमत-मुल्लिख्य खण्डितम्। अनुमानखण्डखण्डने महादेवदिनकरयोरुभयोर्नामधेयं दृश्यते विपर्यस्तक्रमेणापि। किमत्र बीजम्?

इत्यत्र प्रबलप्रमाणाभावे न किमपि वक्तुं शक्यते। यो हि ग्रन्थो मद्रास-नगरतः प्रकाशितस्तत्र तु तस्याभिन्नकर्तृकत्वसाधकं किमपि प्रमाणं नोपलभ्यत इत्युक्तमेव।

अनेन ग्रन्थकर्त्रा मणिमालानामकं ग्रन्थमपि निर्मितमिति [1]नौका-टीकातः समधिगम्यते। एष ग्रन्थो न्यायविषयक एव भवेत्, संगतिपदार्थस्य तत्र विशेषेणोपपादनात्। अस्यापि ग्रन्थस्याऽऽफ्रेक्टबृहत्सूच्यामुल्लेखो नास्ति। एतद्विषये विस्तरेण प्रमाणपुरःसरं सरस्वतीभवने साम्प्रतमेव संगृहीतस्य जडीसंग्रहस्य विवरणपरिज्ञानानन्तरं वक्तुं शक्येत।

ग्रन्थकारस्य समयः

जडीत्युपाह्वेन गङ्गारामेण पूर्वं मणिमाला, ततो नौका टीका, ततः परं [2]रसमीमांसातट्टीके, ततश्च तर्कामृतचषकस्तस्य तात्पर्यटीका च निर्मिताः। अत्र वहुषु ग्रन्थेषु तेन रचनाकाल उट्टङ्कितः। स चैवम्—

[3]ग्रहाङ्कनगपृथ्व्यङ्के नौकाङ्गिरसि वत्सरे।
एकद्वित्रिचतुःश्लोका गङ्गारामेण पूरिताः॥

---

१. "तदुक्तमभियुक्तैः—आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः संगतिरिति। विवेचितं चेदं मणिमालायामस्माभिरिति नेह प्रस्तूयते" (नौका, प० १५) इति।

२. रसमीमांसायां तट्टीकायां च वहुषु स्थलेषु (प० २, ५, ११, १४) नौका टीका समुद्धृता, वक्ष्यमाणग्रन्थरचनाकालतो नौका टीकैव पूर्वं रचितेति स्पष्टं प्रतीयते च; तथापि नौकायामेकत्र—"यथास्मत्कृतरसमीमांसायाम्" (प० ७९) इति रसमीमांसोद्ध्रियते। किमत्र बीजमिति न परिज्ञायते। भाण्डारकरशोधसंस्थाया विवरणात्मके सूचीपत्रे २०५ क्रमसंख्यायां स्थापिते ११३/१९१९-२४ संख्याके नौकाहस्तलेखे तु नैवोद्धृता रसमीमांसेति तत्रोद्धृतग्रन्थनामावल्यवलोकनतः परिज्ञायते।

३. रसतरङ्गिणीनौका, प० ९८
सरस्वतीभवनस्थे न० १६/५६० संख्याके पुस्तके—

नगग्रहाद्रिपृथिवीप्रमितेऽब्दे प्रमोदके।
पौष्यां विलिखितं ग्रन्थं यत्नेन परिपालयेत्॥

इत्येवं नौकासमाप्तिश्लोको दृश्यते। अनेन नौकारचनाकालः १७९७ वि० संवत्सर आयाति। म०म०पी०वी०काणेमहोदयेन नौकारचनाकालः १७३२

[१]वर्षे वर्षाकाले दिग्दन्तिनभोवसुवसुधामिलिते ।
व्यलिखद् गङ्गारामो गङ्गारामोभयप्रीत्यै ॥
[२]वर्षे वर्षाकाले चषकं त्रिशद्वसुवसुधामिलिते ।
व्यलिखद् गङ्गारामो गङ्गारामोभयप्रीत्यै ॥

अत्रान्तिमश्लोकस्तर्कामृतचषकतात्पर्यटीकासमाप्तिसूचकः, तत्रैवास्य श्लोकस्य दर्शनात् । चषकपुस्तकेषु ग्रन्थसमाप्तिश्लोको न दृश्यते । सरस्वतीभवने संवत् १८१८ वर्षे लिखितमेकं (आ० ६७४३ संख्याकं) चषकपुस्तकं विद्यते, यत्र मुखपृष्ठेऽन्तिमपृष्ठे च—"तर्कामृतचषकपुस्तकमिदं जड्युपनाम्नो गङ्गारामस्य" इति लिखितं दृश्यते । तेन चषकनिर्माणकालः १८१८ वि० संवत्सर एव स्यादिति निश्चीयते । एवं गङ्गारामेण १७९९ वि० संवत्सरतः १८३० वि० संवत्सरपर्यन्तं ग्रन्था रचिता इति परिज्ञायते । मणिमालाग्रन्थस्तेन नौकाटीकातः पूर्वं रचित इत्युक्तमेव प्राक् । एतावता वैक्रमाष्टादशशताब्द्याश्चतुर्थो भाग ऊनविंशशताब्द्याः पूर्वार्द्धश्चास्यावस्थितिसमय इत्यायाति ।

## प्रस्तुतसंस्करणसामग्री

सरस्वतीभवनस्थानां त्रयाणां हस्तलेखानां साहाय्येन प्रस्तुतं संस्करणं प्रतिसंस्कृतम् । तत्रैकपत्रात्मकस्य कसंज्ञकस्य पुस्तकस्य संख्या आ० ४५८८, पत्रद्वयात्मकस्य खसंज्ञकस्य संख्या आ० ९१०२, एकपत्रात्मकस्य गसंज्ञकस्य च हस्तलेखस्य संख्या न० ५५७४ वर्तते । सर्वं एवैते देवनागराक्षरेषु तूलपत्रेषु च लिखिताः सन्ति । लिपिकालः कुत्रापि न दृश्यते । गङ्गारामजडीरचितग्रन्थानां हस्तलेखेषु बहुषु मूलमात्राणि सूत्राणि यत्र तत्रावलोक्यन्ते । न तत्र कोऽपि विशेष इति न सा सामग्री सर्वा संकलिता । तथैव वाराणसीतः प्रकाशिताया रसमीमांसायाः समाप्तौ सवृत्तिकानि सूत्राणि मुद्रितानि सन्ति । तत्रापि न कोऽपि विशेष इति ।

---

ई० वत्सरः स्थापितः ( हि० सं० पो०, पृ० ३९५ ) । तत्र किं प्रमाणमिति न जानीमः । तदनुसारं १७८९ वि० संवत्सरस्तद्रचनाकालः समायाति । भाण्डारकरशोधसंस्थाया हस्तलेखे तु मूलोद्धृत एव पाठो वर्तते ।

१. सटीका रसमीमांसा, पृ० १४

२. आ०८७३२ संख्याकसरस्वतीभवनस्थतर्कामृतचषकतात्पर्यटीकाया हस्तलेखस्य समाप्तौ ।

## विवरणकर्तुः परिचयः

सवृत्तिकानामेषां सूत्राणां दुरूहतामवलोक्य प्रार्थिता गुरुचरणाः श्रीमन्तो रघुनाथशर्माणः सूत्रवृत्त्योर्विवरणं व्यरीरचन्। तदेवं सूत्रवृत्तिविवरणात्मक एष लघुग्रन्थः प्राच्यविद्यारुचीनां विदुषां पुरतः समुपस्थाप्यते। अत्र विवरणकारस्य संक्षेपेण परिचयप्रदानं मन्येऽप्रासङ्गिकं न भवेत्।

पूज्यचरणा इमे उत्तरप्रदेशराज्यस्थबलियामण्डलान्तर्गत-छाता-ग्रामवास्तव्यानां प्रथितवैयाकरणानां श्रीरामटहलपण्डितानां पौत्राः, व्याकरण-वेदान्तनव्यन्यायादिविषयेषु लब्धशेमुषीकाणां श्रीसुदर्शनाचार्यतोऽधीतव्याकरणानामुदासीनसम्प्रदायप्रथितस्वामिब्रह्मानन्दमहोदयतो लब्धपारम्परिकवेदान्तरहस्यानां श्रीसीतारामशास्त्रिद्रविडत उपात्तनव्यन्यायविद्यानां पञ्चदशीव्याख्या-अनुभूतिप्रकाशव्याख्येतिग्रन्थद्वयीनिर्मातॄणां गुरुकुलकांगड़ी-ज्वालापुरमहाविद्यालय-वाराणस्यादिषु पञ्चाशद्वर्षं यावत् कृतसरस्वती-समाराधनानां श्रीमतां काशीनाथशास्त्रिणां कनिष्ठपुत्राः, पूज्यपितृचरणेभ्योऽधिगतसकलशास्त्ररहस्याः, स्वकीयश्वसुरमहोदयेभ्यो हिन्दूविश्वविद्यालयस्थ-संस्कृतमहाविद्यालये वेदान्ताध्यापकेभ्यः श्रीमदच्युतनामधेयविद्वद्वरेभ्यो विशेषेण नव्यन्यायशास्त्रमप्यधीतवन्तः।

व्याकरण-साहित्य-धर्मशास्त्र-वेदान्त-मीमांसा-सांख्ययोग-नव्यन्यायप्रभृतिषु सर्वेष्वेव शास्त्रेष्वप्रतिहतं ग्रन्थग्रन्थिभेदनपटीयो वैचक्षण्यं विराजते एषाम्। वाराणसीस्थसंन्यासीसंस्कृतमहाविद्यालय-ब्रह्मविद्यापाठशाला-मारवाड़ीसंस्कृतविद्यालयेषु वेदान्तव्याकरणसाहित्याद्यध्यापनं कुर्वन्त इमे १९४० ई० वर्षे राजकीयसंस्कृतमहाविद्यालये व्याकरणाध्यापकपदे नियुक्ताः साम्प्रतं वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तप्राध्यापकपदमलङ्कुर्वन्ति। एतेषां पातञ्जलमहाभाष्यस्य तृतीयाध्यायान्ता टिप्पणी, चित्सुखीग्रन्थस्य टिप्पणी च मुम्बापुरीस्थनिर्णयसागरमुद्रणालयतः प्रकाशिते। भगवद्गीताया वाक्यपदीयस्य च मिताक्षरा-गूढार्थदीपिकाख्ये व्याख्ये निर्मीयेते साम्प्रतम्। सारस्वत्यां सुषमायामेतेषां विचारगभीरा विविधविषयालङ्कृता निबन्धाः प्रकाशिताः सन्ति प्रकाश्यन्ते च। विवरणावलोकनत एव विदुषां पुरत एतेषां सूक्ष्मेक्षिकाचातुर्यं स्फुटीभवेदित्यलं बहूक्तितः।

## उपसंहारः

संक्षेपतो ग्रन्थकारविषये यथामति किञ्चिदुक्तमत्र। सतीशचन्द्र-विद्याभूषणरचिते "हिस्ट्री आफ इण्डियन लॉजिक" नामके ग्रन्थे, म० म०

गोपीनाथकविराजनिबद्धे "सरस्वतीभवन स्टडीज"-पत्रिकायाश्चतुर्षु भागेषु प्रकाशिते "बिब्लियोग्राफी आफ न्यायवैशेषिक"-नामके विस्तृते निबन्धेऽन्येषु च न्यायशास्त्रस्येतिहासग्रन्थेषु निबन्धेषु वा दिनकरगङ्गारामयोर्विषये किमपि न दृश्यते। अधुनावध्येतद्विषयिणी श्रद्धेयचरणानां म० म० गोपीनाथकविराजमहोदयानां संक्षिप्तैका टिप्पणी यू० पी० हिस्टोरिकल सोसाइटी-पत्रिकायाः १९१८ ई० वर्षे प्रकाशितायाः प्रथमभागस्य द्वितीयखण्डे १४७-१४९ पृष्ठेषु दृश्यते, यत्र सर्वप्रथमं दिनकरगङ्गारामयोः संबन्धः समयश्च स्पष्टीकृतः। अन्यत्रापि निबन्धादिषु किञ्चिद् भवेत्तन्न परिज्ञातमस्माभिः। एतत्संबद्धा सामग्री संगृह्यते। अन्यदपि बहु वक्तव्यं विद्यते। तत्तु यथावसरं प्रकाशयिष्यते। साम्प्रतं गुणैकपक्षपातिनां सुधियां पुरत एतावदेवोक्त्वा विरमति॥

विदुषामाश्रवः—
व्रजवल्लभद्विवेदः।

पौषपूर्णिमा, संवत् २०१५
वाराणसी।

# गैरिकसूत्राणि

## सवृत्तिकानि

## जडच्युपनामकगङ्गारामोन्नीतानि

## रघुनाथशर्मविरचितविवरणसमेतानि

**श्रीगणेशाय नम इति सर्वत्र ।। १ ।।**

इतिशब्दात् [1]सरस्वत्या इत्यादि ।। १ ।।

### विवरणम्

मूले—सर्वत्रेति । आदौ रञ्जयेदिति शेषः । ग्रन्थारम्भे प्रकरणारम्भ इति तदर्थः । सर्वत्रेत्यस्य सर्वेषु पदेष्वित्यर्थः । वृत्तौ—इतिशब्दादिति । सादृश्यकार्थादिति शेषः । तथा चेदं फलितम्—श्रीगणेशाय नम इत्येतत्सदृशे सरस्वत्यै नम इत्यादिके वाक्येऽपि सर्वत्र गैरिकं लापनीयमित्येतद्वाक्योन्नीतेन कुत्र कुत्र गैरिकं लापनीयमिति प्रश्नवाक्येनैकवाक्यतया लभ्यते ॥ १ ॥

**प्रतीकस्याद्यन्तयोरन्यतरत्र ।। २ ।।**

व्याख्येयव्याख्यानयोरावापोद्वापाभ्यामुद्भूतावयवभावं [2]हि प्रतीकमुच्यते । किमुच्यते ? भुजावष्टब्धो भुजखण्ड इति । अमुं योगं भङ्क्त्वा सर्वत्रेत्येकवाक्यतया व्याख्याय सूत्रशृङ्खलितमहाभाष्यादौ सूत्रादौ सर्वत्रेत्यपि पक्षः समर्थिता(तः) समासपक्षेण [3]ज्ञाप्यते । [4]यथासम्प्रदायं व्यवस्थासिद्धयेऽन्यतरग्रहणम् ।। २ ।।

### विवरणम्

वृत्तौ—व्याख्येयव्याख्यानयोरिति । आवापोद्वापाभ्यां व्याख्येयव्याख्यानयोरुद्भूतावयवभावं हि प्रतीकमुच्यत इति योजना । यत् स्वस्य व्याख्यानवाक्ये आवापेन, व्याख्येयवाक्यात् स्वस्य उद्वापेन उद्धरणेन व्याख्येय-

---

१. अत्र 'सरस्वत्यै इत्यादि' इति च्छेदः । 'सरस्वत्यादि' इति–ख० ।
२. 'हि' नास्ति–क० । ३. न ज्ञाप्यते–क० । ४. 'तथा–क० ।

वाक्यघटकेतरांशस्य त्यागेन वा, व्याख्येयव्याख्यानवाक्ययोरवयवत्वेन स्फुटं प्रतीयते तत्प्रतीकमित्यर्थः। **किमुच्यत इति।** प्रतीकस्योदाहरणं किमुच्यत इति प्रश्नः। उत्तरम्—**भुजावष्टब्धो भुजखण्ड इति।** अत्र भुजावष्टब्ध इति व्याख्येयत्वेन प्रतीकम्। भुजखण्ड इति तस्य व्याख्यानम्। अत्र भुजखण्डशब्दे व्याख्यानभूते भुजशब्दस्यावापः, अवष्टब्धशब्दस्य च व्याख्येयगतस्योद्वापः। भुजेन भुजे वाऽवष्टब्धः संश्लिष्टो भुजावष्टब्धः। भुजं च हस्ताग्रमात्रमुच्यते, भुज्यते येन तद् भुजमिति व्युत्पत्त्या। भुजखण्ड इति भुजसंश्लिष्टः शरीरस्य खण्डविशेषः पूर्णो हस्त उच्यते। भुजदण्ड इति वा व्याख्येयम्। **अमुं योगमिति।** अमुं योगं प्रतीकस्याद्यन्तयोरन्यतरत्रेति सूत्रम्, भङ्क्त्वा प्रतीकस्येति पदं सूत्रात् पृथक्कृत्य, सर्वत्रेत्येकवाक्यतया पूर्वसूत्रघटकेन सर्वत्रेत्यनेनावृत्त्यैकवाक्यतया, व्याख्याय प्रतीकस्य सर्वत्र रञ्जनीयमिति व्याख्याय, योगविभागस्येष्टसिद्ध्यर्थत्वेन सूत्रशृङ्खलितमहाभाष्यादौ सूत्ररूपेण प्रतीकेन नियन्त्रिते तद्व्याख्यानभूते महाभाष्यादौ वृत्तौ च, सूत्रादौ प्रतीकस्य सूत्रस्य आदौ, सर्वत्र महाभाष्ये वृत्तौ च रञ्जनीयमित्यादिपदाध्याहारेण व्याख्येयमित्यपि पक्षः समर्थितः, समासपक्षेण समासः संक्षेपस्तद्रूपेण पक्षेण ज्ञाप्यते, इमं योगं भङ्क्त्वा संक्षेपेणायमपि पक्षः समर्थितो ज्ञाप्यत इति लब्धम्। **यथासम्प्रदायमिति।** सूत्रेऽन्यतरत्रेत्यत्र यथासम्प्रदायमित्यध्याहृत्य यथासम्प्रदायं व्यवस्थितमेवान्यतरत्र रञ्जनं विधीयते, न तु स्वेच्छाहेतुकमव्यवस्थितम्। रञ्जनं व्यवस्थापयितुं प्रवृत्तस्य सूत्रकृतस्तथाविधानानौचित्यादिति भावः॥ २॥

## शङ्कामतान्तरयोस्तयोर्द्वयोः ॥ ३ ॥

**अनुवृत्त्यैव सिद्धे तयोर्ग्रहणमन्तर्गतयोस्तयोर्यथा स्यात्। "निषेधस्य च" (सू० ५) इत्यनेनैव सिद्धे द्वयोर्ग्रहणम् 'आहुः' आदिषु यथा स्यात्॥ ३॥**

### विवरणम्

**मूले—शङ्कामतान्तरयोरिति।** शङ्का—ननु, न च, अथ, स्यादेतद् इत्यादिशब्दोपक्रमेण पूर्वपक्षोपन्यासः। मतान्तरम्—यद्वा, अथवा, परे तु, केचित्तु, अन्ये तु इत्यादिशब्दैः पक्षान्तरोपन्यासः। **तयोरिति।** तत्पदेन प्रागुक्तयोराद्यन्तयोः परामर्शः। तथा च शङ्कामतान्तरयोर्द्वयोरप्याद्यन्तयो रञ्जनीयमित्यर्थः संपद्यते। **वृत्तौ—अनुवृत्त्यैव सिद्ध इति।** पूर्वसूत्रादाद्य-

न्तयोरित्यस्यानुवृत्त्यैव सिद्ध इत्यर्थः। अन्तर्गतयोस्तयोर्यथा स्यादिति। यत्र महावाक्यघटकाऽवान्तरवाक्यगता शङ्का मतान्तरं वा तथाविधम्, तत्रापि शङ्कामतान्तराद्यन्तयोर्यथा स्यादित्यर्थः। अन्यथा यत्र शङ्कामतान्तरयोः स्वातन्त्र्येणोपादानं तत्रैव निरतिशयाऽऽदित्वाऽन्तत्वसत्त्वेन तत्रैव स्यादिति भावः। निषेधस्य चेत्यनेनैव सिद्ध इति। "निषेधस्य च" इत्यग्रिमसूत्रे चकारेण शङ्कामतान्तरयोः समुच्चयेनैव सिद्ध इत्यर्थः। द्वयोर्ग्रहणमिति। शङ्कामतान्तरयोर्द्वयोः पृथक् सूत्रे ग्रहणमित्यर्थः। आहुरादिषु यथा स्यादिति। अयं भावः—शङ्कामतान्तरयोर्द्वयोः पृथक् सूत्रे उपादाने निषेधस्य चेति चकारेण आहुरादीनां समुच्चयो भवति। अन्यथा तु शङ्कामतान्तरयोरेव मतान्तरप्रतिक्षेपरूपत्वेन निषेधसजातीययोः समुच्चयः स्यात्, न त्वाहुरादीनामतद्रूपाणाम्। तयोरन्यत्रोक्तौ तु परिशेषात्तेषामेव समुच्चय इति ॥ ३ ॥

**संमतेरपि व्यञ्जके ॥ ४ ॥**

ॐ, तदाहुः, यदाहुः। अपिशब्दात् 'अत्र ब्रूमः' इत्यादावुपसंहारादौ च यथा स्यात् ॥ ४ ॥

### विवरणम्

अत्र तयोरित्यनुवर्तते। संमतिव्यञ्जकानि दर्शयति वृत्तौ—ओम्, तदाहुः, यदाहुरिति। सूत्रेऽपिशब्दाद् अत्र ब्रूमः, अयं भावः, अत्रेदं तत्त्वम्, वस्तुतस्त्वित्यादिरूपाणि समाधानादिवाक्यानि, अन्यानि चोपसंहारोदाहरणादिवाक्यानि यथासम्प्रदायं संग्राह्याणि ॥ ४ ॥

**निषेधस्य च ॥ ५ ॥**

तच्चिन्त्यम्, तन्न। चकाराद् एतेन, अत एव, अपास्तम्, अलमादौ च यथा स्यात् ॥ ५ ॥

### विवरणम्

निषेधोदाहरणमाह वृत्तौ—तच्चिन्त्यम्, तन्नेति। सूत्रस्थचकारेण संग्राह्याणि दर्शयति—एतेनेत्यादि। अत्रापि तयोरित्यनुवर्तते। तेन तन्नेत्यादिघटितवाक्यस्याद्यन्तयो रञ्जनीयमित्यर्थः ॥ ५ ॥

**[1]पक्षान्तरदोषान्तरयोः पदे ॥ ६ ॥**

यद्वा, अथवा, किञ्च, अपि चेत्यादि ॥ ६ ॥

---

१. व्यञ्जकपक्षा—क०।

### विवरणम्

सूत्रे—पद इति । जात्यभिप्रायेणैकवचनम् । पक्षान्तरबोधकं दोषान्तरबोधकं च पदं रञ्जनीयमित्यर्थः । पक्षान्तरबोधकं पदम्—यद्वा, अथवेति । दोषान्तरबोधकम्—किञ्च, अपि चेत्यादि ॥ ६ ॥

**ग्रन्थदेवतयोर्नाम्नि ॥ ७ ॥**

स्पष्टम् ॥ ७ ॥

### विवरणम्

अत्र सूत्रे नाम्नि इति जात्यभिप्रायेणैकवचनम् ॥ ७ ॥

**[1]इतिश्यादौ सर्वत्र व्यवधानेन ॥ ८ ॥**

आदिशब्दः प्रकारे । तेन तत्तुल्याध्यायसर्गसंग्रहः[2] । "ग्रन्थदेवतयोः" (सू० ७) इत्यनेन स्वनामासंग्रहादयमारम्भः । [3]तत्रैव स्वशब्दपूरणे तु तन्मात्रे पर्यवस्येत् । अत्र च यद्यलङ्कार इत्यवक्ष्यत् तर्हीतिहासादौ पर्वणि पर्वण्येवाभविष्यन्नाध्यायेऽध्याये[4] । अनुवृत्त्यैव सिद्धे सर्वत्रग्रहणं छन्दसीत्यर्द्धं(र्थं) गृह्णाति । व्यवधानेनेति रुचिविशेषाभिप्रायम् । अत एव वाक्यघटकपदार्थविशेषरुचिर्नास्त्येवेति सर्वत्रैवोक्तं प्राक् ॥ ८ ॥

### विवरणम्

वृत्तौ—तत्तुल्याध्यायेत्यादि । ग्रन्थसमाप्तितुल्याध्यायसर्गसंग्रह इत्यर्थः । तत्तुल्याध्यायसर्गान्तसंग्रह इति यावत् । अत्राध्यायान्तादौ तुल्यता चावसानत्वरूपधर्मसाम्येन । तत्रैवेति । पूर्वसूत्र एवेत्यर्थः । तन्मात्र इति । इतिश्यादौ स्वनाममात्र एव गौरकं लापनीयमिति पर्यवस्येदित्यर्थः । अत्र चेति । अत्र सूत्रे यदि 'इतिश्यादौ' इत्यपनीय तत्स्थाने 'अलङ्कारे' इत्यवक्ष्यत्, तर्हि अलङ्क्रियते अलंशब्द उच्चार्यते यत्रेति व्युत्पत्त्या समाप्तिरूपोऽर्थः स्यात् । सा च समाप्तिर्भारतादावितिहासे पर्वरूपैव गृह्येत, न त्वध्यायरूपा । प्रकृतार्थसंबद्धस्याध्यायान्तरस्यापि वक्तव्यत्वेनाध्यायेऽलंशब्दप्रयोगायोगात् । पर्वणि त्वलंशब्दप्रयोगो युज्यते, तत्रैव पर्वणि तत्प्रकृतार्थसमाप्तेः । यथा भीष्मादिपर्वस्वेव भीष्मादिचरितानां समाप्तिः । अनुवृत्त्यैवेति । सर्वत्रेत्यस्य

---

१. इतिश्चादौ—क० ।
२. 'सर्ग' नास्ति—क० ख० ।
३. तत्र—ग० ।
४. 'अध्याये' नास्ति—ग० ।

प्रथमसूत्रान्मण्डूकप्लुतिन्यायेनानुवृत्त्यैवेत्यर्थः। छन्दसीत्यर्द्धमिति। छन्दसीत्यर्थमिति पाठो भाति। छन्दसीत्यस्य पद्य इत्यर्थः। गृह्णातीत्यस्य संगृह्णातीत्यर्थः। रुचिविशेषाभिप्रायमिति। अत्र व्यवधानेन रञ्जन एक-द्वित्र्यादिपदव्यवधाननियमो नास्ति, किन्तु रुचिविशेष एव नियामक इति भावः। अत एव व्यवधानेनेत्यस्य रुचिविशेषाभिप्रायकत्वादेव। वाक्यघटक-पदार्थविशेषेत्यादेरादौ प्रायेणेति शेषः। प्रायेण इतिश्यादिवाक्यघटकपदार्थ-विशेषरुचिर्वाचकानां नास्त्येव, तेषां ग्रन्थप्रतिपाद्यपदार्थविशेष एव रुचेः संभवादिति मत्वा प्रकृतसूत्रे पूर्वं सर्वत्रेत्येवोक्तम्। पश्चात्तु तादृशवाक्यघटक-पदार्थविशेषविषयकवाचकविशेषगतरुचिविशेषस्यापि क्वचित् कदाचित् संभवाभिप्रायेण व्यवधानेनेत्युक्तमित्यर्थः ॥ ८ ॥

अङ्केऽङ्के ॥ ९ ॥

[1]इति जडचुपनामकगङ्गारामकृतगैरिकसूत्राणि समाप्तानि ॥

प्रत्येकप्राप्तये कृता वीप्सा समाप्तिमप्याह। अक्षरपुस्तके स्वतो व्यावृत्तत्वादङ्कपुस्तकेऽवान्त(र)व्यावृत्त्यभावाद् न (?) ज्योतिशास्त्र-गोचरता ॥ ९ ॥

[2]गैरिकसूत्राणि। अत्र गैरिकं पुस्तके कुत्र लापनीयमित्युन्नीतप्रश्नक-परं गैरिकपदम्; तानि च तानि सूत्राणि च गैरिकसूत्राणीत्यर्थः। तथा च गैरिकं पुस्तकेऽत्रात्र लापनीयमिति वाक्यार्थः प्रश्नोत्तरयो(रे-के ? रे)कवाक्यतया संपद्यत इति न न्यूनपदतादोषः।

समूलमपि निर्मूलं यदहं प्रललाप तत्।
विश्वचक्रं भ्रामयितुर्यन्तुर्विलसितं भवेत् ॥

इति श्रीजडचुपनामकगङ्गारामोन्नीता[3] गैरिकसूत्रवृत्तिः ॥

## विवरणम्

अङ्केऽङ्के प्रत्येकमङ्के गैरिकं लापनीयमित्यर्थः। यद्यप्यत्र प्रत्येकमङ्के गैरिकलापनप्राप्तये वीप्सा कृता, अन्यथा क्वचिदेव तत् स्यात्; तथापि प्रकृतगैरिकसूत्रसमाप्तौ कृता वीप्साऽन्यत्रेवात्रापि ग्रन्थसमाप्तिमत्याहैवेत्यर्थः।

---

१. इत्येतानि गैरिकसूत्राणि समाप्तानि–क० ।
२. 'गैरिकसूत्राणि' इत्यारभ्य 'न न्यूनपदतादोषः' इत्यन्तो भागो नास्ति–क० ग० ।
३. गङ्गारामकृता–क० ।

विनिगमनाविरहादुभयपरत्वमेव वीप्सायाा इति भावः । अक्षरपुस्तकेऽङ्कानां लेखनेऽक्षरवैजात्येन स्वतो व्यावृत्तत्वाद् गैरिकलापनं विनैव व्यावृत्तत्वात्। अङ्कपुस्तके गणितपुस्तकेऽङ्कानां साजात्येनावान्तरव्यावृत्त्यभावाद् अङ्क-पुस्तके 'अङ्केऽङ्के' इत्यस्य सूत्रस्य ज्योतिःशास्त्रगोचरतेत्यर्थः । अयं भावः—यथा क्वचित् १२ इति संख्याद्वयाभिप्रायेण लिखितम्, अन्यत्र द्वादशा-भिप्रायेण तथैव लिखितम्। तत्र रञ्जनं विना संदेहः स्यात्। रञ्जने तु न संदेहः, यतो हि यदा प्रत्येकं पृथग् रञ्जनं तदा संख्याद्वयप्रतीतिः, यदि तु समुदायरञ्जनमविभागेन तदा द्वादशसंख्याप्रतीतिरिति। अत्र वृत्तौ—"न ज्योतिःशास्त्रगोचरता" इति नञ्घटितः पाठोऽसाधुः, तन्मात्रगोचरत्वस्यैव सत्त्वात् ॥ ९ ॥

गैरिकसूत्राणि समाप्तानीत्यत्र गैरिकपदं येषां सूत्राणां दर्शनेन "कुत्र गैरिकं लापनीयम्" इति प्रश्न उन्नीतस्तादृशसूत्रपरमित्यर्थः। उन्नीतप्रश्न-केत्यत्र उन्नीतः प्रश्नो यैरिति विग्रहः। तथा च गैरिकपदस्योन्नीततादृशप्रश्नके तात्पर्यानुपपत्त्या लक्षणा। **इति वाक्यार्थ इति**। अयं वाक्यार्थस्तादृश-प्रश्नस्य सूत्रनवकरूपस्य समाधानवाक्यसमुदायस्य चैकवाक्यतया संपद्यत इति समाधानवाक्ये लापनीयमिति पदानुक्त्या यो न्यूनपदत्वदोषः, स प्रश्नवाक्यात् तल्लाभान्नेत्यर्थः।

**समूलमपीति**। रञ्जनसम्प्रदायसत्त्वेन समूलमपि, इतः प्राग् रञ्जन-विधायकसूत्राभावान्निर्मूलमिदं गैरिकरञ्जनसूत्रं यदहं प्रललाप प्रकर्षेण ललाप। न तु प्रलापं कृतवान्। "प्रलापोऽनर्थकं वचः" (अमर० १।६।१५) इति प्रलापवचनस्यानर्थक्यादस्य च सार्थक्यात्। तदिदं विश्वचक्रं भ्रामयितु-र्यन्तुः सर्वान्तर्गतत्वेन चराचरजगन्नियन्तुर्विलसितं भवेदित्यहं संभावयामि। अन्तर्यामिप्रेरणयैवेदं सूत्रं मया व्यरचीत्यर्थः। अत्र यन्तुर्विलसितमित्युक्त्या स्वकर्तृकप्रलापक्रियायां परोक्षत्वोपपत्तिः। अत एव चेदं प्रकृष्टं लपनं न त्वनर्थकं वचः।

**गङ्गारामोन्नीतगैरिकसूत्रवृत्तिरिति**। गङ्गारामोन्नीतानां तेनैव स्वबुद्ध्या यथासम्प्रदायमुत्प्रेक्षितानाम्, न तु शास्त्रान्तरावलम्बनेन प्रणी-तानामित्यर्थः ॥

इति बलियामण्डलान्तर्गत-छाताग्रामाभिजनविद्याजनुर्गुरुब्रह्मीभूत-
श्रीकाशीनाथपदाराधनावाप्तसन्मतिश्रीरघुनाथशर्मकृतं
गैरिकसूत्रतद्वृत्तिव्याख्यानं सम्पूर्णम् ॥

# संगीतशास्त्रम्

साम्प्रतं पाश्चात्यदेशेषु ज्ञानविज्ञानयोरतीवोन्नतिः सञ्जाता, तथापि कला-दर्शनयोरद्यापि भारतस्तेषां गुरुरेव। विशेषतः संगीतविषये एतत्कथनमतीवोपयुक्तम्। भारतीयसंगीतस्य निखिलं विश्वं मुक्तकण्ठेन प्रशंसकं वर्तते। विश्वप्रतियोगितायां स्थितस्यास्य भारतीयसंगीतस्य आधारभूतं प्राचीनं वाङ्मयमधुना विस्मृतिगर्ते पतितमिव दृश्यते। तेन सहास्य सम्बन्धस्य योजिकाः शृङ्खलास्त्रुटिता इव दृश्यन्ते। यदि वयमस्यां प्रतियोगितायां सदैवोन्नतशिरस्काः स्थातुमिच्छामस्तर्हि तस्याधारस्य सुदृढताऽतीवोपयुक्ता विद्यते। सम्पूर्णस्य प्राचीनसंगीतवाङ्मयस्य गवेषणा, तस्य नूतनतमसम्पादनकौशलेन प्रकाशनम्, ऐतिहासिकं समालोचनात्मकं तुलनात्मकं गम्भीरमध्ययनम्, प्राचीनसंगीतस्य क्रमिकविकासः, तस्य आधुनिकसंगीतेन सम्बन्धस्य योजिकानां परम्पराणामन्वेषणं चातीवावश्यकम्।

भारतीयप्रतिभया पुरुषार्थचतुष्टयस्य कल्पना कृता। प्राणिमात्रस्य निखिलासु प्रवृत्तिषु पुरुषार्थमेव लक्ष्यम्। पाश्चात्यदेशेषु दर्शनादीनां लक्ष्यरहितैव प्रवृत्तिर्दृश्यते। कलायाः प्रयोजनमपि कलैव। नहि तथा भारतीयदर्शनकलादीनां प्रवृत्तिः। तत्र सर्वेषामेषां प्रयोजनं पुरुषार्थचतुष्टयसाधनम्। विशेषतः परमपुरुषार्थस्य मोक्षस्य साधनार्थमेव सर्वेषां शास्त्राणां प्रवृत्तिर्दृश्यते। संगीतशास्त्रमपि—

देवस्य पुरतः शम्भोर्नियताभ्युदयप्रदः। (१।१।२३)
तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते।
धर्मार्थकाममोक्षाणामिदमेवैकसाधनम्॥

(संगीतरत्नाकरे, १।१।३०)

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति॥

(याज्ञवल्क्यस्मृतौ, ३।११५)

शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः। (५।५६)

(संगीतरत्नाकरे)

इत्यादिना पुरुषार्थचतुष्टयसाधनमिति स्पष्टमेव प्रतिपादितम्। साम्प्रतं संगीतमर्थकामयोरेव साधनं सञ्जातम्, विद्वद्भिश्च तद्धेयदृष्ट्याऽवलोक्यते।

उभाभ्यामेव ताभ्यामुपर्युक्तेषु वचनेष्ववधानं विधेयम् । धर्ममोक्षयोः सत्तायामविश्वासभाजोऽपि नैतिकताया आत्मसंतोषस्य च मूल्यं स्वीकरिष्यन्त्येव ।

लोके यद्यपि संगीतशब्दस्य गीतमात्र एव प्रयोगो दृश्यते, तथापि शास्त्रे संगीतशब्देन गीतवाद्यनृत्यानां त्रयाणामपि ग्रहणम्—

"गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते" (१।१।२१) इति ।
(संगीतरत्नाकरे)

अत एव संगीतरत्नाकरटीकाकर्त्रा कल्लिनाथेन तत्र—"तस्माद्यत्र संगीतशब्दस्य प्रयोगस्तत्र तौर्यत्रिकं विवक्षितमिति मन्तव्यम् । क्वचिद् गीतमात्रे संगीतशब्दप्रयोगस्त्ववयवेऽवयव्युपचारात्" इत्युक्तम् । अमरकोशे तौर्यत्रिकशब्दस्य "तौर्यत्रिकं नृत्यगीतवाद्यम्" इत्यर्थमुक्त्वा तदनन्तरम् "नाट्यमिदं त्रयम्" इत्युक्तम् । अतः संगीतशास्त्रं नाट्यशास्त्रमिति चाऽनर्थान्तरम् । भरतमुनिरचिते नाट्यशास्त्रे त्रयाणामपि गीतवाद्यनृत्यानां निरूपणं दृश्यते । इयांस्तु विशेषः— संगीतग्रन्थेषु गीतस्य प्राधान्येन निर्देशः कृतो भवति । नाट्यशास्त्रे च नाट्य-नृत्य-नृत्तानामिति ।

संगीतशास्त्रस्य गान्धर्वशास्त्रनाम्नाऽपि व्यपदेशो दृश्यते—

"गान्धर्वशास्त्रसंक्षेपः सारतोऽयं मयाच्यते" इति । (दत्तिले, १)

भारते वैदिककाल एव संगीतस्य समुन्नतिः सञ्जाता आसीदिति "तस्माद् गायन्तं स्त्रियः कामयन्ते" इति श्रुतिवचनात् प्रतीयते । अष्टादशविद्यासु चत्वार उपवेदाः । तत्र सामवेदस्य उपवेदो गान्धर्ववेदः । रामदासगौडमहाशयेन 'हिन्दुत्व' नामके हिन्दीभाषापुस्तके गान्धर्ववेदविषये यत्किमपि जल्पितं तत्केनाऽऽधारेणेति न जानीमः । तत्कृतस्य पुस्तकादीनां विवरणस्य कस्मिन्नपि प्रामाणिके भारतीयसाहित्ये कुत्राप्यदर्शनात् ।

अस्य संगीतशास्त्रस्य आदिप्रवक्ता भगवान् ब्रह्मा सदाशिवश्च—

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ।। (१।१-२)
मयाऽपीदं स्मृतं नृत्यं सन्ध्याकालेषु नृत्यता । (४।१३)
ततस्तण्डुं समाहूय प्रोक्तवान् भुवनेश्वरः ।। (४।१७)

इति भरतमुन्युक्तेः । अभिनवदर्पणे नन्दिकेश्वरेणाप्येवमेवोक्तम्—

पार्वती त्वनुशास्ति स्म लास्यं बाणात्मजामुषाम् ।
तया द्वारवतीगोप्यस्ताभिः सौराष्ट्रयोषितः ।। इति ।

अनेन नन्दिकेश्वरवचनेन पार्वत्या अपि संगीतशास्त्रोपदेष्टृत्वं समायाति। अत एव सङ्गीतरत्नाकरकारेण "सदाशिवः शिवा ब्रह्मा" इति त्रयाणामपि नामनिर्देशः कृतः।

संगीतशास्त्रस्य चर्चा सामवेदादिब्राह्मणेषु प्रातिशाख्यादिसूत्रग्रन्थेषु शिक्षासु पुराणादिषु च यत्र तत्र दृश्यते। बंगला-विश्वकोषे, आनन्दाश्रम-मुद्रित-संगीतरत्नाकरपरिशिष्टे, संगीतमकरन्दपरिशिष्टे च शताधिकसंगीत-विषयकग्रन्थानां नामानि दत्तानि सन्ति। एषु प्रायशोऽधिकसंख्याका ग्रन्थाः साम्प्रतं नैवोपलभ्यन्ते। ये चोपलभ्यन्ते त इतस्ततो हस्तलिखितपुस्तकालयेषु विप्रकीर्णाः सन्ति। तेष्वप्यत्यल्पान्येव पुस्तकानि साम्प्रतं मुद्रितानि सन्ति। यानि च मुद्रितानि तान्यप्यशुद्धिभूयिष्ठानि। अद्यावधि द्वित्रा एव ग्रन्थाः सुसम्पादिता दृश्यन्ते। 'कालिकाता-संस्कृत-सीरीज'मुद्रितमभिनवदर्पणम्, 'अड्यार लाइब्रेरी' मुद्रितः संगीतरत्नाकरश्च सर्वाङ्गपूर्णे प्रकाशने स्तः। एतादृशमेव संस्करणमन्येषामपि संगीतपुस्तकानां भवितव्यम्। संगीतरत्नाकरस्य संगीतसुधाकर-कलानिधिटीकाभ्यां बहूनां संगीतपुस्तकानां संशोधने महती सहायताऽवाप्यत इति भाविसंगीतपुस्तकसम्पादकैरवधेयम्। तुलनार्थमत्र बृहद्देशीस्थोऽयमंशो द्रष्टव्यः—

"श्रु श्रवणे चास्य धातोः क्तिप्रत्ययसमुद्भवः।·······तत्रादौ तावदिहाग्निपवनसंयोगात् पुरुषप्रयत्नप्रेरितोर्ध्वं नाभेरूर्ध्वाकाशदेशमाक्रामद् धूमवत् सोपानपदक्रमेण पवनेच्छया आहाहरोहन्नतर्भूतपूरणप्रातिनिपार्यापाद्यतया (?) श्रुत्यादिभेदभिन्नः प्रतिभास इति मामकीयं मतम्।·······तथा चाह चतुरः (?)·······गम्भीरो घन(नी ? शी)लश्च····अपरे तु·······न्धादयो नवधा श्रुतिं प्रतिपद्यन्ते" इति।

(त्रिवेन्द्रम्-संस्कृत-सिरीज-मुद्रितो बृहद्देशीस्थः पाठः, पृ० ४-५)

"श्रवणार्थस्य धातोः क्तिन्प्रत्यये च सुसंश्रित····तत्रादौ तावद्देहाकाश-पवनसंयोगात् पुरुषप्रयत्नप्रेरितो ध्वनिर्नाभेरूर्ध्वमाकाशदेशमाक्रामन् धूमवत् सोपानपदक्रमेण पवनेच्छयाऽनेकधाऽऽरोहन्नन्तर्भूतपूरणप्रत्ययार्थतया चतुःश्रुत्यादिभेदभिन्नः प्रतिभासत इति मामकीनं मतम्।·······तथा चाह तुम्बुरुः····गम्भीरो घनलीनस्तु·······। अपरे तु वेण्वादयो मुनयो नवविधां श्रुतिं मन्यन्ते" इति

(कलानिधिटीकायामुद्धृतः पाठः, अड्यारसं०, पृ० ७०-७१)

साम्प्रतं संगीतविषयकं प्राचीनतमं पुस्तकं भरतमुनिप्रणीतं नाट्य-शास्त्रमेव स्वीक्रियते। महानयं खेदस्य विषयो यदद्यावधि तस्य सुसम्पादितं संस्करणं नोपलभ्यते। निर्णयसागरीयं संस्करणमशुद्धिभूयिष्ठं त्रुटिपूरितं च वर्तत एव, 'चौखम्भा संस्कृत सिरीज'-मुद्रितं संस्करणमप्यतीवानवधान-तया सम्पादितम्। तत्र एकत्रिंशेऽध्याये तालप्रकरणे नवत्यधिकाः श्लोकाश्चतुर्विंशाध्यायस्थाः पातिताः। एताभ्यां संस्करणाभ्यां 'गायकवाड़-संस्कृत-सिरीज'-मुद्रितमभिनवगुप्तकृतटीकासहितं संस्करणमुत्तमं वर्तते, किन्तु साम्प्रतं तदष्टादशाध्यायपर्यन्तमेव प्रकाशितमभूत्।

ओ० सी० गांगुलिमहाशयेन स्वकीये 'रागाज् एण्ड रागिनीज्' नामक-पुस्तकपरिशिष्टे भरतमुनिसमयः ख्रीष्टस्य चतुर्थशताब्दी दत्ता, दत्तिलमुनि-समयश्च द्वितीयशताब्दी। एवमेव नारदीयशिक्षायाः कालः पञ्चमशताब्दी-समीपस्थ इति। तत् केनाऽऽधारेणेति न विभाव्यत इति शम्॥

---

# भारतीयसंस्कृतेर्विनियोगः

साम्प्रतं साहित्यसंस्कृतिपदयोर्ययोरर्थयोः शक्तिस्तावर्थाविभिनवावेव। प्राचीनवाङ्मये साहित्यशब्दप्रयोगो बहुत्रोपलभ्यते "साहित्यसंगीतकलाविहीनः" इत्यादिषु, किन्तु तत्र साहित्यशब्दः शास्त्रविशेष एव रूढः। एवमेव संस्कृतिपदव्यवहारोऽपि स्मृत्यादिषु दरीदृश्यते, किन्तु संस्कारशब्दपर्याय एव स तत्र। पाश्चात्यसभ्यसमाजे 'लिटरेचर-कल्चर'शब्दयोर्भूरिशः प्रचलनमासीदस्ति च। तत्पर्यायरूपेण भारतीयभाषासु साहित्यसंस्कृतिपदयोः प्रचलनमभूत्। एवं च साहित्यशब्दः स्वकीयां रूढिमपहाय योगमहिम्ना सम्पूर्णे वाङ्मये शक्तः। संस्कृतिशब्दश्च जनजीवने यद्वैशिष्ट्यं प्रादुर्भवति, तेनैव वंशपरम्परासु यः संस्कारविशेषः, या जीवनप्रणाली, ये आचारविचाराः समुन्मिषन्ति, तानभिव्यनक्ति।

मानवसृष्टेः सममेव मानवसंस्कृतेरपि प्रतिष्ठा समुपजायते। प्रतिष्ठितायास्तस्याः संस्कृतेः साहित्यं वाहकं चिरस्थापकं चाभ्युगम्यते। अत एव भिन्नभिन्नदेशेषु विभिन्नधार्मिकदार्शनिकसाहित्यानि विभिन्नानां संस्कृतीनां चिरप्ररोहकाणीव संलक्ष्यन्ते। अत एव च स्वल्पावशिष्टमपि प्राचीन-ईजिप्ट-ग्रीक-रोमन-साहित्यमाधारीकृत्य तास्ताः प्राचीनाः संस्कृतयोऽद्युनापि स्वकीयं स्वरूपं निभालयन्ति। परप्रद्वेषेण स्वपक्षोपेक्षया च बहुशः प्राचीनं साहित्यं प्रनष्टम्। बहवो देशा जातयश्चान्यदेशीयसाहित्यस्य संस्कृतेश्च महत्तया प्रभाविताः स्वयमेव ता अङ्गीचक्रुः, स्वकीयां प्राचीनां संस्कृतिं च त्यक्तवन्तः। अल्पीयांस एव ते देशा ये स्वकीयं साहित्यं संस्कृतिं च रक्षन्त एवान्यदेशीयसाहित्येन स्वकीये साहित्ये परिवर्द्धनं संस्कृतौ च तदनुगुणं परिवर्तनमङ्गीचक्रुः। ईदृशेषु देशेषु भारतवर्षस्य चीनदेशस्य च नाम वयं सगौरवं ग्रहीतुं शक्नुमः।

संस्कृतिस्तरङ्गिणीप्रवाहवद् गतिशीला वर्तते। सम्पूर्णस्य विश्वस्य का वार्ता, प्रत्येकेषु देशेष्वप्यस्याः समये समये विभिन्ना आकारा दरीदृश्यन्ते। भारतं वर्षमेव गृह्णातु नाम, सर्वप्रथममत्र वैदिकसाहित्यस्य साम्राज्यमासीत्। तदनु बौद्धसाहित्यस्य जैनसाहित्यस्य च जन्म समजायत,

तच्च पाश्चात्त्यैर्विद्वद्भिः श्रमणसाहित्यमिति नाम्ना व्यपदिश्यते। एतयोः साहित्ययोराधारेणैव तैर्वैदिकसंस्कृतिः श्रमणसंस्कृतिश्चेति नामद्वयं कृतम्। केचन भारतीया विद्वांसोऽप्येनं विभागं स्वीकुर्वन्त इव दृश्यन्ते। नैतच्छोभनम्। हिमालयाद् गङ्गोत्रीस्थानतः परमपावनया भगवत्याः सुरसरितः शतसहस्रवर्षेभ्यः पावयन् पामरान् पुण्यतमः प्रवाहः प्रवहति। स्थाने स्थाने तस्यां बह्व्यः क्षुद्रा आपगा बृहत्यः सरितश्च संमिलिता भवन्ति। नहि तासां सम्बन्धेन भागीरथ्या नामपरिवर्तनं भवति। पावनस्त्रिवेणीसङ्गमोऽपि स्वल्पाय कालाय गङ्गायमुनयोर्भेदं प्रदर्शयन्नपि शनैः शनैरेकाकारेणैव पर्यवस्यति। एवमेवास्माकीनैषा भारतीया संस्कृतिः। समये समयेऽस्यां विभिन्नाः संस्कृतय आगत्य समवलीयन्ते। एतावतैव नामपरिवर्तनं तु नोचितम्। बह्वीनां सरितां संगमेऽपि यद्यपि गङ्गाया नामपरिवर्तनं न भवति, तथापि तस्यास्तस्याः सरितः सङ्गमे तस्यां किञ्चिदिव वैशिष्ट्यं समायात्येव। वनपर्वतादिस्थानानामपि प्रभावोऽवश्यमेव दरीदृश्यते। गङ्गोत्रीकनखलहरिद्वारादिस्थानेषु प्रयागवाराणसीपाटलिपुत्रादिषु च स्थिताया भागीरथ्याः स्पष्टमेवान्तरं पर्यालोच्यते। एवमेव संस्कृतिविषयेऽपि स्वीकर्तव्यम्। नामपरिवर्तनाभावेऽपि तस्याः स्वरूपे परिवर्तनं जायत एव। एवं च वैदिकसाहित्यप्रभावात् प्रादुर्भूतायां भारतीयसंस्कृतिधारायां बौद्धजैनसाहित्याभ्यां प्रादुर्भूता श्रमणसंस्कृतिधारा कञ्चित्कालं स्वकीयं नेपथ्यमभिनीय विलीना। अधुना वैदिकसंस्कृतेः श्रमणसंस्कृतेर्वा पृथक्चर्चा कूटनीतेः परमाचार्यैः पाश्चात्त्यैः कञ्चिद्गूढाभिसन्धिमभिलक्ष्य प्रचारितैव मन्तव्या। नहि वास्तविकी तयोः सत्ताऽधुना विद्यते। वैदिकसंस्कृतौ संभूय श्रमणसंस्कृत्या शनैः शनैरभिनवमिव किञ्चिद् रूपं स्वीकृतम्। तच्च भारतीयसंस्कृतिपदाभिधेयमेव। अथवा द्वाभ्यामप्येताभ्यां धाराभ्यां विकसिता पौराणिकी संस्कृतिधारा। यत्र हि दशावतारेषु भगवतो बुद्धस्य भागवतादिषु च जैनप्रथमतीर्थंकरस्य ऋषभदेवस्य महर्षित्वेनोल्लेखः।

कालक्रमेणात्र न्यायवैशेषिकादिदर्शनानां भागवतपाशुपतादिसंप्रदायानामागमादिशास्त्राणां च प्रादुर्भावः समजायत। एवमेव यवनशकहूणादिजातयो देशान्तरेभ्य आगत्यात्र उषिताः। सर्वासामासां प्रभावो भारतीयसंस्कृतौ किञ्चिदिव रूपान्तरसंपादकः समभूत्। इत्थं बहुकालादेष पावनः सांस्कृतिकः प्रवाहोऽत्र प्रवहन्नासीत्। सहसैकेन विरोधिना वातावरणेन तस्मिन् हस्तक्षेपो व्यधायि।

विदेशेषु प्रायो विरुद्धानां संस्कृतीनां द्वन्द्वस्तत्रैकस्याः पराजयः, पराभूतायाः प्राचीनायाः संस्कृतेः स्थाने विजिताया नूतनायाः संस्कृतेः स्थापनं च साधारणी घटनाऽऽसीत्। विरुद्धसंस्कृतीनां योद्धृवर्गाणां कलहा जायन्ते स्म। तत्र विजितपक्षेण पराजितपक्षस्य साहित्यादिकं सर्वप्रथममेवोन्मूल्यते स्म, स्वकीयसंस्कृतिरक्षणेच्छूनां च शरीरं कबन्धीक्रियते स्म। इत्थं शनैः शनैस्तत्र प्राचीनसंस्कृतिस्थानेऽभिनवसंस्कृतिसाम्राज्यं समस्थाप्यत। प्राचीनमिस्त्ररोमग्रीकसंस्कृतीनां लोप इत्थमेव समजायत। 'जेन्द अवेस्ता'–साहित्याधारेण प्रादुर्भूतायाः प्राचीनपारसीकसंस्कृते रक्षाऽऽस्माकीने भारत एव संजाता। प्राचीना यहूदिनोऽपि स्वकीयसंस्कृते रक्षणार्थं भारतस्य शरणं ययुः। भारतीयसंस्कृत्या भारतवर्षाद्बहिरपि विश्वस्य विस्तृते क्षेत्रे परमपावनो ज्ञानालोकः प्रसारितः। परन्तु हठधर्मितायास्तत्र लेशोऽपि नासीत्। शान्त्या प्रेम्णा च तया विश्वं विजितम्।

विदेशीयास्वेतासु संस्कृतिष्वेषा विशेषता नासीत्। पूर्वायाः संस्कृतेः समूलमुन्मूलनं ततः स्वसाम्राज्यस्थापनं चासां पावनः पन्था आसीत्। एतादृशीष्वेवैकतमा—यया एशियाखण्डस्य विस्तृते क्षेत्रे यूरोपखण्डस्य च स्वल्पे भागे खड्गबलेन साम्राज्यं स्थापितम्—भारतवर्षेऽपि तदभिलाषेण कृतप्रवेशाऽभूत्। अस्याः पूर्वमपि बह्व्यः संस्कृतय एतदभिलाषेणैवात्रागताः, किन्तु तासां साम्राज्याभिलाषो दूरे तिष्ठतु, ताः स्वकीयं स्वरूपमेव भारतीयसंस्कृतौ विलापयामासुः। तद्विपरीतैषा संस्कृतिरासीत्। अनया तदाधारभूतसाहित्यस्य तन्मूलसिद्धान्तानां चोच्छेदः समारब्धः। नहि भारतीया संस्कृतिरितरसंस्कृतिवद् दुर्बलप्राणा, तस्या मूलानि सुदूरं प्ररूढान्यासन्। उभयोः संस्कृत्योर्बहुकालं द्वन्द्वः समजायत। अन्ते च विदेशीयया संस्कृत्यावगतं यन्नहि भारतीया संस्कृतिः सर्वथोन्मूलयितुं शक्येति। परिणामत उभयोर्विरोधः शनैः शनैरल्पीभूवः। सन्तसाहित्यस्य सूफीसाहित्यस्य च सृष्टिरुभयोरेकीकरणाय कृतप्रयत्नाऽभूत्। यद्यपि मध्ये मध्ये विरोधपक्षः कृतोन्नतशिरस्को दृश्यते स्म, तथापि स सदा दुर्बलशक्तिक एव सिद्धोऽभूत्। एषा संक्रमणपरम्परा प्रचलन्त्येवासीत्। उभयोः कटुतावर्धिका विभिन्नताः कालक्रमेण क्षीणीभवन्त्य आसन्। नासीत् स समयोऽतिदूरं यदैतयोर्विरुद्धस्वभावयोः संस्कृत्योरभिनवमेकं रूपमेव जगति संदृश्येत, एतस्मिन्नेव काले पावनेऽस्मिन् कार्ये विघ्नरूपेण यूरोपीयाणामत्र भारते प्रवेशोऽजायत।

भारतं विजिगीषमाणानां यूरोपीयाणां परस्परकलहे ब्रिटिशजनानां विजयोऽभूत् । तेषामत्र साम्राज्यं प्रादुरास । तत्स्थिरीकरणार्थं हिन्दू-मुसलमानयोः परस्परं विग्रह एव परमं साधनमासीत् । उभावेतौ कलहान्तरितौ कृत्वा ब्रिटिशजनाः स्वकीयं साम्राज्यं रक्षन्तः स्वकीयसाहित्यप्रसारद्वारा संस्कृतेरपि प्रसारं कुर्वन्त आसन् । आदिवासिनीसु पर्वतीयासु वनस्थासु हिन्दूसमाजदृष्ट्या निम्नासु च जातिषु प्राचीनसंस्कृतौ विरागोत्पादपूर्वकं स्वसंस्कृतिप्रचारमकुर्वन्नेते । अनेन प्रचारेण समाजे निम्नजातीनां का कथा बहव उच्चशिक्षादीक्षिताः कुलीना अपि नूतनसंस्कृतिचाकचिक्यचमत्कृतचक्षुषः सम्पन्नाः । परत्वेतस्मिन्नेव काले महात्मनो गांधिन आविर्भावः समजायत, तत्प्रसादेन एषा नः प्रत्नापि चिरनूतना भारतीया संस्कृतिः स्वकीयां स्वभावगभीरां धारामपहायेतस्ततो न विचलिता ।

इत्थं वयं पश्यामो यदितिहासारम्भकालादारभ्याद्यावधि आस्माकीनया संस्कृत्या कतिकतिविधानि परिवर्तनान्यङ्गीकृतानि । सर्वेषां देशानामितिहासेष्वीदृशान्येव परिवर्तनानि संजातानि । इतिहासारम्भे विभिन्नानां संस्कृतीनां प्रादुर्भावः समजायत । किन्त्वधुना तिस्र एव संस्कृतयः प्रामुख्येण वर्तन्ते । अन्यासां संस्कृतीनामास्वेव यथायथमन्तर्भावो मन्तव्यः । ताश्च पाश्चात्यसंस्कृतिः, मध्यपूर्वसंस्कृतिः, प्राच्यसंस्कृतिश्च । यद्यपि आधुनिकराजनीतौ धर्मस्य न तादृशः प्रभावस्तथापि संस्कृतावधुनापि तस्यैव प्रावल्यं विद्यते । यदा राजनीतौ धर्मः (संप्रदायवादः) शून्यं स्थानं लभेत, एकस्य विश्वधर्मस्य च प्रतिष्ठा स्यात्तदैव विश्वसंस्कृतेरपि कल्पना साकारा भवितुमर्हति ।

सर्वेषु धर्मेषु कतिपये उच्चसिद्धान्ताः सन्ति, ये हि प्रायः सर्वत्र समाना एव । सर्वाणि धर्मपुस्तकानि जनजीवनोन्नतिकारकान् समाजव्यवस्थापकानेतान् समानरूपेण प्रशंसन्ति । भारतीयदार्शनिकैः सर्वदर्शनसमन्वयः सर्वधर्मसमन्वयश्चाकारि । एतदाधारेणैव यदि विश्वधर्मसमन्वयः क्रियेत तर्हि विश्वसंस्कृतेराधारभूतं साहित्यं सृज्येत । महात्मना गांधिना एतदर्थं प्रयत्नोऽकारि । तस्मिंस्तेन बाहुल्येन साफल्यमाप्तम् । विश्वसंस्कृतेर्बीजं तेनोर्वरायामाधुनिकभावभूमौ निक्षिप्तम्, तत्परिपोषणार्थं विशालस्य साहित्यस्य च सृष्टिस्तेन कृता । तस्याङ्कुरणपल्लवीकरणयोरेष कालः । विश्वस्य मनीषिभिः संभूयैतत्कर्म सम्पादनीयम् ।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

मनुस्मृतेरस्य श्लोकस्य श्रवणेन वयं पुलकिता भवामः, किन्तु साम्प्रतं वयं नेदं साहङ्कारमुद्घोषयितुं क्षमाः। विश्वस्य प्रत्येकं धर्मवेत्ता इत्थमेवोद्घोषयितुं समर्थः, परमनेन शान्तेः प्रेम्णश्च स्थाने अशान्तेर्द्वेषस्य च सृष्टिरेव भवेत्। एतावदेव वक्तुं शक्यते यत्सत्यामप्येकस्यां विश्वसंस्कृतिरचनायामस्माभिः स्वकीयं स्वरूपं नात्यधिकं त्यज्येत; यतो ह्यास्माकीनायां संस्कृतौ विश्वसंस्कृतिबीजानि मूलरूपेणैवावस्थितानि सन्ति—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥

(ईशावास्योपनिषत्, १)

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥

अस्माकमेव ऋषीणामेतानि वचनानि।

वयमन्येभ्योऽपि गुणान् ग्रहीतुं न कदापि विमुखीभवामः, अपि तु तानपि स्तुवीमहि—

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत् तेऽपि पूज्यन्ते किं पुनर्ब्रह्मविद्द्विजाः॥

इति हि वराहमिहिरवचनम्। पूर्वमीमांसायां पिकनेमाधिकरणे शाबरभाष्ये—"अभियुक्तराः पक्षिणां पोषणे बन्धने च म्लेच्छाः" इत्यादिना म्लेच्छप्रयुक्तशब्दानामपि प्रामाण्यमङ्गीकृतम्।

अस्मदीयायां संस्कृतौ यतो विश्वसंस्कृतिबीजानि स्वभावत एवावस्थितानि, अतस्तदर्थमस्माभिरेव प्रथमं प्रयत्नो विधेयः। अस्मिन् युगे वैदिकसंस्कृतेरन्यस्या वा कस्याश्चित् प्राचीनायाः संस्कृतेरावर्तनस्य चर्चा न युक्तिसहा। वयं भारतराष्ट्रस्य सेनायां धनुर्बाणखड्गपरश्वादीनां प्राचीनानामेव शस्त्रादीनां व्यवहारो भवतु न त्वाधुनिकास्त्रशस्त्रादीनामिति न कथयामः, प्राचीनां भाषां न वदामः, प्राचीनां ब्राह्मीं लिपिं न लिखामः, प्राचीनां वेषभूषां न धारयामः, किं बहुना, "वेदानां सामवेदोऽस्मि" इति भगवदुक्तस्य वेदेषु प्रधानतमस्य सामवेदस्यापि गानपद्धतिं विस्मृतवन्तः। सर्वाण्येतान्यस्माभिस्त्यक्तानि विस्मृतानि, कालक्रमेण परिवर्तितस्वरूपाणां तेषामङ्गीकारश्च कृतः। कथं तर्हि केवलं संस्कृत्यै अस्माभिराग्रहः क्रियेत ? असंभवकल्पनेयम्, नहि नद्याः प्रवाहस्तदुद्गमस्थान एव परावर्तितुं शक्यः।

स तु स्वभावत एव समुद्राभिमुखं प्रवहिष्यति। सर्वेषां देशानां सर्वा नद्योऽन्ततः समुद्रमधिगच्छन्ति, तदाकारेण च परिणमन्ते। किमित्थमेव सर्वासां संस्कृतितरङ्गिणीनामेकस्मिन् विश्वसंस्कृतिसागरे समावेशो न भवेत् ?

"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्" इति कालिदासोक्तिमनुसृत्य "उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत", "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः", "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इति श्रुत्याद्युपदेशानुसारं विश्वसंस्कृतिस्थापनाय बद्धपरिकरैरस्माभिर्भवितव्यम्। एष एव भारतीयसंस्कृतेः शोभनो विनियोगः। विश्वसंस्कृतिस्थापनानन्तरमेव संयुक्तराष्ट्रसंघस्य विश्वशासनस्य वा सुदृढा स्थापना भविष्यति। अन्यथाऽद्यतनीनसंयुक्तराष्ट्रसंघवदेताः संस्थाः परस्परं कलहायमानानां राष्ट्राणां वाग्युद्धस्थलीमात्रं सम्पत्स्यन्ते॥

---

# भारोत्थापनयन्त्रनिर्माणविधिः

देवीसिंहमहोपतिविरचितः

# विषयानुक्रमणिका

# प्राक्कथनम्

भारोत्थापनयन्त्रनिर्माणविधिनामाऽयं ग्रन्थो बीकानेरनगरस्य 'अनूप संस्कृत लाइब्रेरी' संज्ञके राजकीये ग्रन्थालये संरक्षितो विद्यते। १९४९ ई० वत्सरे राजस्थानस्य यात्रायां स्वकीयायामस्य ग्रन्थस्य हस्तलेखं तत्राहमपश्यम्। तत्रास्य हस्तलेखस्य संख्या ३८४९ अङ्किता वर्तते। अस्य ग्रन्थस्य प्रकाशनमहमिच्छामीति तस्य ग्रन्थालयस्य तत्कालीनमध्यक्षं श्रीमाधवकृष्णशर्म-एम०ए०-ए०एम०लिट्०महोदयं स्वाभिप्रायं व्यज्ञपयम्। एष महानुभावोऽस्य ग्रन्थस्य स्वच्छां प्रतिलिपिं विरचय्य मन्निकटं प्रेष्य च मां भृशमनुगृहीतवान्। तत्र हस्तलेखे यन्त्राणां रेखाचित्राण्यप्युट्टङ्कितान्यासन्, तेषां प्रतिलिपिरपि प्रेषिता तेन महानुभावेन। अस्य ग्रन्थस्य चर्चा मया 'सारस्वती सुषमा'-सहसंपादकस्य श्रीव्रजवल्लभद्विवेदस्य समक्षं विहिता। ग्रन्थस्य प्रतिलिपिमिमामवलोक्य तेनास्य प्रकाशनेच्छा व्यक्तीकृता सारस्वत्यां सुषमायाम्। तदनन्तरं तेन मुद्रणार्थं स्वयं प्रतिलिपिरस्य कृता, तत्राङ्कितानां रेखाचित्राणां प्रतिलिपिश्च शोभना कारिता चित्रकारेण।

अस्य ग्रन्थस्य रचयिता कश्चिद् देवीसिंहनामा नृपतिर्विद्यत इति ग्रन्थारम्भीयश्लोकतोऽवगम्यते। एष ग्रन्थः पारसीकभाषातो विचित्य सामग्रीं संस्कृतभाषायां निबद्धः। अत एवात्र महूवर-महल्ल-बुगरा-लूलब-अस्फीना-शिकञ्जाप्रभृतय आरव्यभाषायाः पारिभाषिकाः शब्दा अवलोक्यन्ते। ग्रन्थकारस्तेषामदत्त्वा संस्कृतपर्यायान् तांस्तथैवात्र गृहीतवान्। लोके भारोत्थापकाः श्रमजीविनः पारिभाषिकशब्दानेतान् वाग्व्यवहारेषु प्रायुञ्जत, अद्यापि च केषाञ्चिद् व्यवहारो भवति तेषु।

भारते वर्षे भारोत्थापनविधयोऽतिप्राचीनकालतः प्रचलिता आसन्। अशोकेन सम्राजा शतशतवितस्तिपरिमाणवन्त एकेनैव पाषाणखण्डेन निर्मिता विशालाः स्तम्भाः सुदूरस्थानेषु प्रेषिताः। अनेन ज्ञायते तदानीमवश्यं तेषामुत्थापनस्य विशिष्टाभिः पद्धतिभिर्जनाः परिचिता आसन्निति। अनुमीयते यदशोकप्राग्भवस्य चन्द्रगुप्तमौर्यस्यान्येषां भूपतीनां च शासनकाले दुर्गनिर्माणपद्धत्या सह भारोत्थापनयुक्तीनामाविष्कारोऽपि संजात आसीत्। पाणिनिना—"बन्धे च विभाषा" (६।३।१३), "संज्ञायाम्" (३।४।४२), "अधिकरणे बन्धः" (३।४।४१), "नेन्सिद्धबध्नातिषु च" (६।३।१९), "सप्तमी

सिद्धशुष्कपक्वबन्धेष्वकालात्" (६।२।३२) इत्यादिषु सूत्रेषु प्राचीनाः केचन बन्धा उल्लिखिताः। काशिकायां क्रौञ्चबन्ध-मयूरिकाबन्ध-चक्रबन्ध-अट्टलिकाबन्धप्रभृतीनां बन्धानां नामान्युपलभ्यन्ते (बन्धविशेषाणां नामधेयानि—३।४।४१-४२)। साम्प्रतमेषामधिकं विवरणं नोपलभ्यते। पुरा भारोत्थापनविधिनिर्देशका ग्रन्था अपि भवेयुर्नूनम्। विक्रमस्य दशमशताब्द्यां निर्मितेषु खजुराहोदेवालयशिलापट्टेषु दृश्यान्यनेकान्युत्कीर्णानि विद्यन्ते, यत्र भारोत्थापका बहुभारवन्ति शिलाखण्डान्युत्थाप्य प्रचलन्तोऽवालोक्यन्ते। चक्रबन्धस्य युक्तिः प्रायः सैव परिदृश्यते, या ह्यत्र ग्रन्थे बुगराप्रकरण उक्ता, यां चाधुनिका अभियन्तारः (इंजीनियर्स) 'पुलीब्लाक' इति पदेन व्यवहरन्ति, लोके च सैव 'डाला कुप्पी' इति पदेन परिचीयते। आगामिनि कालेऽस्य ग्रन्थस्य टीकाटिप्पण्यादिकमध्ययनं चावश्यकम्। तदैव महूवरलूलबप्रभृतीनामारव्यशब्दानां वास्तविकस्वरूपस्य परिज्ञानमपि क्रियेत। साम्प्रतं तु भारोत्थापनयुक्तिप्रतिपादकः प्रथम एष संस्कृतभाषामयो ग्रन्थो मूलमात्रं पुरातत्त्वानुरागिणां पुरतः समुपस्थाप्यते सारस्वत्या सुषमया।

प्रसङ्गेऽस्मिन् श्रीमाधवकृष्णशर्माणः सप्रमोदमभिनन्द्यन्ते। तैरेव हि ग्रन्थस्यास्य प्रतिलिपिः सुलभीकृता। सारस्वत्याः सुषमायाः प्रधानसम्पादका राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्याः श्रीकुबेरनाथशुक्लमहोदया ग्रन्थस्यास्य प्रकाशने सर्वविधसौविध्यप्रदानेन, व्याकरणप्राध्यापकाः श्रीरघुनाथशर्माणश्च विषमस्थलपाठसंशोधनेनातीवोपकृतवन्त इति तौ प्रति हार्दीं कृतज्ञतां प्रकटयामः। चित्रकारः श्रीरामकृष्णपण्ड्यामहोदयश्च साधुवादैः सभाज्यते, येन प्रतिलिपिगतास्त्रुटीः संमार्ज्य यन्त्राणां ग्रन्थकारसंमतं रूपमुपस्थापितम्। श्रीव्रजवल्लभद्विवेदो विशेषतः साधुवादमर्हति। तस्यैवाध्यवसायेन मनोयोगेन चैष ग्रन्थः प्रकाश्यते।

हिन्दूविश्वविद्यालयः वासुदेवशरणोऽग्रवालः
वाराणसी।

# भारोत्थापनयन्त्रनिर्माणविधिः

## देवीसिंहमहीपतिविरचितः

प्रणम्य परमेशानं देवीसिंहमहीपतिः ।
विधत्ते भारवद्वस्तुचालने सुकरां कृतिम् ॥ १ ॥

कूपादौ पतितस्योर्ध्वमाकर्षादौ सुधी[र्] नरः ।
अभेद्यभेदने चाथोऽनुत्तोलस्य च तोलने ॥ २ ॥

स्तोककेन बलेनापि शक्नुयात् साधितुं यथा ।
रच्यतेऽत्र तथा युक्तिर्यवनैः परिभाषिता ॥ ३ ॥

तद्भाषातः समुद्धृत्य संस्कृतेन विधाय च ।
क्रियते सिंहभूपेन युक्तिरेषा जगद्धिता ॥ ४ ॥

षड्विधं साधनं तत्र तेषां योगचतुष्टयम् ।
गुरुतः शास्त्रतो बु[द्]ध्वा ततः सम्यङ् नियोजयेत् ॥ ५ ॥

महूवरो महल्लश्च बुगरा लूलबस्तथा ।
अस्फीनश्च[ना च] शिकञ्जा च क्रिया चैषां पृथक् पृथक् ॥ ६ ॥

मिलितानामपि तथा यथायोगं विविच्यते ।
महूवरो वृत्तचक्रं प्रान्ते कीलैः सुसंयुतम् ॥ ७ ॥

महल्लो दीर्घकाष्ठादि[र्]बुगरा भ्रमिचक्रकम् ।
लूलबो वर्तुलं काष्ठं कृताङ्कं तु परिभ्रमत् ॥ ८ ॥

अथ केन प्रकारेण कियान् भार उत्तिष्ठति, तदाह—

वल्लीवेष्टनतो वृक्षे यथाङ्कास्तादृगाकृति[ः] ।
महूवरस्य परिधेर्यावतांशेन तद्बिले ॥ ९ ॥

दण्डः प्रविष्टस्तत्संख्यं भारमेकांशयत्नतः ।
समुद्धरेन्नरो धीमान् विज्ञाय गुरुवक्त्रतः ॥ १० ॥

बुगराणां प्रकारेण भारं षष्ट्यधिकं शतम् ।
एकांशस्य प्रयत्नेन तोलयेत्तु विचक्षणः ॥ ११ ॥

लूलबस्य प्रकारेण भारं दशमणात्मकम् ।
मणस्य यत्नतो धीमानुद्धरेत सुधी[र्]नरः ॥ १२ ॥

महूवरद्वययोगे भारं मणसहस्रकम् ।
मणस्योद्धारयत्नेन प्रोद्धरेत्तु सुबुद्धिमान् ॥ १३ ॥

बुगराणां तु दशकं संयोज्य प्रयतो नरः ।
भार[रं] सहस्रसंख्याकं द्विशतांशेन चोद्धरेत् ॥ १४ ॥

बेरमत्रययोगे तु भारं दशसहस्रकम् ।
सहस्रांशप्रयत्नेन तोलयेन्मतिमान्नरः ॥ १५ ॥

महूवरद्वयं चैव बेरमेण तु संयुतम् ।
भारं दशसहस्रांशमंशैः पञ्चभिरुद्धरेत् ॥ १६ ॥

महूवरत्रयं चैव लूलबेन तु संयुतम् ।
भारं चायुतसंख्याकमंशद्वितययत्नतः ॥ १७ ॥

उद्धरेत सुधीर्बुद्ध्वा गुरुशास्त्रानुसारतः ।
महूवरं लूलबं च बुगरां बेरमं तथा ॥ १८ ॥

संयोज्यायुतसंख्याकं भारमेकांशयत्नतः ।
समुद्धरेन्नरो धीमान् शिक्षितो यो गुरोर्मुखात् ॥ १९ ॥

अथ महूवरेण नीचस्थभारवद्वस्तुन ऊर्ध्वाकर्षणप्रकारः—

सरलं सुदृढं स्तम्भद्वयं भूमौ निखातयेत् ।
वस्तुपार्श्वे चोभयतः स्वाभीष्टस्थानसंमितम् ॥ २० ॥

स्तम्भयोश्च बिलं कार्यं समस्तूत्र[सूत्रं] तयोद्व[र्द्वं]योः ।
तिर्यग्दण्डं तत्र दद्यात् सूक्ष्माग्रं भागयोर्द्वयोः ॥ २१ ॥

सुदृढं भारसहनं तस्य चैकत्र भागके ।
चतुर्द्धारे न्यसेच्चक्रं चतुर्द्धारबिलान्वितम् ॥ २२ ॥

चक्रनेमौ करग्राह्यान् कीलान् दद्यान्निजेच्छया ।
चक्रस्य केन्द्रस्थानात्तु यावत् प्रातं[प्रान्तं] तु मानयेत् ॥ २३ ॥

यावतांशेन दण्डस्तु प्रविशेच्चक्रकेन्द्रकम् ।
तावद्गुणमितं भारमेकांशेन समुद्धरेत् ॥ २४ ॥



महूवरः



मंहल्ल



बुगरा



शिकञ्जा



बुगराणां योगः

दण्डस्यापरभागे च दृढ[ढां] रज्जुं विबन्धयेत् ।
तस्याश्चापरभागेन भारवद्वस्तु बन्धयेत् ॥ २५ ॥

ततश्चक्रभ्रामणेन दण्डस्तु परिवर्तते ।
दण्डं यथा यथा रज्जुर्वेष्टते तु तथा तथा ॥ २६ ॥

ऊर्ध्वमायाति हि गुरुवस्तु स्वल्पप्रयत्नतः ।
महूवरस्य सर्वत्र युक्तिरेषैव कीर्तिता ॥ २७ ॥

अथ महल्लप्रकारः—

लम्बायमानं सरलं सुदृढं काष्ठदण्डकम् ।
आयसं वा समानीय वस्तुभारानुसारतः ॥ २८ ॥

अंशान् दण्डे कल्पयित्वा तत्राधारं निवेशयेत् ।
यत्संख्ये स्थित आधारस्तावत्संख्यबलेन च ॥ २९ ॥

सर्वमुत्तिष्ठते वस्तु क्रियया चैतया स्फुटम् ।
महल्लस्य प्रकारोऽयं सर्वत्र परिकीर्तितः ॥ ३० ॥

अथ बुगराप्रकारः—

स्तम्भद्वयं तु सुदृढं स्वाभीष्टस्थलसंमितम् ।
निखातव्यं तयोर्मूर्ध्नि तिर्यक्काष्ठं तु दापयेत् ॥ ३१ ॥

काष्ठमध्ये निखातव्यं चक्रद्वयमधोमुखम् ।
निम्ननेमि स्वविस्तारात् त्रिगुणव्याससंयुजा ॥ ३२ ॥

कीलेनाग्रे द्विवक्त्रेण चक्रात् त्रिगुणितेन वै ।
कीलान्तरेण विधृतं विभ्रमत् सुदृढ धिया ॥ ३३ ॥

अथापरं स्तम्भमूले तिर्यक्काष्ठं निधापयेत् ।
पूर्वोक्तचक्रसदृशं चक्रद्वितयकं पुनः ॥ ३४ ॥

ऊर्ध्ववक्त्रं निदध्यात्तु तत्काष्ठे भारमासजेत् ।
दृढां रज्जुं समानीय तदै[दे]कं पल्लवं ततः ॥ ३५ ॥

स्तम्भस्य कस्यचिन्मूर्ध्नि बन्धयी[ये]त विचक्षणः ।
अपरं पल्लवं तस्या अधश्चक्रवलेन च ॥ ३६ ॥

निष्कास्योपरिचक्रस्य कर्षयेदूर्ध्वभागतः ।
पुनश्चाधस्थचक्रस्य तलभागेन कर्षयेत् ॥ ३७ ॥
पुनश्चोर्ध्वस्थचक्रस्य कर्षयेदूर्ध्वभागतः ।
तमेव पल्लवं कश्चिदपरं स्तम्भमूलगः ॥ ३८ ॥
शनैः शनैः कर्षयी[ये]त वस्तूर्ध्वमुपगच्छति ।

अथ शिकञ्जाप्रकारः—

स्तम्भद्वयं दृढं भूमौ निखातव्यं तयोः पुनः ॥ ३९ ॥
शिरस्येकं तिरश्चीनं काष्ठं दद्यात् सुविस्तृतम् ।
मूलेऽपि स्तम्भयोर्दद्यादाधारार्थं शिलादिकम् ॥ ४० ॥
शिकञ्जां तत्र कुर्वीत सूक्ष्माग्रां सूक्ष्ममूलिका[काम्] ।
निम्नैर्गभीरैस्तिर्यग्भिरा[र]ङ्कैश्च परितो युताम् ॥ ४१ ॥
शिरस्तम्भ[म्भं] शिर[ः]काष्ठं भित्त्वा यायात्तदीयकम् ।
तत्रापि कीलकं तिर्यग् भ्रामणार्थं निधापयेत् ॥ ४२ ॥
चतुरस्रं ततश्चैकं काष्ठं मध्ये तु छिद्रितम् ।
छिद्रस्यान्तरभागे तु कृताङ्कां[ङ्का] शिकजा[ञ्जा] यथा ॥ ४३ ॥
तन्मध्ये शिकजां[ञ्जां] क्षिप्त्वा तत आधारके न्यसेत् ।
चतुष्ककाष्ठकोणात्तु स्तम्भमस्तककोणगम् ॥ ४४ ॥
तिर्यक्काष्ठं प्रदह्या[द्या]त्तु काष्ठकोणे तु कीलयेत् ।
स्तम्भकोणे बिलं कृत्वा तेन मार्गेण काष्ठकम् ॥ ४५ ॥
ऊर्ध्वं यथा विनिर्गच्छेत् तथा कार्यं धिया स्वया ।
तस्मिन् काष्ठे मध्यभागे रज्जुमाबन्धये[द्] दृढाम् ॥ ४६ ॥
तया भारं समाब[द्]ध्य शिकञ्जां परिवर्तयेत् ।
तस्य भ्रमेण तत्प्रोत काष्ठमूर्ध्वं व्रजेद्यथा ॥ ४७ ॥
तथा गुरुतरं वस्तु प्रयात्यूर्ध्वं सुखेन वै ।

अथ मह्रूवरद्वययोगेन गुरुवस्तूत्थापनप्रकारः—

मह्रूवरद्वययोगे गुरुवस्तुसमुन्नयः ॥ ४८ ॥
प्रोच्यते विनियोगोऽस्य गुरोर्बु[द्]ध्वा विधीयताम् ।
दृढं स्तम्भद्वयं भूमौ स्वाभीष्टायां निखाद[त]येत् ॥ ४९ ॥

काष्ठमेकं तयोर्मूर्ध्नि दत्त्वा द्वाराकृतिं चरेत् ।
त्रीणि त्रीणि तु छिद्राणि स्तम्भयोः समसूत्रतः ॥ ५० ॥

पारावाराणि कुर्वीत तेषु दण्डान्निधापयेत् ।
सूक्ष्माग्रान् सरलान् गोलान् भ्रमतो भारसाहनान् ॥ ५१ ॥

अधोदण्डस्य च शिखां स्तम्भबाह्यविनिर्गताम् ।
रचयेत् तत्र कीलं तु दद्यात् कर्तनयन्त्रवत् ॥ ५२ ॥



महूवरद्वयम्



महूवरमहल्लयोगः



अस्फीना



महूवरलूलबयोगः



लूलबमहूवरबुगरामहल्लानां योगः

दण्डस्यापरभागे तु चक्रं च चतुरस्रकम् ।
ककुभद्रुफलाकारनेमिभागं निवेशयेत् ॥ ५३ ॥

ततस्तदूर्ध्वदड[ण्ड]स्य तस्मिन् भागे सुवर्तुलम् ।
ककुभद्रुफलाकारप्रातं[प्रान्तं] सुदृढमर्पयेत् ॥ ५४ ॥

पूर्वोक्तचतुरस्रस्य वर्तुलस्यास्य वै मिथः ।
यथा संघटिता आरा[स्] तथा युक्तिर्विधीयताम् ॥ ५५ ॥

ततो मध्यस्थदण्डस्यापरभागे चतुष्किकाम् ।
पूर्वोक्तलक्षणां न्यस्य तदूर्ध्वे दण्डके पुनः ॥ ५६ ॥

पूर्ववद्वर्तुलां[लं] चक्रं विन्यसेत् पूर्ववत् तथा ।
तस्यैवापरभागे तु बध्नीयाद् रज्जुमुत्तमाम् ॥ ५७ ॥

तस्या अपरभागेन बध्नीय[या]द् वस्तु भारवत् ।
ततश्चाधस्थदण्डस्य शिखायां विनिवेशितम् ॥ ५८ ॥

कीलं कश्चिद् भ्रामयी[ये]त तेन भ्राम्येच्चतुष्किका ।
तया तु भ्राम्यते चक्रं वर्तुलं स्वाग्रसंयुतम् ॥ ५९ ॥

तेनापि स्वाश्रयगता भ्राम्यते तु चतुष्किका ।
तया तदूर्ध्वगं चक्रं वर्तुलं परिवर्त्यते ॥ ६० ॥

तेन तु स्वाश्रयो दण्डो भ्राम्यते तत्र रज्जुका ।
यथा यथा वेष्टयते वस्तूत्तिष्ठेत् तथा तथा ॥ ६१ ॥

सर्वं गुरुमुखाद् बु[द्]ध्वा प्रयोगं रचयेत् सुधी[:] ।

अथ महल्लेन महल्लयोर्बुंगराभिर्बुंगराणां योगमाह—

महल्लेन महल्लं च तेनाप्यन्यमहल्लकम् ॥ ६२ ॥

संयोज्य भारवद् वस्तु तोलयेदल्पयत्नतः ।
बुगराणामनेकेषां संयोगेन परिस्फुटम् ॥ ६३ ॥

गुरुवस्तूत्थापनं तु विद्वद्भिः समुदाहृतम् ।

अथ महूवरमहल्लयोगप्रकारः—

महूवरमहल्लाभ्यां योगेन सुकरा क्रिया ।
भारवद्वस्तुसंतोलचालनादौ निगद्यते ॥ ६४ ॥

स्तम्भद्वयं दृढं भूमौ सरलाग्रं निखातयेत् ।
द्वे द्वे छिद्रे प्रकर्तव्ये तयोस्तु समसूत्रके ॥ ६५ ॥

द्वयोर्दण्डद्वयं सूक्ष्मसरलाग्रं निवेशयेत् ।
अधोदण्डस्यैकभागे चक्रं मह्रूवरं न्यसेत् ॥ ६६ ॥

प्रान्ते कीलैः करग्राह्यैर्युक्तं भ्रमिकरं च तत् ।
तस्यैवापरभागे तु चतुःखण्डी[ण्डीं] निवेशयेत् ॥ ६७ ॥

ततश्चोपरिदण्डे तु तद्भागे वृत्तचक्रकम् ।
समासजेत् प्रान्तभागे कृतनिम्नाङ्ककं दृढम् ॥ ६८ ॥

वर्तुलं च चतुःखण्डीसमिश्राङ्कं तथा चरेत् ।
चतुःखण्डी भ्राम्यमाणा वर्तुलं भ्रामयेद् यथा ॥ ६९ ॥

वर्तुलापरभागस्थस्तम्भमूर्धसमीपतः ।
महल्लसंज्ञकं काष्ठं चञ्चलं परिलम्बयेत् ॥ ७० ॥

तस्य यः पुष्कलो भागस्तच्छिरोवस्तुनस्त्वधः ।
निवेश्य तदधस्तात् तु दृढाधारं निवेशयेत् ॥ ७१ ॥

तत्काष्ठापरभागेऽल्पे दृढां रज्जुं विबन्धयेत् ।
अपरः पल्लवस्तस्या वर्तुलाश्रयदण्डके ॥ ७२ ॥

परभागे बन्धयो[ये]त विचार्य्यं निपुणं सुधीः ।
ततो मह्रूवरं चक्रं कीलेषु परिगृह्य च ॥ ७३ ॥

भ्रामये[त्] तद्भ्रमेणैव चतुःखण्डी परिभ्रमेत् ।
चतुःखण्डीभ्रमेणैव वर्तुलं तूर्ध्वगं भ्रमेत् ॥ ७४ ॥

ततस्तदाश्रितं दण्डं रज्जुर्वेष्टयते यथा ।
तथा तथोर्ध्वमायाति महल्लाग्रेण वस्तु तत् ॥ ७५ ॥

एवंप्रकारो योगोऽयं बोद्धव्यो गुरुवक्त्रतः ।
ततः प्रयोगः कर्तव्यो धिया विमलया स्वया ॥ ७६ ॥

अथ मह्रूवरलूलं[ल]बयोगप्रकारः—

मह्रूवरलूलबयो[र्]योगेन सुकरा क्रिया ।
गुरुवस्तूत्थापने तु प्रोच्यते सिंहभूभुजा ॥ ७७ ॥
स्तम्भद्वयं तु सुदृढमन्योन्याभिमुखं खनेत् ।
तिर्यक्काष्ठं तयोर्मूर्ध्नि दद्यात्तु परिणावह[णाह]वत् ॥ ७८ ॥

उभयो[:] स्तम्भयोस्त्रीणि त्रीणि छिद्राणि कारयेत् ।
उपर्यधोविभागेन तेषु दण्डान् विनिक्षिपेत् ॥ ७९ ॥

पूर्वोक्तसदृशान् सारानायसान् वा यथोचितम् ।
अधोदण्डस्यैकभागे पूर्वोक्तं वृत्तचक्रकम् ॥ ८० ॥

विन्यसेदर्ज्जुनफलसदृशप्रान्तभागकम् ।
तस्य दण्डस्यान्यभागे चतुःखण्डी[ण्डीं] तु पूर्ववत् ॥ ८१ ॥

निधाय मध्यमे दण्डे पूर्ववद्वर्तुलं न्यसेत् ।
चतुःखण्ड्या वर्तुलस्य यथा चान्योन्यमिश्रिताः ॥ ८२ ॥

आरा भवेयुः कार्यो वै संनिवेशस्तथा धिया ।
तस्यैवापरभागे तु चतुःखण्डीं निवेशयेत् ॥ ८३ ॥

ततस्तदूर्ध्वगे दण्डे वर्तुलं पूर्वव[द्] दृढम् ।
चक्रं न्यसेच्चतुःखण्डया पूर्ववन्मिश्रितारकम् ॥ ८४ ॥

तस्य दण्डस्यापरेंऽशे दृढां रज्जुं विलम्बयेत् ।
तस्याः परेण भागेन भारवद् वस्तु बन्धयेत् ॥ ८५ ॥

अधोदण्डस्थचक्रस्य वृत्तस्य समसूत्रकम् ।
वर्तुलं काष्ठमेकं तु मूले सूक्ष्मशिखाग्रकम् ॥ ८६ ॥

ऊर्ध्वाग्रं रोपयेद् भूमौ पाषाणाद्याश्रितं भ्रमत् ।
समन्तमो[तो]ऽर्जुनफलसदृशाङ्कं तु तद्भवेत् ॥ ८७ ॥

अधोदण्डस्थवृत्तारैः समिश्राङ्कं निवेशयेत् ।
तस्योर्ध्वभागः स्तम्भस्थतिर्यक्काष्ठं विभिद्य च ॥ ८८ ॥

बहिः कार्यस्तत्र कीलं तिर्यञ्चभ्रमये न्यसेत् ।
तस्मिन् परिभ्राम्यमाणे भ्रमेच्चक्रं तु वर्तुलम् ॥ ८९ ॥

तत्पुनः स्वाश्रयगतां चतुःखण्डीं तु भ्रामयेत् ।
सा चौ[चो]परितनं वृत्तं तदप्यन्यां चतुष्किकाम् ॥ ९० ॥

सा तूपरितनं वृत्तं भ्रामयेत् तेन तु स्फुटम् ।
भ्राम्यते सा[स्वा]श्रयो दण्डो वेष्टते तत्र रज्जुका ॥ ९१ ॥

यथा यथा तथैवोर्ध्वं सभारं वस्तु याति हि ।
एतद् गुरुमुखाज्ज्ञात्वा मतिमान् संप्रयोजयेत् ॥ ९२ ॥

अथ लूलबमहूवरवुगरामहल्लाणां[नां] योगप्रकारः—

लूलबं तु क्वचित् कुर्यात् तत्संयुक्तं महूवरम् ।
तद्दण्डे बुगरानिष्टरज्ज्वग्रं[ग्रे] परिबन्धयेत् ॥ ९३ ॥

अपरं पल्लवं चास्या महल्लाग्रे विबन्धयेत् ।
महल्लं कुत्रचित् स्तम्भे कीलयेच्चञ्चलं तिरः ॥ ९४ ॥

तस्योपरिशिरो वस्तुतलभागे निवेशयेत् ।
आधारं तदधो दद्यात् कल्पितांशानुसारतः ॥ ९५ ॥

लूलबभ्रमणेनैव भ्रमते(?) तु महूवरम् ।
बुगराणां भ्रमेणैव रज्जुर्दण्डं तु वेष्टयेत् ॥ ९६ ॥

महल्लैकशिरस्तेन नीचं यायाद् यथा यथा ।
तथा तथा परशिरो वस्तु चे[चो]त्थापयत्यलम् ॥ ९७ ॥

अथ[ऽ]स्फीनामाह—

अस्फीना च त्रिकोणा स्यात् पक्वलोहविनिर्मिता ।
कोणाश्च द्विमुखाः कार्याः सम्प्रदायानुसारतः ॥ ९८ ॥

तत्रैककोणं भेद्यादौ निवेश्यापरकोणयोः ।
घातयेन्मुद्गराद्येन विदीर्णं जायते हि तत् ॥ ९९ ॥

( एतावानेव ग्रन्थ उपलब्धः )

# विशिष्टपदसूची

# श्लोकार्धानुक्रमणिका

---

# विचारविप्रुषः

## नवयुगारम्भः

विक्रमस्य दशमशताब्दीं यावदस्य राष्ट्रस्य सर्वाधिकं प्रचलिता लोकमान्या भाषा संस्कृतमासीत्। सुदूरस्थानां राज्यानां परस्परं व्यवहारः प्रायः संस्कृतभाषयैव प्रचलति स्म। तदानीन्तनानां तीर्थयात्रिणामेषैव भाषा प्रधानसहायिकाऽऽसीत्। यतो ह्येषा भाषा लब्धराज्यप्रश्रया जनजीवनेनातीव सम्बद्धा च, अत एव प्रत्येकं प्रवुद्धनागरिकेणास्यामवश्यमेव निपुणता प्राप्यते स्म। राज्यकार्यसञ्चालने तदा संस्कृतज्ञानामेव प्राधान्यमासीत्। अत एव तदानीन्तनं राजनीतिविज्ञानसाहित्यदर्शनसम्बन्धि सम्पूर्णं वाङ्मयमधिकांशतः संस्कृतभाषायामेव निबद्धम्। शिलालेखताम्रलेखमुद्राराज्यशासनपत्रादिषु प्रायः संस्कृतभाषाया एव प्राचुर्यमुपलभ्यते।

भारतं यावत् स्वतन्त्रमासीत् संस्कृतभाषाया एव प्रवाहोऽक्षुण्णोऽध्यतिष्ठत्। मुस्लिमाक्रमणानन्तरमेवास्याः प्रभावोऽक्षैषीत्। संस्कृतस्य स्थाने विदेशीयभाषया राज्यप्रश्रयो गृहीतः। यद्यपि वेदभाष्यकारः सायणाचार्यो बुक्कनृपतेर्महामात्य आसीत्, तथैव साहित्यदर्पणकारो विश्वनाथः सान्धिविग्रहिकरूपेण स्वकीयं परिचयं ददाति, तथापि संस्कृतज्ञानामीदृशः सम्मानो विरल एव सञ्जातः। अत एव तदानीं संस्कृतभाषायां मौलिकग्रन्थानां प्रणयनमत्यल्पमेव सञ्जातम्। अस्या भाषाया उन्मूलनाय तदानीन्तनं शासनं खड्गहस्तमेवासीत्।

अनुकालमेवांग्लानां साम्राज्यमाविरासीत्। अत्रान्तर एव 'सर विलियम जोन्स'महाशयेनाभिज्ञानशाकुन्तलमांग्लभाषायामनूदितम्। शाकुन्तलस्य माधुर्यमास्वाद्य पाश्चात्त्या विद्वांसः संस्कृतस्य भक्ताः समभवन्। ते विश्वस्य प्राचीनतमभाषास्वस्याः स्थानमवधार्य तदध्ययने तत्साहित्यसंरक्षणे च बद्धपरिकराः समजायन्त। किन्तु ते संस्कृतस्य प्राचीनत्वमभिलक्ष्यैवेमान् प्रयत्नान् समचालयन्। अस्या भाषाया अद्यापि भारतीयजनजीवनेन सह यो घनिष्ठः सम्बन्धो विद्यते, अस्य सत्यस्य प्रकाशने आंग्लानां विदेशीया

नीतिर्बाधिकासीत् । अत एव तैः संग्रहालय इव १७९१ तमे ईशवीये वर्षे काश्यामेका संस्कृतपाठशाला समस्थाप्यत, यत्र हि नाम यथाकथञ्चिदस्याः संरक्षणं विधीयेत ।

वर्षशतेभ्य उपेक्षितैषा भाषा मृतप्रायेव सञ्जातासीत् । स्वल्पेनाप्यने-नाश्रयलाभेन तस्यां जीवनसञ्चारः प्रादुरासीत् । अस्मिन्नेवावसरे बहुभिः पाश्चात्त्यविद्वद्भिरमरभारत्याः सेवायां स्वकीयं जीवनमर्पितम् । तदुन्नत्यै अस्याः पाठशालाया अध्यापकैरध्यक्षैश्च बहु प्रयतितम्, अचिरादेव चास्य महाविद्यालयस्य यशो विदेशेष्वपि व्याप्रियत । अत्रत्या परीक्षाप्रणाली सम्पूर्णे देशे समादृताऽभवत् । परीक्षाविरोधिभिः प्राचीनविद्वद्भिरप्यस्याः परीक्षायाः सर्वाधिकं प्रामाण्यमूरीकृतम् । फलतो देशस्य चतुर्दिग्भ्यः परीक्षार्थिनोऽत्र समागच्छन् । अत्रत्यं पाठ्यक्रममध्यापयितुमन्यराज्येष्वपि पाठशालाः स्थापिताः । पश्चाद् बिहारबङ्गालपञ्जाबराजस्थानादिषु यद्यपि स्वतन्त्राः परीक्षासंस्थाः स्थापितास्तथाप्येतास्वस्य महाविद्यालयस्य पाठ्यक्रम एव मानदण्डीकृतः । एवं सत्यपि तासां परीक्षा विद्वत्सु नातीव लब्धप्रसराः । अस्य महाविद्यालयस्यास्मिन् गौरवे स्वनामधन्यानां डा० वैलेन्टाइन–डा० ग्रिफिथ–डा० वेनिस–म० म० श्रीगङ्गाधरशास्त्रि–म० म० श्रीशिवकुमारशास्त्रि–म० म० श्रीबापूदेवशास्त्रि–म० म० श्रीसुधाकरद्विवेदि-प्रभृतीनां प्राच्यपाश्चात्त्यविदुषां तप एव निदानम् । तुल्यन्यायेन डा० वेनिस-श्रीरमानाथशास्त्रि–श्रीढुण्ढिराजशास्त्रि–म० म० श्रीसुधाकरद्विवेदि–म० म० श्रीविन्ध्येश्वरीप्रसादद्विवेदिनां विशेषतो म० म० श्रीनारायणशास्त्रि-खिस्तेमहोदयानामनवरतश्रमेणास्य महाविद्यालयस्य सरस्वतीभवनाख्यो ग्रन्थालयोऽप्यपूर्वा राष्ट्रसम्पत्तिः समगण्यत ।

इमे प्रयत्ना गीर्वाणवाण्या अभ्युदयस्य लक्षणान्यासन् । किन्तु शिक्षा-विषयिणी आंग्लानां या नीतिरासीत्तया संस्कृतज्ञानामाजीविका रुद्धद्वारा सञ्जाता । परिणामतोऽस्याः प्रसारोऽपि समवरुद्धः । किं बहुना, आंग्ल-विद्यालयेषु संस्कृतज्ञाश्च हास्यरसालम्बनीभूताः ।

ईदृश्यामेव विषमायां स्थितौ स्वतन्त्रताया अरुणोदय इव विभिन्न-प्रान्तेषु कांग्रेसमन्त्रिमण्डलस्य प्रकाशोऽद्योतिष्ट । संस्कृतज्ञानां सौभाग्येन काश्याः प्रतिष्ठितनागरिकाः संस्कृतानुरागिणः प्राच्यप्रतीच्योभयदर्शन-निष्णाता माननीयाः श्रीसम्पूर्णानन्दमहोदया अस्य राज्यस्य शिक्षामन्त्रित्वं

स्वीचक्रुः। संस्कृतज्ञानामेषा दीनहीनदशा एषां हृदयमसह्यशल्यमिवातुदत्। भारते एक एवायं मनीषी येन सर्वप्रथमं संस्कृतस्य विपन्नदशापनोदनाय प्रतिज्ञातम्। तदनु श्रद्धेयडा०भगवद्दासमहोदयानां श्रीयज्ञनारायणोपाध्यायानां चाध्यक्ष्ये संस्कृतशिक्षायां सामयिकपरिवर्तनकामनया क्रमेण द्वे समिती स्थापिते। एताभ्यां निर्द्धारितोपायानां कार्यान्वितेः पूर्वमेव कांग्रेस-मन्त्रिमण्डलेन शासनं परित्यक्तम्। तदनन्तरं गृहीतसत्ताकेनाधिकारिवर्गेण नैता उपस्तुतयोऽस्वीकृताः।

१९४६ तमे ईशवीये वर्षे सम्पूर्णे देशे सार्वजनिकनिर्वाचनमभूत्। अस्माकं प्रान्ते पुनरपि कांग्रेसमन्त्रिमण्डलस्य स्थापना समजनि। माननीयाः श्रीसम्पूर्णानन्दमहोदया यथापूर्वं शिक्षामन्त्रित्वमङ्गीकृत्य पूर्वावशिष्टं कार्यजातं पूरयितुं समुद्यता अभूवन्। पूर्वस्थापितयोर्द्वयोः समित्योरुपस्तुतीरुद्धृत्य कार्यमारब्धम्। १९४६ तमे ईशवीये वर्षेऽस्य महाविद्यालयस्य प्रथम उपाधिवितरणोत्सवः प्रारब्धः। द्वितीयोपाधिवितरणोत्सवावसरे माननीयैः श्रीसम्पूर्णानन्दमहाभागैः स्वीयकरकमलाभ्यामनुसन्धानमन्दिर-मुद्घाटितम्। तदैवात्र संग्रहालयस्याप्येकस्य स्थापना समजनि। अनुकालमेव सरस्वतीभवनपुस्तकालयस्य सुव्यवस्थितकार्यसञ्चालनार्थं नवीनानि नव स्थानान्याविष्कृतानि। अस्य महाविद्यालयस्यान्यैरांग्लमहाविद्यालयैः पदप्रतिष्ठायां समानतामानेतुमत्रत्याध्यापकप्रधानाध्यापकानां पुस्तकालयाध्यक्षस्य च नवीनो वेतनक्रम उद्घोषितः। १९४८ ईशवीयतः संस्कृताध्यापकानामध्यापनकलायां नैपुण्याधिगमाय पुनःशिक्षणसत्रस्य (ट्रेनिंग) व्यवस्था कृता। पूर्वोक्तसमित्योर्यदा स्थापना कृता तस्यामधुनातन्यां च परिस्थितौ महदन्तरं सञ्जातमासीत्। अतस्तदुपस्तुतीनां युक्तायुक्तत्वविचारायैकमधिवेशनमायोजितम्, यस्मिन्नुत्तरप्रदेशीयशिक्षाधिकारिणः पाठशालाव्यवस्थापकाः प्रसिद्धा विद्वांसश्च समवेता आसन्। अस्योद्घाटनं स्वयं शिक्षामन्त्रिभिरेव विहितम्। उत्तरप्रदेशीयशिक्षासञ्चालकाश्चास्य सम्मेलनस्य संयोजका आसन्।

शिक्षामन्त्रिमहोदयानामिमे प्रयत्नाः प्रान्तव्यापिन एवासन्, ते च संस्कृतभाषायाः समभ्युदयाय नालम्। आसीदियमखिलभारतीया समस्या। तस्याः समाधानेनाप्यखिलभारतीयेनैव भाव्यम्। एतां दृष्टिमवष्टभ्य उद्भटशिक्षाशास्त्रिणामाचार्यनरेन्द्रदेवमहोदयानां सभापतित्वे, डा० इबादुर्रहमानखाँमहोदयानां संयोजकत्वे, अखिलभारतीयसंस्कृतपरीक्षासन्तुलनपरिषद आयोजनं

विहितम्। अस्यां विभिन्नराज्यानां शिक्षासंस्थाभ्यो द्वाविंशतिप्रतिनिधयो निमन्त्रिता आसन्। अस्याः परिषदो निर्णयानभिलक्ष्यैवोत्तरप्रदेशीयशासनेनास्य महाविद्यालयस्य नियमावल्यां पाठ्यक्रमे चाचिरादेवावश्यकानि संशोधनानि परिवर्धनानि च स्वीकृतानि। साम्प्रतमेव प्रथमापरीक्षाया जूनियरहाईस्कूलसमकक्षतोद्घोषिता। तेन तत्प्रयुक्ताः सर्वा अपि सुविधाः प्रथमापरीक्षोत्तीर्णच्छात्रेभ्योऽञ्जसैवोपलब्धाः। इत्थमेव पूर्वोत्तरमध्यमाशास्त्रिपरीक्षाश्च हाईस्कूल–इन्टरमीडियट–बी० ए०–समाना भविष्यन्तीति च शीघ्रमेवोद्घोषयिष्यते।

१९४८ तमे ईशवीये वर्षे शिक्षामन्त्रिमहोदया अमेरिकायामायोजिते अन्ताराष्ट्रीयश्रमसम्मेलने भारतस्य प्रातिनिध्यमङ्गीकृत्य समगच्छन्। तत्रत्या वेधशाला दृष्ट्वा ते भृशमाकृष्टाः। तदाप्रभृत्येव तेऽस्मिन् महाविद्यालये एकस्याः सर्वसाधनसम्पन्नाया वेधशालाया निर्माणार्थं कृतसङ्कल्पा अभूवन्। तदनुसारमेव वेधशालोपयोगीन्युपकरणानि संगृहीतानि। एकं शक्तिशालि दूरवीक्षणयन्त्रमस्मिन्नेव वर्षे विदेशादानायितम्। हस्तलिखितग्रन्थानां सम्यगुद्धाराय संरक्षणाय च तदुपयोगिनां यन्त्राणां समपेक्षितः संग्रहः सम्पादितः। महाविद्यालयभवनस्य कतिपयोंऽशः सम्पूर्णमुद्यानं च क्वींसकालेजस्य प्रबन्धे आसीत्। तदिदानीमावश्यकता अभिलक्ष्य संस्कृतमहाविद्यालयाय प्रत्यावृत्तम्। महाविद्यालयस्य विस्तारार्थं सरस्वतीभवनस्योत्तरस्यां दिश्यवस्थितं जौनपुरराज्यस्योद्यानमुत्तरप्रदेशीयशासनेन क्रीतम्। छात्रेभ्यश्छात्रावासस्य नवीनः प्रबन्धः कृतः। छात्रेभ्यो महाविद्यालयभवन एव पुस्तकालयस्य व्यवस्था कृता। छात्रेभ्यो विद्वद्भ्यश्च नूतना वृत्तयः पारितोषिकाणि चोद्घोषितानि। नूतनविषयानध्यापयितुम् एम० ए० उपाधिभाजश्चत्वारोऽध्यापका नियुक्ताः। सरस्वतीभवनस्य मुद्रितविभागस्य संवर्धनाय क्वींसकालेजादपेक्षितपुस्तकानां प्राप्तिः स्यादित्याशास्यते। निखिलं विश्वविद्यालयीयकार्यं निर्वहन्नपि नाम्ना तन्न्यूनतां बिभ्रदयं महाविद्यालयः शीघ्रमेव विश्वविद्यालयपदं समेष्यति।

इत्थं संस्कृतस्योन्नतये इमे प्रयत्नाः प्रचलन्ति। एतत्प्रभावेणैव जनतायां संस्कृतं प्रति समादरबुद्धिर्जागर्तितराम्। संस्कृतज्ञानां कृते जीविकाया नवीनानि द्वाराण्युद्घाट्यन्ते। एष संस्कृतसमाजस्य नवयुगारम्भः। स्वकीयोद्योगेनाध्यवसायेन प्रज्ञया चाधुना संस्कृतज्ञाः स्वकीयं सर्वतोमुखीनमुत्कर्षं साधयितुं शक्नुयुः। विश्वस्यते, संस्कृतभाषा पुनः स्वीयप्राक्तनगौरवपीठ-

मधिरुह्य स्वकीयमाधुर्येण लोकानां चेतस्सु अपूर्वरसानन्दसन्दोहमुद्वेल-यिष्यति, संस्कृतजगदेतदर्थं तदुन्नायकेभ्यो हार्दीं कृतज्ञतां विज्ञापयच्च चिरमाभारं प्रदर्शयिष्यति ॥

## संस्कृतविश्वपरिषदः स्थापना

सोमनाथस्य पुनःप्रतिष्ठावसरे भगवतः श्रीकृष्णस्य देहोत्सर्गभूमौ प्रभासपट्टने संस्कृतविश्वपरिषदः स्थापना समजनि। संस्कृतक्षेत्रे कार्यं कुर्वन्तीभिः संस्थाभिः सह सहयोगद्वारा संस्कृतसाहित्यस्य सम्पूर्णे जगति प्रसार एवास्याः परिषदः प्रधानमुद्देश्यम्। वयमस्याः सोल्लासं स्वागतं व्याहरामः।

प्राचीनेन भारतेन निखले जगति विनैव युद्धं प्रेम्णा शान्त्या च सांस्कृतिकी विजयपताका उद्धूलिता। रागद्वेषपरिपूरितमानसे भयशङ्का-कुलेऽभावकृत्याकवलिते आधुनिके जगति साम्प्रतं तस्यैवास्माकं प्राचीनस्य "मा गृधः कस्यस्विद्धनम्", "सर्वेऽत्र सुखिनः सन्तु", "वसुधैव कुटुम्बकम्" इत्याद्युपनिषन्नीतिवाक्यैः प्रतिपादितस्य विश्वबन्धुत्वसिद्धान्तस्य प्रचार आवश्यकः। स च तेषाममूल्यनिधीनां साक्षात्कारेणैव भवितुमर्हतीति तदर्थं संस्कृतवाङ्मयस्य सर्वत्र प्रचारः सौलभ्यं च यथा स्यात्तथा प्रयत्न-सन्तिरेव प्रथमः पन्थाः।

वैदेशिकेषु भारतीयेषु च विश्वविद्यालयेषु स्वतन्त्रासु राजकीयासु च शोधसंस्थासु संस्कृतमधिकृत्याध्ययनाध्यापनक्रमः, वादविवादगोष्ठ्यः, अन्वेषणकार्यम्, प्रकाशनकार्यं चेत्यादीनि कार्यजातानि चिरात् प्रचलन्त्येव।

कालमाहात्म्येनाद्य वयं स्वतन्त्राः स्मः। नवागतस्वातन्त्र्येण सहा-स्माकं नवनवा आशा उल्लासाश्च प्रादुरभूवन्। दशदिक्षु प्राचीनभारतीय-संस्कृतेर्घण्टारवः समश्राव्यत। मनुष्यस्वभावः प्राचीनानुभवैर्लाभमर्जयति, राष्ट्राणाममप्ययमेव क्रमः। राष्ट्रस्य नवनिर्माणमपि अतीताधारशिलाया-मेव भवति। अस्माकं भारतीयसंस्कृतेर्मूलाधारं संस्कृतवाङ्मयमेव। अत एव श्रीमाधवश्रीहरि-अण–श्रीपुरुषोत्तमदासटण्डन–श्रीसम्पूर्णानन्द–श्रीकैलाशनाथकाटजू–श्रीके०एम०मुंशीप्रभृतयः संस्कृतानुरागिणः संस्कृत-स्योन्नतये भूरिशः प्रचारं कार्यं च कुर्वन्ति।

संस्कृतस्याभिवृद्ध्यर्थं सुविचारताया अखिलभारतीययोजनाया बहु प्रयोजनं विद्यते। एतादृश्यामवस्थायां संस्कृतविश्वपरिषदः स्थापनाऽत्यन्तं महत्त्वमादधाति। परमस्याः कार्यप्रणाली कीदृशी भविष्यतीत्यत्रास्माकं महती जिज्ञासा। कस्याश्चित् संस्थायाः स्थापनामात्रेणाऽथवा आकर्षक-नामकरणमात्रेण नहि कठिनतरस्य तदुद्देश्यस्य सिद्धिर्भवितुमर्हति। तदर्थं तु कठिनपरिश्रमस्याविश्रान्तस्योद्योगस्यावश्यकता भवति। संस्कृतस्योन्नतये तस्य सर्वतोमुखविकासाय तु कठिनमध्ययनतपः तपस्यतां तपस्विनां जीवनस्याहुतयोऽपेक्ष्यन्ते। तदैव वर्षशतेभ्य उपेक्षितस्यास्य साहित्यस्य कोऽपि सत्कारः कृतो भवेत्।

वयमत्र संक्षेपेणास्याः परिषदो भाविस्वरूपविषयकान् कानपि विचारान् प्रकटयामः—

स्वकीयनामधेयसार्थक्यायैषा परिषत् सम्पूर्णे पृथ्वीमण्डले भारतीयानां विदेशीयानां च कालक्रमेण विकसितानां प्राचीनार्वाचीनानां विविध-भाषाणां माध्यमेन साक्षात्परम्परया वा संस्कृतोपकर्त्रीभिः संस्थाभिः सहावश्यमेव सम्पर्कं स्थापयेत्। एकस्याः संस्थायाः परिगृहीतकार्येणा-परस्याः संस्थाया यथा परिचयः स्यात्तथा यत्नो विधेयः। एतदर्थं सर्व-प्रथमं भारतीयप्राचीनसाहित्यप्रकाशनकार्ये व्यापृतानां विश्वस्य समासां संस्थानां विस्तृतः परिचयः प्रकाशनीयः। अद्यावधि प्रकाशितस्य सम्पूर्णस्य संस्कृतसाहित्यस्य 'वैदिक बिब्लियोग्राफी' सदृशं प्रकाशनमावश्यकम्।

भारते वर्षे बहवो हस्तलिखितग्रन्थालयाः सन्ति, किन्तु साम्प्रतं तेषु बहवोऽव्यवस्थिता एव। ये व्यवस्थितास्तेष्वपि व्यवस्थाया रूपमेकं नास्ति। न केवलं भारतीयानामेवापि तु विदेशीयानामपि हस्तलिखित-ग्रन्थालयानां विषयविभागादिष्वेकः सर्वमान्यः सिद्धान्तः शीघ्रमेवावश्यं स्थिरीकरणीयः। विगतसहस्राब्द्यां विभिन्नराजनीतिकाक्रमणैर्देशस्या-संख्यपुस्तकराशिर्विनिष्ट एव, तथापि देशस्य विभिन्नस्थानेषु ग्रामेषु चाद्यापि हस्तलिखितग्रन्थानां विपुला सम्पत्तिः सुरक्षिता तिष्ठति। कुत्रचिच्च सा वेष्टनेष्वाबद्धा स्वकीयानन्तिमान् श्वासान् निःश्वसिति। उपेक्षितस्यास्य ग्रन्थसमूहस्योद्धारोऽधुनापि कर्तुं शिष्यत एव। साम्प्रतं भारतीयसङ्घे देशीयराज्यानि सम्मिलितानि सन्ति। एषु राज्येषु महत्त्व-पूर्णाः पुस्तकालया अत्यन्तमेव हीनदशायां विद्यमानाः सन्ति। एतेषां व्यवस्थायाः सुरक्षायाश्च नवीनवैज्ञानिकरीत्यनुसारं प्रबन्धेन भवितव्यम्।

उपर्युक्तं कार्यक्रमं विभिन्नानि राज्यशासनानि पूरयितुं शक्नुवन्त्येव। किन्तु तेषु कार्येष्वेकरूपतानयनार्थं विश्वपरिषदा केन्द्रीयशासनत एकस्य विधानस्य प्रारूपं निर्माय राज्यशासनानां शिक्षासंस्थानां शोधसंस्थानां च सविधे तेषां विचारप्रकारजातपरिज्ञानाय प्रेषणीयम्। तेषां सर्वेषां विचाराणामध्ययनं कृत्वा चान्ते सर्वमान्य एकः सिद्धान्तः स्थापनीयः। ततश्च तदनुसारमेव तासां सर्वासां संस्थादीनां संस्कृतोन्नतिविषयकं कार्यजातं प्रचलेत्।

यथा भारते तथैव विदेशेष्वपि तेषु तेषूपर्युक्तेषु विषयेषु स्वकीय-सङ्घटनबलेन विदुषां सहयोगेनाऽनुनयेन चास्यां कार्यप्रणाल्यामेकरूपता-ऽऽनेया। अस्मिन् कर्मण्यस्माकं विदेशस्थिता राजदूता महत्त्वपूर्णं कार्यं कर्तुं शक्नुवन्ति। वस्तुतस्तु एकेन राजदूतेन सर्वप्रथमं सांस्कृतिक-दूतेन भाव्यम्। अस्माकं संस्कृतौ परिनिष्णातेन तेनावश्यं भवितव्यम्। ईदृश एव राजदूतो विदेशेष्वस्माकं देशस्य प्रतिनिधित्वं कर्तुं शक्नोति। बाईबिलसमक्षं महामहिमवत्याः श्रीभगवद्गीतायाः किमपि मूल्यं नाङ्कितवन्तो जना नास्माकं सांस्कृतिकं प्रतिनिधित्वं कर्तुं शक्नुवन्ति। अधुनातना अस्माकमधिकांशा राजदूताः केवलं राजदूता एव, अस्माकं संस्कृतेः पूर्णं प्रतिनिधित्वं न ते निर्वाहयन्तीति खेदस्य विषयः। विश्व-परिषदाऽस्यां स्थितौ परिवर्तनमाकाङ्क्षणीयम्। राजदूतैः सह सांस्कृतिक-दूतानां नियुक्तिविषयेऽपि विचारो विधेयः। एतेषां साहाय्येनैव विदेशेषु संस्कृतोन्नतिप्रयत्नेषु सामञ्जस्यं स्थापयितुं शक्यते।

विश्वपरिषदा विश्वस्य समेऽपि विश्वविद्यालयाः संस्कृतस्य प्राचीनतम-भाषानुरोधेन स्वकीये पाठ्यक्रमेऽनिवार्यविषयरूपेणैच्छिकविषयरूपेण वा यथा स्यात्तथा निवेशं कुर्युरिति भृशमनुरोद्धव्याः। समस्ते भूमण्डले प्रयुज्य-मानभाषासु शब्दार्थसाम्येन समानार्थकत्वं समानप्रवृत्तिनिमित्तकत्वं च निश्चित्यैकस्य संस्कृतविश्वकोषस्य निर्माणमावश्यकम्, यद्द्वारा विश्वस्य राष्ट्रेषु समानार्थकशब्दप्रयोगे एकवाक्यताऽऽनेतुं शक्येत। समये समयेऽनया परिषदा विदेशेषु संस्कृतभाषायाः प्रसाराय संस्कृतविदुषां शिष्टमण्डलान्य-वश्यमेव प्रेषणीयानीति॥

## सोमनाथमन्दिरस्य पुनः प्रतिष्ठा

सोमनाथमन्दिरस्य पतनेन सहैवास्माकं परतन्त्रताया इतिहासः प्रारब्धोऽभूत्। सोमनाथमन्दिरध्वंसानन्तरं प्रायः सहस्रवर्षपर्यन्तं वयं पारतन्त्र्यनिगडनिबद्धा वर्णनातीतविविधकष्टान्यनुभवन्तः परतन्त्रताया अभिशप्तं जीवनं यापितवन्तः। मध्ये मध्ये स्वीयं प्राक्तनगौरवमनुस्मृत्य सञ्जातराष्ट्रोद्धारतर्षैर्दुर्धर्षपरतन्त्रताभिशापविमुक्तिकामैस्तैस्तैरैतिहासिकमहापुरुषैस्तदुन्मोचनाय सुनियोजितबलपौरुषात्मकः प्रयत्नोऽपि विहित एव, तथापि सुसङ्घटितजनशक्तेरभावाद् दैवदुर्विपाकाच्च नासौ साफल्यमधिरुरोह। अन्ततः सौभाग्याद्देशस्यैकेन महापुरुषेणावतीर्णम्। तेन च सुप्तस्यास्य प्रभूतराष्ट्रस्य नाडीं सुनिपुणमभिध्याय जनशक्तौ स्वातन्त्र्यानलं च सन्धुक्ष्य स्वराज्यावाप्तेरभिनव एव पन्था आविष्कृतः। तमनुसरन्तो वयं सहस्राब्द्यनन्तरं स्वतन्त्रताया आलोकं दृष्टवन्तः। सहैवानेन सर्वाङ्गीणमस्माकं पतनमपि दृग्गोचरं समजायत। राष्ट्रस्य समाजस्य च परिष्कारार्थं पुनरुन्नतये च भूतकालिकानामस्माकममीषामभिभवानां प्रतीकार आवश्यक आसीत्। अचिरादेव दिवङ्गतेन महन्नेतृत्वशक्तिशालिना सरदारवल्लभभाईपटेलमहोदयेन सर्वप्रथमं सोमनाथमन्दिरस्य पुनरुद्धाराय प्रतिज्ञा कृता। प्राप्तकालोऽयं निर्णय आसीत्। राष्ट्रस्याखिलेन प्रवुद्धजनवर्गेणास्य हार्दिकं समर्थनमकारि। विगतमईमासस्यैकादशतमे दिवसे पटेलमहानुभावस्य सा प्रतिज्ञा साकारा सञ्जाता। प्रसिद्धेषु द्वादशसु ज्योतिर्लिङ्गेषु सोमनाथस्य प्रथमं स्थानम्, "सौराष्ट्रे सोमनाथं च" इत्यादिशिवपुराणवचनात्। प्रथमस्यास्य ज्योतिर्लिङ्गस्य प्रतिष्ठा च सर्वप्रथमं दक्षशापात् क्षयग्रस्तेन सोमेन कृतेति शिवपुराणतो ज्ञायते। अत एवास्य सोमनाथेत्यन्वर्थकं नाम। तदनन्तरं सोमनाथमन्दिरे षड्वारं प्रहाराः सञ्जाताः। इमे प्रहारा राष्ट्रस्य राजनीतिकपराजयेन सह सांस्कृतिकपराभवाय कृता आसन्। अस्माकं पूर्वजैरनुभूतमेतत्। अत एव यदा यदा वयं राजनीतिकं विजयं लभामहे, तदा तदा स्वसंस्कृतेः प्रतीकभूतानामेतेषां मन्दिरादीनां पुनर्निर्माणमवश्यमेव सर्वप्रथमं कुर्महे। सोमनाथमन्दिरस्यानयैव रीत्या षड्वारं पुनरुद्धारः सञ्जातः। साम्प्रतं सप्तमवारमस्माकं संस्कृतेः पुनः प्रतिष्ठा सञ्जायते। अस्मिन् कर्मणि धार्मिकताया लेशतोऽपि प्रवेशो नास्ति। सांस्कृतिकं राजनीतिकमेव चास्य महत्त्वम्। अत एव धर्मनिरपेक्षगणतन्त्रस्यास्य

राष्ट्रस्य प्रथमराष्ट्रपतिभो राष्ट्रप्रतीकभूतैः श्रीराजेन्द्रप्रसादमहाभागैरस्मिन् राष्ट्रियमहोत्सवे स्वकीयः सहयोगः प्रादायि ॥

## कामशास्त्रगर्हा

कांग्रेसाध्यक्षैर्भारतीयसंस्कृतिसम्मेलननामिकायाः संस्थायाः संस्थापकैर्भारतीयसंस्कृतिसंस्कृतसाहित्ययोः प्रगाढसमर्थकैश्च श्रीपुरुषोत्तमदासटण्डनमहोदयैः प्रभासपट्टने सोमनाथमन्दिरपुनःप्रतिष्ठामहोत्सवावसरे सम्पन्नाया अखिलभारतीयसंस्कृतपरिषद उद्घाटनभाषणे संस्कृतसाहित्यं स्तुवद्भिः कामशास्त्रस्य गर्हणा कृता। तैरुक्तम्—"संस्कृतसाहित्ये ज्ञानविज्ञानकलानामपूर्वं वाङ्मयं विद्यते। तस्मिन्नुपनिषदः सन्ति कामशास्त्रं च। कामशास्त्रसदृशोऽश्लीलोऽशोभनश्च ग्रन्थः कोऽपि नास्ति। मयैकवारं तस्याध्ययनं कृतम्। ईदृशस्य ग्रन्थस्याग्नये समर्पणमेव वरम्" इति। कमिव दृष्टिकोणमवलम्ब्य तैरिदं कथितमित्यद्यापि वयं ज्ञातुमसमर्थाः। यस्य संस्कृतसाहित्यस्य प्रशंसां कुर्वन्तस्ते कदापि न तृप्यन्ति, तस्यैवाभिन्नाङ्गस्य कामशास्त्रस्य—यस्य विशिष्टं साहित्यं तत्र विद्यते—गर्हायां किमपि सामञ्जस्यं न प्रतीयते। प्राचीने भारते राजपुत्रीभ्यो विविधकलानां शिक्षया सह कामशास्त्रस्यापि शिक्षा दीयते स्म। पाश्चात्त्या विद्वांसोऽपि 'सेक्सुअल साइन्स' इति नाम्ना विस्तारितस्य कामशास्त्रस्याध्ययनं दाम्पत्यजीवनस्य माधुर्याधिगमायावश्यकं मन्यन्ते। दार्शनिकप्रवरैः श्रद्धेयभगवद्दासमहोदयैश्च कामशास्त्रस्य हिन्दीभाषानुवादस्य सुविस्तृता भूमिका लिखिता, तदुपबृंहणात्मक एव च 'पुरुषार्थ'नामको हिन्दीभाषायां ग्रन्थो रचितः। किं टण्डनमहोदयानां कथनस्य तृतीयपुरुषार्थस्य कामस्य खण्डनमेवाभिप्रायः। तर्हि नैतच्छोभनम्। भारतीयसंस्कृतौ यथा मोक्षस्य महत्ता वर्णिता, यथा च धर्मार्थयोः प्रशंसा कृता, तथैव कामशास्त्रस्यापि माधुर्यं वर्णितम्। परस्पराविरोधेन सर्वेषां निषेवणमेव भारतीयः पन्थाः। यदि वयं टण्डनमहोदयानुरोधेन कामशास्त्रमग्नये समर्पयामस्तर्हि तेन सह काव्यकलादीनां बहवो ग्रन्था अपि तथा कृताः स्युः। कामो हि नाम वास्तविकं तथ्यम्। "धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" इति गीतोक्त्या धर्माविरुद्धकामस्य भगवत्स्वरूपत्वम्। अथ च "अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्" इति मनूक्त्या पुरुषार्थेषु कामस्य सांसारिक-

कार्यजाते प्राथम्यमपि स्वीक्रियते। एवं स्थिते कामस्यानुपातिकं महत्त्वं रागात्मकं गाम्भीर्यं च न कथमप्युपेक्षितुमपलपितुं वा शक्यते। किं बहुना, तन्नियमनमन्तरा मोक्षाख्यस्य परमपुरुषार्थस्यापि निरूपणमशक्यमेव स्यात्। कामस्य नियमनं च कामशास्त्रनिर्दिष्टविधानेनैव कर्तुं शक्यत इति लोकव्यवहारनियमनार्थं शासनविधानवदेव कामशास्त्रस्याप्यावश्यकताऽनिवार्येति विभावनीयम् ॥

## संस्कृतपरीक्षाणां मान्यताघोषणा

उत्तरप्रदेशीयशासनेन प्रथमं १९५१ ईशवीये जुलाईमासस्य १७ दिनाङ्के केवलं प्रथमपरीक्षायाः, तदनन्तरं सितम्बरमासस्य १८ दिनाङ्के प्रथमायाः, पूर्वोत्तरमध्यमयोरांग्लभाषासहितयोः, आंग्लभाषासहितायाः शास्त्रिपरीक्षायाश्च क्रमेण जूनियरहाईस्कूल-हाईस्कूल-इन्टरमीडियट-बी०ए०परीक्षाणां समकक्षतोद्घोषिता। उत्तरप्रदेशराज्यपालस्यादेशेन प्रथमादिपरीक्षोत्तीर्णाश्छात्रा इतः प्रभृत्येव राजकीयपदेषु नियुक्ता भवेयुः। शिक्षणसंस्थासु, पुनःशिक्षण-( ट्रेनिंग )महाविद्यालयेषु, औद्योगिकसंस्थासु च प्रवेशं प्राप्नुयुरिति।

उत्तरप्रदेशशिक्षामन्त्रिणां मान्यानां श्रीसम्पूर्णानन्दमहाभागानां प्रयत्नेन १९५० ईशवीयवर्षस्य मईमासस्य प्रथमद्वितीयदिनाङ्कयोर्वाराणस्यां राजकीयसंस्कृतमहाविद्यालयभवनेऽखिलभारतीयसंस्कृतपरीक्षासन्तुलनपरिषदोऽधिवेशनमजनि। तत्र संजाता निर्णयाः पञ्चमवर्षतृतीयाङ्के सम्पादकीय उट्टङ्कितास्ते तत एवावलोकनीयाः।

तान् निर्णयाननुरुद्ध्यैवोत्तरप्रदेशीयशासनेन काशिकराजकीयमहाविद्यालयस्य विभिन्नपरीक्षाणां पाठ्यक्रमे आवश्यकानि यानि संशोधनानि परिवर्धनानि च स्वीकृतानि, तानि सर्वेषां सुपरिचितान्येव। तत्र हि संस्कृतसाहित्यस्य पूर्ववदेव संरक्षणं कृतमथ च नूतनविषयाणामपि समावेशो यथायथं कृतः। तत्र प्रथमायाः षट्सु पत्रेषु संस्कृतसाहित्यस्य सप्तमाष्टमनवमपत्रेषु च नूतनानामितिहासभूगोलगणितकलाकौशलादिविषयाणां समावेशः कृतः। मध्यमायाः पूर्वोत्तरमध्यमानामकौ द्वौ विभागौ कृतौ, 'क-ख'-विभागयोश्च पाठ्यक्रमो विभक्तः। तत्र 'क'विभागे संस्कृतसाहित्यस्य, 'ख'विभागे च इंग्लिशादिवैदेशिकभाषया सह राजशास्त्र-अर्थशास्त्र-इतिहास-

हिन्दी-गणित-विज्ञान-प्राकृतविज्ञान-मानवविकास-धर्म-नैतिकता-क्रीडादीनां नूतनविषयाणां समावेशः कृतः। वर्षद्वयसाध्यायां शास्त्रिपरीक्षायामपि मध्यमावदेव 'क-ख'-विभागयोः पाठ्यक्रमो विभक्तः। तत्र 'क'विभागे संस्कृतसाहित्यस्य विभिन्नानां शाखानाम्, 'ख'विभागे चेतिहास-वार्ताशास्त्र-(अर्थशास्त्र)-राजनीति-प्राचीनभारतीयेतिहास-संस्कृति-हिन्दी-शिक्षणशास्त्र-इंग्लिशादिविषयाणां समावेशो वर्तते। सर्वास्वासु परीक्षासु सामान्यविषयाणामपि यथायथं समावेशोऽस्त्येव।

इत्थं संस्कृतपरीक्षासन्तुलनपरिषदो निर्णयानभिलक्ष्य संस्कृतपरीक्षा-पाठ्यक्रमे समयोचितं परिवर्तनं विहितम्। एवंविधपरिवर्तनस्य प्रयोजनमेतदेवास्ति यदस्माकं संस्कृतच्छात्राणां शास्त्रज्ञानेन सह लोकव्यवहारोपयोगिविषयाणामप्यावश्यकं ज्ञानं भवेदिति। तच्च नूतनेनानेन पाठ्यक्रमेण वाढं सिद्ध्यति। पाठ्यक्रमे सन्तुलिते संस्कृतपरीक्षा राजकीयकार्येषु मान्यतां लभेरन्नित्युत्तरप्रदेशीयशासनेन प्रतिश्रुतमासीत्। तदनुगुणमेव नूतनपाठ्यक्रममवलम्ब्य संजातानां प्रथमादिपरीक्षाणां परीक्षाफलप्रकाशानन्तरमुपर्युक्ता मान्यताघोषणा संजाता।

राजकीययाऽनया घोषणया संस्कृतसमाजस्य महानुपकारः संजातः। जीविकाया उन्नतेश्च भूयांसि द्वाराणि पूर्वं संस्कृतज्ञानां कृते पिहितान्यासन्। संस्कृतज्ञा विद्वांसः पाठशालास्वेव शरणं लभन्ते। पाठशालानां परिसीमितत्वादन्ये आचार्योत्तीर्णाः स्नातका ग्रामेषु कृषिकर्मणा कथावार्ताप्रसङ्गेन कर्मकाण्डादिना फलितज्यौतिषेण च स्वजीविकानिर्वाहं यथाकथञ्चित् कुर्वन्ति। केचिच्च आयुर्वेदविद्यामधीत्य चिकित्साकार्यं कुर्वाणाः स्वकीयं जीवनं यापयन्ति। परन्तु सर्वेषामेषां दीना हीना च दशा वरीवर्ति। घोषणयाऽनयाऽचिरात् समयो नूनं परिणमिष्यति। संभाव्यते साम्प्रतं संस्कृतज्ञा विद्वांसः पूर्ववदेव राजनीतिज्ञाः, शासकाः, प्राड्विवाकाः, अन्तरिक्षविदः, राजदूताः, किं वहुना, महामात्याश्चापि भविष्यन्ति।

घोषणयाऽनया संस्कृतपरीक्षाणामितरपरीक्षाभिः साम्यमापादितम्। अधुना इंग्लिशभाषया सह शास्त्रिपरीक्षोत्तीर्णाश्छात्रा बी०ए०परीक्षोत्तीर्णच्छात्रवद् एम०ए०परीक्षायां प्रवेशमवाप्स्यन्तीत्याशास्यते, तद्वदेव च प्रतियोगितापरीक्षास्वपि। इमाः सुविधास्त्वस्माभिर्लब्धा एव, किन्त्वाभिः सहैव संस्कृतसमाजे महान् कर्तव्यभारोऽपि समायातः, आसां सुविधानां समुचितमुपयोगं कर्तुं वयं समर्था भवेमेति। यस्मिन् कार्ये संस्कृतस्नातका

नियुक्ता भवेयुस्तद् योग्यतया निर्वोढुम्, प्रतियोगितादिषु साफल्यं चाधिगन्तुं समर्था भवेयुरित्यस्माकं हार्दिकोऽभिलाषः।

साम्प्रतमुत्तरप्रदेशे चतुर्दशशतपरिमिताः संस्कृतपाठशालाः सन्ति। उत्तरप्रदेशतो बहिरपि काशिकमहाविद्यालयपरीक्षया सम्बद्धाः शतत्रयपरिमिताः पाठशाला विद्यन्ते। एतासु साम्प्रतमुत्तरप्रदेशे रामनगरटेहरीगढवालयोः समावेशात्तत्रत्याभिः पाठशालाभिः सह नवसंख्याकाः पाठशाला राजकीयाः, ३८० संख्याकाश्च पाठशाला लब्धराजकीयसहायाः सन्ति। शिष्टाः सर्वाः पाठशाला लब्धमठमन्दिरधनिकसहाया वर्तन्ते। उत्तरप्रदेशतो बहिःस्थिताश्च सर्वाः पाठशालाः प्रायः स्वतन्त्रा एव सन्ति। नहि ताभ्यः किमपि राजकीयं साहाय्यं दीयते। स्थानिकसंस्थाभिर्यत्किमपि साहाय्यं लभ्यत इति तदन्यत्। एवं च पाठशालासु राजकीयं साहाय्यम् "शाकाय वा स्याल्लवणाय वा स्यात्" इत्याभाणकं चरितार्थयति। अत एव पाठशालानां दीना दशा वर्तते। प्रायः प्रतिशतं पञ्चाशत्संख्याकाः पाठशाला एकाध्यापकाः सन्ति।

उत्तरप्रदेशीयशासनेन संस्कृतपाठशालाभ्यो लक्षत्रयपरिमितं वार्षिकं साहाय्यं दीयते। कस्यै अपि पाठशालायै चतुस्सहस्रतोऽधिकं वार्षिकं साहाय्यं न दीयते। एतावत्साहाय्यं च यत्र दशाधिका अध्यापकाः सन्ति तत्रैव वितीर्यते। अत एव श्रेष्ठतमानामपि पाठशालानां प्रधानाध्यापकस्य मासिकं वेतनं सार्धशतरूप्यकेभ्योऽधिकं नास्ति। अधिकांशपाठशालीयप्रधानाध्यापकाः शतरूप्यकैरेव स्वजीवनं यापयन्ति। साधारणपाठशालीयाध्यापकानां तु कथैव का? संस्कृताध्यापकाः प्रायः पञ्चविंशतिरूप्यकैरेवाचार्यपर्यन्तमध्यापयन्ति। यत्र प्राथमिक(प्राइमरी)पाठशालाशिक्षकाणां वेतनं पञ्चाशद्रूप्यकपरिमितम्, साम्प्रतं राजकीयकार्यालयेषु निम्नकर्मचारिणोऽपि तावद् वेतनं प्राप्नुवन्ति, तत्र संस्कृतपण्डितानामेषा हीना दशेत्यहो विधिविडम्बनम्!

सर्वासु शिक्षासंस्थास्वध्यापकानां निश्चितो वेतनक्रमो विद्यते। किन्तु संस्कृतपाठशालास्वद्यावधि कोऽपि निश्चितो वेतनक्रमो नास्ति। स्वतन्त्रे भारते संस्कृतज्ञानामियं दुरवस्था क्षिप्रं शोधनीया। एतेषामध्यापकानां कृते शीघ्रमुचितो वेतनक्रमः सर्वासु पाठशालासु प्रचालयितव्यः। निश्चितं वेतनक्रममन्तरा नवीनपाठ्यक्रमस्य सफलता न संभवति। वेतनक्रमनिश्चयश्चार्थसाध्यः। संस्कृतविद्यालयेषु च धनस्य कार्श्यं वर्तत इति सर्वे

जानन्ति। संस्कृतपाठशालासु च्छात्रैः शुल्कं न दीयते, प्रत्युत निर्धनेभ्योऽध्येतृभ्यो भरणपोषणार्थं छात्रवृत्तिर्दीयते। अत इदमावश्यकं यद् राज्येन पाठशालाभ्यो विपुलं धनसाहाय्यं प्रदीयेत।

इदानीं नूतनपाठ्यक्रमे बहव आधुनिका विषयाः समाविष्टा वर्तन्ते। तान् विषयानध्यापयितुमेकाधिका अध्यापका अपेक्षिताः सन्ति। प्रथमपरीक्षार्थमपि न्यूनान्न्यूनं त्रयाणामध्यापकानामावश्यकता विद्यते। नवीनविषयाध्यापकाश्च नहि संस्कृताध्यापकवत् पञ्चविंशतिरूप्यकैरुपलभ्याः। एवं च प्रथमामध्यमाशास्त्रिपरीक्षाणां यो नूतनः पाठ्यक्रमो निर्धारितस्तं संचालयितुं तदर्थं कृतां राजकीयमान्यतां सफलयितुं च सम्प्रत्युत्तरप्रदेशेऽपि शते पञ्चैव पाठशालाः क्षमाः। शिष्टाः पञ्चनवतिपाठशाला न तं सफलयितुं योग्याः। वर्तमाने समये संस्कृतच्छात्राणां योगक्षेमनिर्वाहार्थं नूतनविषयाणां निर्धारणमपि युक्तमेव। अतः प्राथमिके संक्रमणकाले प्राचीनप्रणाल्या प्रचलिताः संस्कृतपाठशाला अभिनवां पाठपद्धतिं यथा सुखेनानुसरेयुस्तथा राज्येन प्रयतितव्यमिति।

नवीने पाठ्यक्रमे प्राचीनविषयाः सन्त्येव। अन्येषां नूतनानां विषयाणामपि समावेशस्तत्रैव कृतः। एष च संस्कृतच्छात्राणां शिरसि महान् भार इति केचित् कथयन्ति। तन्न शोभनम्। अधुना हि शते पञ्चाशद् विद्यार्थिन इतोऽधिका वा संस्कृतपरीक्षाभिः सह आंग्लपरीक्षा आयुर्वेदपरीक्षा हिन्दीसाहित्यसंमेलनपरीक्षाश्च ददति। अस्य कारणं जीविकाप्रश्न एव। न ह्यांग्लपरीक्षार्थिभिस्तथा क्रियते, क्रियते चेत् स्वल्पैरेव। एकदैव बहूनां परीक्षाणां दाने यः परिश्रमो भवति, ततोऽल्पीयानेव श्रमोऽपेक्षितो नूतनपद्धत्या संस्कृतपरीक्षादाने। अनया पद्धत्या यदा जीविकाप्रश्नः समाधानमेष्यति, तदा संस्कृतच्छात्रा अपि नहि बह्वीनां परीक्षाणां कृते प्रयतिष्यन्ते। एवं च नवीनपाठ्यक्रमेण संस्कृतच्छात्राणां बहुपरीक्षाव्याधिर्निस्सारतो भविष्यति। तथा च नवीनः पाठ्यक्रमस्तेषां न भारभूतोऽपि तु श्लाघ्य एव।

एवमेव केचित् कथयन्ति यन्नवीनपाठ्यक्रमेण प्रकृष्टपाण्डित्यस्य ह्रासो भविष्यतीति। इयमापत्तिरपि साररहिता। द्वित्राणामाधुनिकविषयाणां समावेशेन संस्कृतविषयाणामुत्कृष्टं पाण्डित्यं न संभवतीति कथनं तु प्राचीनेतिवृत्तस्याज्ञानतामेव सूचयति। अस्माकं पुरातना आचार्या अनेकविषयाणामुद्भटा विद्वांस आसन्निति नाविदितं प्रेक्षावताम्॥

## पारसीकदेशे संस्कृताध्ययनस्यापूर्वः समारम्भः

विगतश्रावणमासे पारसीकदेशीयतेहरानविश्वविद्यालयस्य संस्कृतप्राध्यापका डाक्टरकुन्हनराजमहोदयाः काशीविश्वविद्यालये संस्कृतिकलासम्बन्धिनीं स्वकीयां व्याख्यानमालां प्रसारयितुं तदानीन्तनैः श्रीगोविन्दमालवीयैः समाहूता आसन्। विगतेऽब्दे पारसीकशासनेन स्वीयतेहरानविश्वविद्यालये संस्कृताध्यापनार्थमेकस्य संस्कृतप्राध्यापकस्य कृते भारतीयशासकाः प्रार्थिताः, भारतीयशासनेन चेमे महानुभावास्तत्र प्रेषिताः। इमे महानुभावाः पूर्वमत्र मद्रासविश्वविद्यालये संस्कृतप्राध्यापकाः, अड्यारसंस्कृतग्रन्थमालाया बीकानेरनगरस्थानूपसंस्कृतग्रन्थमालायाश्च संपादका आसन्। अखिलभारतीयसंस्कृतसंमेलनेन काशीस्थपण्डितमण्डल्याः परिचयसम्पादनार्थमिमे महानुभावाः स्वकीये कार्यालये (श्रीसत्यनारायणकविराजमहोदयानां भवने) आमन्त्रिताः। तत्र च तैः 'ईरान'-देशे संस्कृतभाषायाः स्थितिविषये इतिवृत्तात्मकः संक्षिप्तः परिचयः स्वीयललितगीर्वाणवाण्याऽदायि—

"पारसीकदेशे आंग्लभाषायाः प्रचारो नास्ति। तत्र पारसीकभाषया फ्रेंचभाषया चाध्ययनाध्यापनादिकं सर्वं कार्यजातं प्रचलति। अस्माकं भारतीयाया देवनागर्या लिप्याः कस्यचिदपि परिचयो नास्ति। सर्वप्रथममहं तत्रत्यान् 'बी०ए०-एम०ए०'–कक्षास्थितान् विद्यार्थिनो वर्णमालामपाठयम्। अधुनाऽहं तान् रघुवंशादिकाव्यानि पाठयामि। अल्पीयस्येव काले विंशतिसंख्याकाश्छात्रास्तत्र संस्कृताध्ययने सोत्साहं प्रवृत्ताः" इति।

पूर्वं यत्र बृहत्तरभारतस्य साम्राज्यसीमाशङ्कुर्निखात आसीत्, यत्रत्यधर्मग्रन्थस्य 'जेन्द-अवेस्ता'-नामकस्य भाषा ऋग्वेदभाषयाऽत्यन्तं सादृश्यमावहति, तत्राधुनाऽस्माकं लिपेरपि कोऽपि परिचितो नास्तीत्यहो विचित्रा दैवगतिः! पश्यत 'जेन्द-अवेस्ता'-वचनम्—

[1]हावनिम् आ रतुम् आ<br>
हओमो उपैत् जरथुश्ट्रम्,

---

१. "सवनिम् आ ऋतुम् आ सोमो उपैत् जरथुष्ट्रम्। अग्निम् परि-योस्-दधन्तम् गाथाश्च [अपि] श्रावयन्तम्॥ आ तम् पृच्छत् (जरथुष्ट्रः) को नर् असि यम् अहम् विश्वस्य असोः ? अस्थिवतः श्रेष्ठम् ददर्श॥" इति संस्कृतच्छाया।

आत्रम् पइरि-यओजदथन्तम्,
गाथास्-च स्रावयन्तम्
आ-दिस् परसत् ( जरथुश्ट्रो ) को नर अहि
यिम् अजम् वीस्पहे अंघउस्
अस्त्वतो स्रएश्टम् दादरस।

एतदस्माकं प्राचीनया भाषया कियत् साम्यमावहति। पश्चिम-एशियायाः 'अल-अमर्ना'-ग्रामे उपलब्धे आचार्यकिक्कुलिरचितहयशास्त्र-पुस्तके, यस्य रचनाकाल ईशातश्चतुर्दशशताब्द्याः पूर्वं विद्यते, एका-वर्तनद्व्यावर्तनत्र्यावर्तनादिसंस्कृतशब्दानां प्रयोगो विद्यते। एवमेवाष्टा-ध्याय्यां निर्दिष्टा दाविकाकूलाः शालयः, कापिशायनं मधु, पाण्डुकम्बला-दयश्च एष्वेव देशेषु भवन्ति स्म। सहस्राब्दीतोऽस्माकं सम्बन्ध एभ्यो देशेभ्यो विच्छिन्नः। जावासुमात्राबालिबोर्नियोश्यामादिदेशेषु यत्रास्माकं पूर्वजा एव राज्यमस्थापयंस्तत्रैव न्यवसंश्च, तेषां सन्ततिभिरस्माकं बान्धवैश्चास्माकं सम्बन्धो विच्छिन्नः। अस्माकं संस्कृतिरस्माकं शब्द-सम्पत्तिरद्यापि तत्राक्षुण्णा वरीवर्तते। तत्रत्यासु भाषासु संस्कृतशब्दानां बाहुल्यं विद्यते। रामायणमहाभारतकथानामपि भारतसदृश एव प्रचार-स्तत्राप्यस्ति। अङ्कोरवट-बोरोबुदुरसदृशानि बृहत्तमानि शैववैष्णवमन्दि-राणि चाद्यापि तत्र सन्ति, येषां तुलनां भारतस्थानि मन्दिराण्यपि कर्तुं न प्रभवन्ति। श्यामदेशे राज्याभिषेकसमयेऽधुनापि शतपथब्राह्मण-मन्त्रैः पुरोहिता अभिषेकं कुर्वन्ति। तत्रत्याः पुरोहिता अद्यापि यज्ञोपवीतं धारयन्ति। एवं सत्यप्यस्माभिः सह परस्परादानप्रदानाभावात् सत्यपि साम्ये वैषम्यवारिधिः समायातः। समयोऽयं संप्राप्तो यद्वयं स्वप्राति-वेशिकदेशैः स्वसंस्कृतिसम्बन्धं स्थापयामः, तेषां प्राचीननवीनसाहित्य-संस्कृत्योरध्ययनं कुर्मः, बहोः कालाद् विस्मृतान् बन्धून् सभाजयामः, उभयोर्विस्मृतस्य ज्ञानराशेः पुनरादानप्रदानं भवतु, अस्माकं प्राचीनं साहित्यं तत्र विविधरूपैः सुरक्षितं तिष्ठति तदन्वेषयामः। श्रीकुन्हन-राजमहोदयानामेतद्द्वीरानगमनं तस्य भाविसम्बन्धस्य संसूचकम्। अस्माभिः स्वप्रातिवेशिकेष्वन्येषु देशेष्वपि संस्कृताध्ययनाध्यापन-प्रवृत्तिर्जागरणीया॥

## प्राच्यविद्यामहासंमेलनम्

विगत-अक्टूबरमासस्य तृतीयचतुर्थपञ्चमदिनाङ्केषु उत्तरप्रदेश-राजधान्यां लक्ष्मणपुर्यां तत्रत्यविश्वविद्यालयेऽखिलभारतीयप्राच्यविद्या-महासंमेलनस्य षोडशतममधिवेशनमभूत्। अस्य संमेलनस्य प्रधानाध्यक्षा मद्रासविश्वविद्यालस्येतिहासपुरातत्त्वविभागस्य भूतपूर्वप्राध्यापकाः श्रीके०-ए०नीलकण्ठशास्त्रिमहोदयाः, स्वागताध्यक्षाश्च आचार्यनरेन्द्रदेवमहाभागा आसन्। संमेलनस्योद्घाटनमुत्तरप्रदेशप्रधानमन्त्रिभिः श्रीगोविन्दवल्लभ-पन्तमहानुभावैः कृतम्। देशस्य विभिन्नेभ्यो भागेभ्यः पञ्चशताधिका विदेशीयाश्च कतिपये प्रतिनिधयोऽत्र समवेता आसन्।

प्रथमे दिवसे उद्घाटनभाषणस्वागतभाषणानन्तरं प्रधानाध्यक्षाणां श्रीनीलकण्ठशास्त्रिणां सारगर्भितं भाषणमभूत्। ततोऽधिवेशनं त्रयोदशसु स्थायिशाखासु, नवीनयोः 'हिन्दी·उर्दू'–नामिकयोर्द्वयोः शाखयोश्च विभक्तम्। स्थायिशाखानाम्—(१) वैदिक–(२) ईरानियन–(३) संस्कृत–(४) मुस्लिमसंस्कृति–(५) अरबी-फारसी–(६) पाली-बौद्धधर्म–(७) प्राकृत-जैनधर्म–(८) इतिहास–(९) पुरातत्त्व–(१०) भारतीयभाषा–(११) द्रविडसंस्कृति–(१२) धर्मदर्शन–(१३) व्यावहारिकविज्ञानललितकला इति नामानि। विभिन्नानां शाखानां विभिन्नाः सभापतयो मन्त्रिणश्चासन्। तत्र विभागीयसंमेलनेषु तत्तत्सभापतीनामन्येषां च विदुषां भाषणानि संजातानि, द्वे व्याख्याने च चलचित्रप्रदर्शनपूर्वके संजाते। महासंमेलने च द्वे विवादगोष्ठ्यौ संजाते, अनेके प्रस्तावाश्च स्वीकृताः। रात्रौ संस्कृतहिन्दीनाटकयोः संगीतनृत्ययोश्च सांस्कृतिकं मनोरञ्जकं चायोजनमासीत्। विश्वविद्यालयपुस्तकालये हस्तलिखित-पुस्तकानां चित्राणां च प्रदर्शनं कृतम्। अस्मिन्नवसरे महाधिवेशनस्य स्थानीयप्रबन्धकैः प्रतिनिधिभिः प्रेषितानां द्विशताधिकानां निबन्धानां स्वरूपपरिचायकमेकं पुस्तकमपि प्रकाशितम्। अन्ते च महासंमेलनेन "सप्तदशाधिवेशनं १९५३ ईशवीयेऽहमदाबादनगरे भवतु" इति गुजरात-विद्यासभाया आमन्त्रणमङ्गीकृतम्।

भारतवर्षे ज्ञानविज्ञानयोर्विभिन्नशाखानां प्रातिनिध्यं कुर्वतां विदुषा-मेतादृशः समवायो न क्वाप्यन्यत्र दृश्यते। डा०रामकृष्णगोपालभाण्डार-करमहोदयानामपूर्वोद्योगपरिणामभूतमिदं महासंमेलनम्। अस्य प्रथमा-

धिवेशनं १९१९ ईशवीये पुण्यपत्तननगर एव भाण्डारकरशोधसंस्थानस्य तत्त्वावधाने डा०आर०जी०भाण्डारकरमहोदयानां साभापत्ये सम्पन्न-मभूत्। तदनु कलकत्ता-मद्रास-इलाहाबाद-लाहौर-पटना-बड़ौदा-मैसूर-त्रिवेन्द्रम्-तिरुपति-हैदराबाद(दक्षिण)-बनारस-नागपुर-दरभङ्गा-बंबईनगरेषु क्रमेण प्रो०सिलवेन लेबी–म०म०डा०गङ्गानाथझा–शम्सउल उलेमा–डा० जे०जे०मोदी–म० म० डा०हरप्रसादशास्त्रि–रा०ब०हीरालालजी–श्रीके०पी० जायसवाल-डा०एस०कृष्णस्वामी आयंगर-डा०एफ०डब्ल्यू थामस–प० मदनमोहनमालवीय–श्रीगुलामयाजदानी–डा०एस०के०बेलवलकर–म०म०-डा० पी० वी० काणे–डा०आर०जी०मजूमदार–डा०एस०के० डेमहोदयानां साभापत्ये द्वितीयादिपञ्चदशपर्यन्तानि महाधिवेशनानि संजातानि। प्रत्येकस्मिन्नधिवेशने द्विशताधिकाः प्रतिनिधयः समवेता अभूवन्। अद्यावधि त्रिसहस्रपरिमिता निबन्धा अत्र पठिताः। एषु श्रेष्ठतमा निबन्धाः संमेलनकार्यविवरणग्रन्थे प्रकाशिता विद्यन्ते।

६ जुलाई १९१७ ईशवीये वर्षे डा०आर०जी०भाण्डारकरमहोदयाना-मशीतितमजन्मतिथौ पुण्यपत्तने भाण्डारकरशोधसंस्थानस्य स्थापना समजनि। तस्या एव संस्थायाः समुद्योगेनास्य महासम्मेलनस्य प्रारम्भो-ऽभूत्। अत एवास्य केन्द्रीयकार्यालयः पुण्यपत्तन एवं वर्तते। तस्या एव संस्थाया मन्त्री चास्य महासम्मेलनस्यापि स्थायी मन्त्री भवति। अस्य महासम्मेलनस्य द्वयोर्द्वयोर्वर्षयोरन्तरे महाधिवेशनं संजायते। प्रत्येका-धिवेशनस्य कार्यविवरणं तत्र पठितानां निबन्धानां च प्रकाशनं पुस्तका-कारेण भवति।

अष्टादशशताब्द्याः समाप्तित एव यूरोपीयदेशेषु संस्कृतभाषाया अध्ययनारम्भः संजातः। ऊनविंशशताब्द्या आरम्भे तत्र सर्वविद्याविदुषां महासम्मेलनस्यैकस्यावश्यकताऽनुभूता। किन्तु १८७३ ईशवीयतः पूर्वं सा कार्यरूपेण परिणता नाभूत्। तत्र सर्वप्रथमं १८७३ वर्षे पेरिसनगरे 'अन्ताराष्ट्रियप्राच्यभाषावित् कांग्रेस' नामिकायाः संस्थाया अधिवेशन-मभूत्। तत्पश्चाद् लन्दनादिषु यूरोपीयनगरेष्वस्या विभिन्नान्यधिवेशनानि संजातानि, येषु प० शङ्करपाण्डुरङ्ग-डॉ०आर० जी भाण्डारकर–जे० जे० मोदी—के० वी० पाठकप्रभृतयो भारतीया विद्वांसोऽपि संमिलिताः। तैर्भारतवर्षेऽप्येतादृश्याः संस्थाया आवश्यकताऽन्वभावि, किन्तु ते तदानीं तत्र सफला नाभूवन्। १९०८ ईशवीये वर्षे हेवाईद्वीपे 'यूरोपीय' कांग्रेस'-

संस्थाया एव संक्षिप्तमेकमधिवेशनं संजातम्, यत्र चोनजापानभारतदेशस्था विद्वांसः समवेता आसन्। एतदनन्तरमेव जुलाई १९११ वर्षे बटलर-महोदयेन शिमलानगरे प्राच्यभाषाविद्वांसः समाहूताः। यत्र डा० वोगेल-महाशयेन यूरोपवदेवात्रापि 'प्राच्यभाषा कांग्रेस' संस्थाया आवश्यकता-मभिलक्ष्य सुविस्तृतं निरूपणमकारि। एषु विषयेषु तत्र विचारः संजातः—

(१) भारते एकस्याः केन्द्रीयानुसन्धानशालायाः स्थापना।

(२) भारतस्य विभिन्नभागेषु प्राच्यभाषाविदां विदुषां सामयिकं संमेलनं च। अस्य कार्यपरिधौ—

(क) भारतीयभाषाविद्भिः कृतानामन्वेषणकार्याणां समालोचनम्। यूरोप-अमेरिकादिदेशेषु संजातानां तथाविधानामेव कार्याणां तुलनात्मक-मध्ययनं च।

(ख) सहकारितासिद्धान्तमवलम्ब्याखिलभारतीयप्राच्यविद्याकार्याणां समुन्नयनमिति।

तत्पश्चादेव विश्वव्यापिनः प्रथममहायुद्धस्य प्रारम्भान्न किमपि क्रिया-त्मकं रूपं गृहीतं तेन संमेलनेन।

इत्थं सत्यामपि प्रयत्नसन्ततौ यत्कार्यं भारतशासनेन प्रारब्धुं नाशकि, तदेव भाण्डारकरमहोदयानामन्येषां च विदुषां प्रयत्नेन प्रारब्धमभूत्। अद्यास्याः संस्थायाः स्थापनाया द्वात्रिंशद्वर्षाणि व्यतीतानि। भारतीयानां वैदेशिकानां च विदुषां सहयोगेनैषा प्रतिदिनमुन्नतिपथमारोहति। प्रारम्भावस्थायामेवानया संस्थया महाभारतस्य सर्वाङ्गपूर्णसंस्करणस्य कार्यं प्रारब्धम्। एतदर्थं देशस्य विभिन्नेभ्यो भागेभ्यो नेपालादिदेशेभ्यश्च प्राचीनतमा हस्तलेखाः संगृहीताः। पुण्यपत्तनस्थे दक्षिण(डेक्कन)-महाविद्यालये ऐतिहासिकाधारमङ्गीकृत्य प्रचलिते बृहत्तमसंस्कृतविश्व-कोषरचनाकार्ये बहु साहाय्यं प्रदत्तमनया संस्थया। अस्या एव प्रेरणया आफ्रेक्टरचितायाः बृहत्सूच्याः संशोधनपरिवर्धनकार्यं प्रारब्धं मद्रासविश्व-विद्यालयेन, यस्य प्रथमो भागः १९४९ ईशवीये प्रकाशितः। चित्रकलामूर्तिकलापुरातत्त्वसम्बन्धिन्या नेपालतिब्बतदेशयोः स्थितायाः सामग्र्या एकत्रीकरणार्थमपि प्रयतितम्, तत्र बहु साफल्यमपि लब्धम्। इत्थं प्राच्यभाषाणां विशेषतः संस्कृतस्य समुन्नत्यै अहर्निशं प्रयतमानैषा

संस्था दरीदृश्यते । अत्र संस्कृतपण्डितानां सहयोगोऽल्पीयानेव विद्यते । तेन सहयोगेन भूयसा भवितव्यमित्येतदेव प्रार्थ्यं विरमामः ॥

## मिथिलामगधविद्यापीठयोः स्थापना

विगतनवम्बरमासे बिहारराज्ये प्राचीननालन्दाविश्वविद्यालयसमीपे मगधविद्यापीठस्य, मिथिलायां दरभङ्गानगर्यां संस्कृतविद्यापीठस्य च समुद्घाटनं भारतीसंस्कृतिसभ्यतयोर्मूर्तिस्वरूपैरस्माकमभिनवस्य गणतन्त्रस्य प्रथमराष्ट्रपतिभिर्महामान्यैः श्रीराजेन्द्रप्रसादमहाभागैरनुष्ठितम् । तत्र मगधविद्यापीठे पालिप्राकृतवाङ्मयस्य, बौद्धदर्शनस्य, बौद्धसंस्कृतिसम्बद्धेष्वस्माकं प्रातिवेशिकेषु लङ्काब्रह्मदेशतिब्बतचीनादिदेशेषु प्रचलितानां भाषाणां तत्रत्यसाहित्यस्य चाध्ययनस्य गवेषणायाश्च व्यवस्था कृता । अस्मिन् विद्यापीठे प्रथमं देशस्था विदेशस्थाश्चाष्टचत्वारिंशत्परिमिताश्छात्राः प्रवेशं वृत्तिं च प्राप्स्यन्ति । बौद्धवाङ्मये परमनिष्णाता विदेशीया विद्वांसोऽप्यध्यापनं गवेषणाकार्यसंचालनं च विधास्यन्ति । मिथिलासंस्कृतविद्यापीठे संस्कृतसाहित्यस्य विभिन्नानां शाखानामध्ययनाध्यापनं गवेषणाकार्यं च प्रचलिष्यति । अस्मिन् शतद्वयपरिमिताश्छात्राः प्रवेशं यथायथं वृत्तिं च लप्स्यन्ते । विदेशीयभाषासु संस्कृतभाषायां च निष्णाता मनीषिणो विशुद्धसंस्कृतज्ञविद्वांसश्चाध्यापनकार्यं गवेषणाकार्यं च संचालयिष्यन्ति । अनयोर्विद्यापीठयोरुच्चशिक्षादीक्षिता एव च्छात्राः प्रवेशमाप्नुयुः, सर्वो व्ययभारश्च बिहारराज्यशासनेन वोढव्यः ।

युगानुरूपोऽयं बिहारशासनस्योपक्रमः । एशियामहाखण्डे विकीर्णान् देशमणीनेकत्र ग्रथयितुं संस्कृतपालिप्राकृतानां तत्तद्देशस्य भाषाणां च तुलनात्मकमध्ययनसूत्रमेव क्षमम् । एशियामहाखण्डस्य प्रत्येकेषु देशेषु भारतीयसंस्कृतिसाहित्ययोरवशेषा उपलभ्यन्ते । तेषां सत्यं सुस्पष्टं च रूपं तदैव प्रकाशमेष्यति यदा भारतीयभाषाभिः सह तत्तद्देशानां प्राचीनार्वाचीनेतिहाससंस्कृतिभाषाणामध्ययनं कृतं भवेत् । दक्षिणपूर्व-एशियामहाद्वीपैः सह भारतस्य प्रगाढः सम्बन्धोऽस्त्येव, किन्तु पाणिनिसमये तत्पश्चादपि च कम्बोजगान्धारादिदेशा अपि भारतस्यैव भागा आसन् । एषां देशानामाधुनिक्यां भाषायामपि संस्कृतस्य प्रभावः सुस्पष्टतया प्रतीयते । एतान् देशानपि तस्यामेव मालायामोतप्रोतीकर्तुं तत्तद्देशस्थभाषाणामध्य-

ध्ययनपरिशीलनयोरस्त्यावश्कता । भारतीयगणतन्त्रमहामात्येन महामान्यश्रीजवाहरलालनेहरूमहाभागेन भारतस्येतिवृत्तं वर्णयता कथितम्—"अमूल्यो हस्तलिखितग्रन्थराशिरस्माकं राष्ट्रेऽधुनाप्युपेक्षितदशायामितस्ततः पतितोऽज्ञातचरश्च विद्यते । स्वातन्त्र्यवेलायां समायातायां यान्यभीष्टान्यस्माकं भविष्यन्ति तेष्वस्याऽमूल्यग्रन्थराशेरुद्धारोऽपि प्रधानतमं कार्यम्" इति । अधुना स एव समयः समायातः । यस्य मार्गस्य दिङ्निर्देशः प्रधानमन्त्रिणा कृतस्तेन पथा राज्यशासनानि सुदूरं कृतयात्राणि सन्ति, किन्तु भारतीयकेन्द्रीयशासनमधुनाऽत्र मौनमेवालम्बते । अस्तु, बिहारशासनस्यैषां प्रयत्नायां वयं सोत्साहं स्वागतं कुर्मः, भगवन्तं श्रीविश्वेशं च प्रार्थयामहे—कुशलास्तेषां पन्थानः सन्त्विति ॥

## भारतीयसंस्कृतिसंमेलनम्

स्वतन्त्रताप्राप्त्यनन्तरमप्यद्ययावत् सा विचारधारा बोधाचरणप्रचारणैर्न सुविकसिताऽभवत्, यामाधृत्य सर्वे भारतीया आत्मानमधिगतसकलपुरातनसंस्कारमङ्गीकृतनूतनविचारसारं चाभिज्ञाय नवाभ्युदयमार्गे सोत्साहं भृशं संसरेयुः । तथ्यमिदं यद्धर्मेत्याख्यया यो हि नैतिको भावः स्वीकृतः पुरातनेन समाजेन, स न साम्प्रतं सर्वजनीनं सार्वभौमं स्वरूपं प्रस्तौति । अतः संस्कृतिरेव सर्वसंग्राहकः साम्प्रतिकस्तत्स्थानापन्नो भावः । संस्कृत्याख्यया यो ह्युदारो भाव आकलितो भवति तस्य किं विकासवृत्तं किञ्च तस्य दर्शनमिति विचारकैरविचारितप्रायमेव । एतदर्थमचिरादेव प्रयत्नोऽपेक्ष्यते । संस्कृतिस्वरूपमनुरुद्ध्य भवतु काचिद् विप्रतिपत्तिर्विद्वत्सु । परन्तु याः काश्चन विषमाः समस्या अप्राप्तसमाधाना भारतीयसमाजं विकुर्वन्ति विग्लापयन्ति च तास्वनेकाः सांस्कृतिक्य एव । यथानेकानेकसंप्रदायजात्युपजातिमत्सु यवनख्रीष्टीयपारसीकहिन्दूसिक्खप्रभृतिषु सांस्कृतिक ऐक्यबोधः, दलितोपेक्षितावमानितेषु शूद्रादिवासिस्त्रीजनेषूच्चाभिलाषेण सहात्मसंमानबोधः, दाक्षिणात्यौदोच्यभाषयोः सामञ्जस्यमित्यादयः । एतासां समाधानं सांस्कृतिक्यः संस्था एव प्रस्तोतुं शक्नुवन्ति । राष्ट्रेऽस्मिन्नासन् विगताब्देष्वनेका एवंविधाः संस्था याभिस्तात्कालिकसमस्यानां समाधानमसीमोद्योगेन समासादितम् । एतासु काश्चन कालकवलिताः, काश्चन च नवीनां जीवनशक्तिमलभमाना नूतनसमस्यानां समाधानेऽसमर्थाः कथङ्कथमपि जीवन्ति । अतोऽधुनैतादृशीनां संस्थाना-

मतीवापेक्षा विद्यते याः पूर्वोक्तकार्याणि नवोत्साहेन संपादयेयुः। एतत्कार्यमभिलक्ष्यैव भारतीयसंस्कृतिसंमेलननाम्नी संस्था मनीषिप्रवरेण राजर्षिपुरुषोत्तमदासटंडनमहाभागेन संघटिता।

एतस्य संमेलनस्य चतुर्थाधिवेशनं विगतमार्चमासे श्रद्धेयानां डा० भगवद्दासमहोदयानां साभापत्ये समपद्यत। अस्मिन् ये प्रस्तावाः स्वीकृतास्तेषु शिक्षाया भारतीकरणमभिलक्ष्य यो हि प्रस्तावः पुरस्कृतः सोऽतीव महत्त्वाधायकः। प्रस्तावस्यायमाशयः—यथा पाश्चात्त्यशिक्षापद्धतिर्ग्रीकरोमनपरम्पराभ्यामाबद्धास्ति, तथैव भारतीयशिक्षापद्धतिरपि भारतीयसंस्कृत्या तस्या आदर्शैश्च प्रभाविता स्यादिति। साम्प्रतं समस्तभारतीयशिक्षाशास्त्रिभिश्चिन्तनीयोऽयं विषयो यदस्यां वर्तमानशिक्षापद्धतौ कास्त्रुटयो विद्यन्ते यत्प्रभाविताः स्नातका हीनवीर्या हीनविद्याविभवा अलसा अननुशिष्टा अनुकरणप्रधाना जाता इति। एतत्परिशोधयितुं विश्वविद्यालयसंघटनसमित्यापि संकेतो विहित आसीत्। अनेन संमेलनेन चात्रत्या शिक्षापद्धतिर्भारतीयसंस्कृत्यानुप्राणिता स्यादित्यभिध्याय दोषाणामेषां परिष्काराय दिङ्निर्देशः कृतः। शिक्षाया भारतीकरणस्य स्वरूपं निर्धारयितुमनेन संमेलनेनैका समितिरति संघटिता, यस्यामाचार्यनरेन्द्रदेवश्रीक्षितिमोहनसेनप्रभृतयो विद्वांसः सन्ति। एतेषां विदुषां नामानि दृष्ट्वा कस्य भारतीयसंस्कृतिप्रेमिणश्चेतसि मोदः सन्तोषश्च न परिस्फुरेतास्। संमेलनमिदं यद्येतत्कार्यं साधयिष्यति तर्ह्यस्य देशस्य महानुपकारः स्यादिति निश्चप्रचम्। संमेलनेनानेन द्वितीयाधिवेशने राजदूतावासेषु भारतीयसंस्कृतौ बद्धानुरागाणां संस्कृतज्ञानां नियोजनाय, विदेशेषु सांस्कृतिकप्रतिनिधिमण्डलानां प्रेषणाय च महत्त्वपूर्णौ द्वौ प्रस्तावौ पारितौ। एवं सामयिकीनां सांस्कृतिकसमस्यानां समाधानदिशि पदनिक्षेपं विदधतोऽस्य संमेलनस्य कार्यकलापानां साफल्यमभिलषामो वयमिति॥

## चीनभारतयोः सम्बन्धः

चीनभारतयोर्व्यापारिकः सांस्कृतिकश्च सम्बन्धोऽतीव प्राचीनः। प्राचीनेतिहासमधीतिभिरस्माभिर्ज्ञायते यदनयोः खीष्टवर्षारम्भात् प्रागपि सांस्कृतिकमादानप्रदानमुत्साहिनां दृढप्रतिज्ञानां यात्रिणां समुद्योगेनाबाधरूपेण प्रचचाल। व्यासकौटिल्यचरककालिदासवराहमिहिरादीनां चिरपरिचितोऽयं देश आसीत्। एवमेव फाहियान-शुआन्चाङ्-इत्सिंगप्रभृतीनां

चीनदेशीययात्रिणाम्, काश्यपमातङ्ग-कुमारजीव-परमार्थप्रभृतीनां भारतीय-मनीषिणां च समुद्योगेन चीनसाहित्ये भारतीयधर्मदर्शनायुर्वेदादीनां महान् ग्रन्थराशिरनूदितो मूलरूपेण च विद्यते।

राष्ट्रस्य पारतन्त्र्यवेलायां विस्मृता एते बान्धवा अधुना संस्मर्यन्तेऽस्माभिः। पुरातनस्य मैत्रीभावस्य पुनरुज्जीवनाय सांस्कृतिकप्रतिनिधि-मण्डलानामादानप्रदाने चीनभारतयोः शासनाभ्यां साम्प्रतमेवाकारिषाताम्। विगते वर्षे चीनदेशीयशिष्टमण्डलोऽत्र समायातः। ऐषमश्च मईजून-मासयोर्भारतीयः शिष्टमण्डलस्तत्र गतवान्, यस्मिन् आचार्यनरेन्द्रदेव-डा० अमरनाथझा-डा० बागचीप्रभृतयो विशिष्टा मनीषिणः पत्रकारादयश्चान्ये समवेता आसन्।

चीनभारतयोः प्राचीनतरस्य तस्य सम्बन्धस्य नूतनीकरणाय समुद्योगोऽयं प्रशंसार्हः। यवनाक्रमणैर्विवशा बौद्धभिक्षवो धर्मसाहित्ययो रक्षणार्थं भारताद् बहिर्नेपालतिब्बतचीनादिदेशेषु प्रसृता अभूवन्। एभिर्भिक्षुभिरेषु देशेषु यवनाक्रमेण सहस्रशो ग्रन्थरत्नानि संरक्ष्य नीतानि। तानि मूलरूपेण तत्तद्देशीयभाषास्वनुवादरूपेण च संरक्षितानि तिष्ठन्ति। सुरक्षितानामेषां निधिभूतानां ग्रन्थानां पुनरत्र प्रत्यावर्तनमपेक्षितं विद्यते, येन प्राचीनभारतीयसाहित्यस्य संस्कृतेश्च सर्वाङ्गपूर्णमध्ययनं शोधो विकासश्च स्यात्। पुरातनीं मैत्रीं पुनरुज्जीवयितुं यो भारतशासनस्य वर्तमानः प्रयासो दृश्यतेऽभिनन्दनीयः सः। अधुनेदमावश्यकं प्रतिभाति यद्भारतीय-शासकैः प्रतिभाशालिनो विद्यार्थिनश्चीनतिब्बताद्येशियादेशभाषाणामध्यय-नार्थं प्रोत्साहिताः स्युरिति। एत एव चीनभारतीयपरम्पराभिज्ञा भारतीया युवानश्चीनादिदेशेषु गत्वा स्वसाहित्यमुद्धरिष्यन्ति, अथ च तयोः प्राचीनं सम्बन्धं पुनरुज्जीवयिष्यन्ति। चीनभारतयोः सांस्कृतिकसम्बन्धे सुदृढे सति वर्मा-श्याम-हिन्दचीनादिभिः पूर्वैशियादेशैरपि सोऽनायासेन सेत्स्यतीति किमु नाम वक्तव्यम्॥

## प्राचीनभारते शल्यचिकित्सा

सुश्रुतसंहितायां शल्यचिकित्सायाः सर्वाङ्गपूर्णं विवरणमुपस्थापितमिति साम्प्रत पाश्चात्यविद्वद्भिरपि मुक्तकण्ठमङ्गीक्रियते। 'लैफ्टिनेन्ट कर्नल ग्रीन आर्मितेज' इत्याख्येन महाशयेन सुश्रुते वर्णितां शल्यचिकित्सामधिकृत्य सुबहूक्तम्। अरुन्तुदानां शल्यचिकित्सानामारम्भे आधुनिक-'क्लोरोफार्म'-

सदृशस्य संमोहिनीनामकस्य भेषजस्य जिघ्रापणस्योल्लेखः प्राचीनायुर्वेद-ग्रन्थेषु समवलोक्यते । एवं सिद्धान्तरूपेण शल्यचिकित्साया विवरण-मस्त्येव शास्त्रेषु । साम्प्रतं तस्य प्रायोगिकस्वरूपस्यापि दिग्दर्शकान्यैति-ह्यासिकानि प्रमाणानि दृक्पथमावर्जयन्ति । अमेरिकातः प्रकाशितस्य 'मेडिकल बुलेटिन' इति नामकस्य पत्रस्य विगतागस्तमासीयेऽङ्के प्रकाशिता-देकस्माल्लेखादेष विषयः स्फुटीभवति । प्राचीनं चित्रमेकमधिगतम्, यस्मिन् द्वौ भिषजौ धाराधीशस्य भोजनृपस्य मस्तिष्कस्य शल्यचिकित्सां कुर्वन्तौ चित्रितौ । मस्तिष्के कश्चिद् गुल्मः संजातः । तत्रैव शल्यक्रिया ताभ्यां विहिता । नूतनशल्यक्रियायां मस्तिष्कस्य शल्यचिकित्सा कठिनतरोत्कृष्टतमा च स्वीकृता । भोजनृपः १०१० तमे वर्षे राजसिंहासनमधिरूढः । एवं च भारते सहस्रवर्षेभ्यः प्राङ्मस्तिष्कस्य शल्यचिकित्सायाः प्रायोगिकरूपस्य प्रमाणमेतत् । सहस्रवर्षाभ्यन्तरे भारतीयायाः प्राचीनायाः शल्यचिकित्सायाः प्रायोगिकं रूपं कदा कथङ्कारं निलीनमित्यायुर्वेदविद्भिर्विचारणीयम् ॥

## उपरागविज्ञानम्

पुराकालत एव मानवैः सूर्यस्य खग्रासः साश्चर्यमवालोक्यत । ११४० ईशवीये लन्दननगरे यदा सूर्यस्य खग्रासः समपद्यत, तदा आंग्ला भीत-भीताः स्थाल्यौदनमपि त्यक्त्वा पलायिताः । भारतीयैर्मनीषिभिस्तु वैदिक-कालत एव ग्रहणविज्ञानमाविष्कृतम् । श्रूयते हि ऋग्वेदे तमसावृतस्य सूर्यस्यात्रेः प्रयत्नेन मोक्षः—

अत्रिः सूर्यस्य दिवि चक्षुराधात्
स्वर्भानोरप माया अघुक्षत् ॥
यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविन्दन् नह्यन्ये अशक्नुवन् ॥ इति ।

(ऋ० ५।४०।८-९)

परिवर्तनशीलमिदं जगत् । परवर्तिनि काले भारतीया दानपुण्याभ्यां ग्रहणमोक्षमकामयन्त । यूरोपीयास्तु ज्ञानेन तद्रहस्यमजिज्ञासिषन्त ।

विगतसूर्यग्रहणावसरे भारते दानपुण्याभ्यां सह ज्ञानस्यापि योगः संजातः । भारतीया वैज्ञानिकाः 'बसरा'(ईराकदेशीये)नगरे ग्रहणस्य प्रतिबिम्बादिग्रहणार्थमगच्छन् । किन्तु तत्र ऋतुवैपरीत्येन दुर्दिनाक्रान्त-

त्वाद् ग्रहणदर्शने सफला नाभवन्। आकाशवाणीविशेषज्ञैराकाशवाणी-लहरीषु ऋतुविशेषज्ञैश्च ऋतौ सूर्यग्रहणस्य कीदृशः प्रभावः पततीत्यस्याध्ययनं कृतम्।

केनचित्पापेन शापेन वा न ग्रहणस्याविर्भावः। गणितेन सहस्रवर्षाणि यावद्विगतानामागामिनां च ग्रहणानां यथार्थं ज्ञानं हस्तामलकवदधिगन्तुं शक्यते।

अग्रिमः सूर्यस्य खग्रासः १९७० ईशवीये लगिष्यति। एकस्यां शताब्द्यां ३७५ ग्रहणानि भवन्ति। चक्रमेकम् १८ वर्षं ११$\frac{१}{३}$ दिनेषु परावर्तते। एकस्मिन् चक्रे ७०–७१ संख्याकानि ग्रहणानि भवन्ति। तेषु ४१ सूर्यस्य, २८ चन्द्रस्य च भवन्ति। एवं च माघकवेः—

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्॥

इति रिक्तं वचः।

पृथिव्याः कस्माच्चिदप्येकस्मात् स्थानात् ७० ग्रहणेषु सूर्यस्य सप्त, चन्द्रस्य चाष्टादश ग्रहणान्यवलोक्यन्ते। एतदेव पूर्वोक्ताया माघकवेः कल्पनाया आधारोऽभूत्। शिष्टानि ४५ ग्रहणानि विभिन्नैः स्थानैरवलोक्यन्ते। ग्रहणचक्रं २८ वर्षं ३४८ दिनानाम्, ५२१ वर्षाणामपि च भवति। अस्य गणितमधुनैतावत्परिष्कृतं सुव्यवस्थितं च वर्तते, यत्कलाकाष्ठादिषु स्पर्शमोक्षकालः, अङ्गुलिवितस्त्यादिषु च दर्शनस्थानं निर्देष्टुं पार्यते।

सूर्यस्य खग्रासावस्था क्षण-(मिनट)त्रयादूर्ध्वं न तिष्ठति। यस्मात् स्थानादेकदा सूर्यस्य खग्रासो दृष्टस्तस्मादेव स्थानात् कतिपयशताब्द्यनन्तरमेव पुनस्तदवलोक्यते। लन्दननगरे ११४० ई० वर्षानन्तरं १७१५ ई० वर्षे पुनस्तदवलोकितम्। अतः कस्यचिदेकस्थानस्थितस्य मानवस्य जीवनकाले एकाधिकवारं सूर्यस्य खग्रासोऽद्भुत एव योगो मन्तव्यः।

सूर्यग्रहणे सूर्यस्य बिम्बश्चन्द्रगोलेन ग्रस्यते। चन्द्रग्रहणे च चन्द्रबिम्बं पृथिवीगोलेन ग्रस्तं भवति। छायाक्षेत्रं यदा धरायां नावतिष्ठते, तदा कङ्कणग्रहणं भवति। एतच्च भारतीयैर्मनीषिभिः श्रीभास्कराचार्य-कमलाकरप्रभृतिभिः स्वीयेषु सिद्धान्तशिरोमणि-सिद्धान्ततत्त्वविवेकप्रभृतिषु ग्रन्थेष्वपि विवृतप्रायम्। श्रीकमलाकरेण सिद्धान्ततत्त्वविवेके वलयग्रहण-

स्याथ च चन्द्रसूर्यग्रहणवत् पृथिवीग्रहणस्याप्युल्लेखः कृतः। भास्कराचार्येण सिद्धान्तशिरोमणौ ग्रहणविषयकशास्त्रविज्ञानविरोधपरिहारः—

"राहुः कुभामण्डलगः शशाङ्कं
शशाङ्कगश्छादयतीनबिम्बम्"

इत्यादिना कृतः।

अद्भुतमिदं सम्पूर्णमुपरागविज्ञानम्। कुरुक्षेत्रादिष्ववगाहनमात्रेण नहि तस्य परिज्ञानं भवितुमर्हति। २१६८ ईशवीयेऽभूतपूर्वं प्रभूतकालव्यापि सूर्यग्रहणं समेष्यति। तद्दर्शनं च मद्राससमीपे भविष्यति॥

## वेदे शाखाभेदः

"एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृचं नवधाथर्वणो वेदः" इत्युक्तं हि भगवता पतञ्जलिना पस्पशायाम्। वाक्यपदीयकारभर्तृहरिमते तु ऋग्वेदस्य पञ्चदश शाखाः। अणुभाष्योद्धृत(१।१।१)स्कन्दपुराणे आनन्दसंहितायां च चतुर्विंशतिशाखानामुल्लेखः। श्रीभगवद्दत्तमहाशयैः सप्तविंशतिशाखानां नामान्युट्टङ्कितानि, श्रीरामगोविन्दत्रिवेदिमहाशयैश्च स्वकीये 'वैदिकसाहित्य'-नामके ग्रन्थे ऋग्वेदीयानां चतुस्त्रिंशच्छाखानां नामान्युद्धृतानि सन्ति। आसु शाखासु साम्प्रतं शाकलानाम्नी एकैव शाखोपलभ्यते, यस्याः संहिता ऋग्वेदसंहितेति नाम्नैव प्रसिद्धतरा।

यजुर्वेदस्य प्रपञ्चहृदयानुसारं ३६ शाखाः, दिव्यावदानमते १०५, सूतसंहिताब्रह्माण्डपुराणस्कन्दपुराणेषु १०७, मुक्तिकोपनिषदि १०९, शौनकचरणव्यूहमते च ८६ शाखाः सन्ति। तासु सप्तदश शुक्लयजुर्वेदीयाः। प्रतिज्ञापरिशिष्ट-वायुपुराण-ब्रह्माण्डपुराण-चरणव्यूह-सायणाचार्यमते तु पञ्चदश, आथर्वणपरिशिष्टे (४९ तमे) च दशैव। वायु-ब्रह्माण्डपुराणयोः कृष्णयजुर्वेदस्य ८६ शाखाः, आथर्वणपरिशिष्टे (४९ तमे) च चतुर्दशैव। साम्प्रतं शुक्लयजुर्वेदस्य द्वे शाखे, कृष्णयजुर्वेदस्य च चतस्रः शाखा उपलभ्यन्ते, यासां संहिता माध्यन्दिन(वाजसनेय)-काण्व-तैत्तिरीय-मैत्रायणी-कपिष्ठलकठ-काठकाख्याः सन्ति।

दिव्यावदानमते सामवेदस्य १०८० शाखाः। आसु प्रपञ्चहृदयकारकाले द्वादशैवोपलब्धा आसन्। साम्प्रतं तिसृणामेव शाखानां संहिता उपलभ्यन्ते, ताश्च कौथुमराणायणीयजैमिनीयनामधेयाः।

अहिर्बुध्न्यसंहितायामथर्ववेदस्य पञ्च शाखाः। किन्तु प्रायोऽन्येषु बहुषु ग्रन्थेषु नवशाखानामुल्लेखः। यद्यपि संस्कृतवाङ्मयेऽथर्ववेदस्य २० शाखानां नामान्युपलभ्यन्ते, तथापि साम्प्रतं द्वयोः शाखयोः शौनकपैप्पलादनाम्न्यौ द्वे संहिते एव समुपलभ्येते।

इत्थं महाभाष्यकारमतेन वर्तमानासु ११३० वैदिकसंहितासु साम्प्रतं द्वादशैवोपलभ्यन्ते। वर्तते च वैदिकसंहितासंख्यानामादिविषये महान् विवादः॥

### आद्यः शाखाप्रवचनकर्ता

भगवता वेदव्यासेन वेदानां शाखाविभाग उपज्ञातोऽत एव तत्रभवतो वेदव्यासेति सार्थकं नामेति श्रूयते। किन्तु—"अपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति" (३।३।३१) इति वेदान्तसूत्रशाङ्करभाष्यवचनात्, "अथ कालविपर्यासाद् युगभेदसमुद्भवे॥....त्रेतादौ सत्त्वसंकोचाद्रजसि प्रविजृम्भिते। अपान्तरतमा नाम मुनिर्वाक्संभवो हरेः॥....उदभूत्तत्र धीरूपमृग्यजुःसामसंकुलम्। विष्णुसंकल्पसंभूतमेतद् वाच्यायनेरितम्॥" (११।५०,५३,५८) इत्यहिर्बुध्न्यसंहितोक्तितः, "अपान्तरतमा नाम सुतो वाक्संभवः प्रभुः। भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः॥ तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः। वेदाख्याने श्रुतिः कार्या त्वया मतिमतांवर॥ तस्मात् कुरु यथाऽऽज्ञप्तं ममैतद्वचनं मुने। तेन भिन्नास्तदा वेदा मनोः स्वायम्भुवेऽन्तरे॥....अपान्तरतमाश्चैव वेदाचार्यः स उच्यते। प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥" (शान्ति० ३४९।३९-४२,६६) इति महाभारतवचनाच्च ज्ञायते यद्वेदाचार्यप्राचीनगर्भवाच्यायनेत्यादिनामभिः प्रसिद्धेन वाक्पुत्रेणापान्तरतमसा पुराणर्षिणा त्रेतादावेवेदम्प्रथमतया वेदानां शाखाविभागः कृतः। स एष विभागः कालमहिम्ना विलुप्तः पुनरपि कृष्णद्वैपायनेन व्यवस्थामापादितो न तूपज्ञात इति। अपान्तरतमा एव कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः संबभूवेतीति त्वन्यत्॥

### सप्तर्षयः

प्रत्येकस्मिन् मन्वन्तरे विभिन्नाः सप्तर्षयो भवन्तीति पुराणेषु मन्वन्तरप्रकरणेषु स्पष्टम्। अस्मिन् प्रवर्तमाने वैवस्वतमन्वन्तरे तु शतपथब्राह्मणे

महाभारते च सप्तर्षिनामसु किञ्चिद् वैभिन्न्यमवलोक्यते। तथा हि—"सप्तर्षयो भरद्वाजः कश्यपो गौतमोऽत्रिकः। विश्वामित्रो जमदग्निर्वसिष्ठः सप्तमः स्मृतः॥" इति शतपथब्राह्मणानुसारीणि नामानि, महाभारतानुसारं च—"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः॥" इति सप्तर्षिनामानि। कल्पान्तरीयोऽयं विभेद इत्येवात्र समाधानम्॥

## अजनाभं वर्षम्

भारतवर्षस्य प्राचीनं नाम 'अजनाभ' इति। उक्तं हि भागवते—'भरतस्तु महाभागः···अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति" (भाग० ५।७।१-३) इति॥

## संस्कृतविश्वपरिषत्

विगतमार्गशीर्षकृष्णत्रयोदशीचतुर्दश्योः (१५-१६ नवम्बर १९५२) भूतभावनस्य विश्वेश्वरस्याधिवसतौ वाराणस्यां संस्कृतविश्वपरिषदो द्वितीयाधिवेशनं महता समारोहेण संपन्नम्। अस्य विवरणमत्रैवाङ्के प्रकाशितं विद्यते। निखिले जगति संस्कृतस्य तदनुबन्धिनीनां च भाषाणामध्ययनाध्यापनयोः प्रचाराय प्रोत्साहनाय च, समेषां संस्कृतज्ञानां संस्कृतानुरागिणां च परस्परं सहयोगसंपादनाय, समये समये तेषामेकत्रीकरणाय, एतत्संबन्धिगवेषणाकार्यप्रोत्साहनाय, तत्र व्यापृतानां संस्थानां तत्कार्यजातानां च परस्परं परिचयाय समन्वयाय च केन्द्रीभूताया एकस्याः संस्थाया अतीवावश्यकतेति मनसि निधायैवास्याः परिषदः प्राणप्रतिष्ठा समपाद्यत। एषा परिषत् स्वकीयेऽस्मिन् कार्यक्षेत्रे सफलीभवलक्ष्येति देशविदेशानां विभिन्नेभ्यो दिग्विभागेभ्यः समागताभ्यः शुभाशंसाभ्यः, अध्यक्षादिभाषणेभ्यः, प्रस्तावेभ्यः, प्रतिनिधिभाषणेभ्यश्च स्पष्टं परिलक्ष्यते।

अस्याधिवेशनस्य कार्यपद्धतौ संस्कृतस्यैव प्राधान्यमवर्तत। अत एव संस्कृतानुरागिणां संस्कृतज्ञानां च राजपुरुषाणामथ च संस्कृतविदुषामभूतपूर्वोऽत्र संमर्द आसीत्। अखिलभारतीयप्राच्यविद्यामहासंमेलने प्राचीनप्रणालीमनुसरतां संस्कृतविदुषां नैव याथातथ्येन प्रातिनिध्यं भवति,

तत्रांग्लभाषाप्राधान्यात् । अखिलभारतीयसंस्कृतसंमेलनं च साम्प्रतं सुप्तप्रायमिव संस्कृतप्रचारकार्ये, अथ च जनतायां तस्य तादृशः प्रभावोऽपि नास्ति । उभयविधदोषरहितैषा परिषत्तु संस्कृतमाध्यमेन तज्ज्ञानां पूर्णं प्रातिनिध्यं कुर्वाणा सत्यमेव स्वनामधेयं सार्थकं कृतवती ।

संस्कृतविश्वपरिषद उद्देश्यसिद्ध्यर्थमद्यावधि तदीया अष्टादश शाखा देशस्य विभिन्नेषु नगरेषु संस्थापिताः सन्ति । अस्मिन्नधिवेशने च स्वीकृतस्य प्रस्तावस्य प्रथमेष्वंशत्रयेषु प्राध्यापकाध्यापकानां परस्परं विनिमयः, संस्कृताप्राधान्यानुशोचनम्, माध्यमिकशिक्षासु संस्कृतस्यानिवार्यता, भारते विभिन्नेषु प्रान्तेषु देशान्तरेषु च संस्कृतस्य प्रचारायाध्यापकवृत्तेः स्थापनमित्येवमादयो महत्त्वशालिन उपायाः प्रदर्शिताः । संस्कृतस्य तदनुबन्धिनीनां च भाषाणामध्ययनाध्यापनार्थं प्रचारार्थं तत्र समापतन्तीनां बाधानामपनयनार्थं च महत्त्वपूर्णो विचारविमर्शः समजायत । सर्वानेतान् विचारान् संकलय्य यदि व्यवस्थितरीत्या कश्चित् कार्यक्रमो निश्चीयेत तर्हि नचिरादेव संस्कृतं प्रति जनतायां शासकवर्गेषु च प्ररूढो विरागभावोऽपसरेदथ च संस्कृतोन्नतिपरिपन्थिनः प्रत्यूहा अपि पराकृताः स्युः । अस्मिन्ननुबन्धे राष्ट्रपतेर्महामान्यस्य श्रीराजेन्द्रप्रसादमहाभागस्येयमुक्तिरविस्मरणीया— "तन्मूल्यं त्वस्त्येव, सर्वदा च स्थास्यति । सभ्यतासंरक्षणाय, किमन्यद्; मानवजातेरस्तित्वार्थमिदमावश्यकं यदध्यात्मशीले शिक्षापद्धतौ समन्विते स्याताम् । एतत्समन्वयस्य संस्कृताध्ययनसमं प्रभावि साधनान्तरं न संभवतीति तावन्मम मतम्" इति ।

स्वकीये भाषणे राष्ट्रपतिमहोदयेन संस्कृतस्य महत्ता, तस्य समृद्धिह्रासयोरितिहासः, पारतन्त्र्यवेलायामपि तस्य संरक्षणमित्यादयो विषया विवेचिता एव; साम्प्रतं संस्कृताध्ययनाध्यापनकर्मणि प्रादुर्भूतानां बाधानां स्वभावोक्त्या यद्धि विवरणमुपस्थापितं तद् राष्ट्रियाणां समासामपि समस्यानां सूक्ष्मेक्षिकया निरीक्षणं कुर्वतस्तस्य सत्यमेव राष्ट्रपतित्वं ख्यापयति । व्याधेर्निदानं विधाय तदुपशमाय तेनोक्तम्—"भारतस्य राज्यसर्वकाराणां कर्तव्यमिदं यत्ते स्वकोषेभ्यः संस्कृताध्ययनाय पर्याप्तं साहाय्यं दातुमारभन्तामिति । अपि च, अत्रत्या उद्योगपतयोऽपीदं स्वकर्तव्यं मन्येरन् यत्ते स्वदेयदानस्य कियच्चिदंशं विश्वविद्यालयेषु संस्कृताध्ययनार्थं विशिष्टपीठिकास्थापनाय ददतु" इति ।

यदीदमभीष्टं यदध्यात्मशीले शिक्षापद्धतौ समन्विते स्याताम्, यदि च विनाशोन्मुखी प्राचीना गुरुकुलपद्धतिरभिरक्षणीया, तर्हि सम्पूर्णे भारते विप्रकीर्णानां निःश्वसन्तीनां पाठशालानां पार्थक्येन संरक्षणमावश्यकम्; अथ च तत्र शास्त्रीयाध्ययनेन सह केषाञ्चिदाधुनिकविषयाणामनुप्रवेशोऽप्यावश्यक एव। एतदर्थं च राष्ट्रपतिप्रदर्शितं राज्यसर्वकारैर्धनिभिश्च प्रदेयं पर्याप्तमार्थिकं साहाय्यमेवैकमात्रं शरणम्। एतदभावे तासां जीवनस्थितिरपि संदिग्धा, तत्र नूतनविषयाध्ययनप्रबन्धस्य तु कथैव का ? अमुमेवाभिप्रायं मनसि निधाय प्रस्तावस्य चतुर्थपञ्चमांशावारचितौ स्तः।

भारतस्य विभिन्नेषु राज्येषु कतिपया राजकीयाः स्वतन्त्रा वा संस्कृत-परीक्षासंस्थाः सन्ति। यदधीनासु स्वतन्त्रासु वा पाठशालास्वधीयाना विद्यार्थिनस्ताभ्य उपाधिप्रमाणपत्रं लभन्ते। आसां पाठशालानां तत्रत्य-च्छात्राणां च शोचनीया दशा। तत्रापि च क्वचित् क्वचिन्नूतनपाठ्यक्रमो निर्धारितः। तमेव भारं वोढुमसहमानानामासां पाठशालानां तत्रत्यानां परीक्षार्थिनां चातीव तीव्रवेगेन संख्याह्रासो भवन्नस्ति। एवं ह्रासोन्मुखायां सत्यामपि संस्कृतपरीक्षाप्रणाल्यामाभिः संस्थाभिः स्वेतरपरीक्षाणां परस्परं नैव मान्यता दीयते, परीक्षासूपाधिषु च महद्वैभिन्न्यं वर्तते। समस्याया एतस्याः समाधानार्थमुत्तरप्रदेशप्रशासनेन १९५० ई० वर्षे प्रयत्नः कृतः। किन्तु माननीयश्रीसम्पूर्णानन्दमहोदयानां शब्देषु—"ततः परं प्रेषितेष्वपि वहुषु संस्मारकपत्रेषु केनचित् प्रशासनेन विश्वविद्यालयेन वाऽस्यां दिशाया-मेकमपि पदं न निक्षिप्तम्" इत्यत्रैव तस्य पर्यवसानं जातम्। तममुमेव प्रयत्नं पुनरुज्जीवयितुं प्रस्तावे पञ्चमांशस्यान्तिमधारायाः समुल्लेखो वर्तते।

इत्थं स्वकीयजीवनस्य प्रारम्भिकदिवसेष्वेवैषा परिषत् संस्कृतस्य प्रचारप्रतिष्ठे, संस्कृतानां संपूर्णस्य वर्गस्य प्रातिनिध्यसंपादनम्, संह्रसन्तीनां पाठशालानां जीवनरक्षणमित्यादिकासु तत्रत्यासु समासु समस्यासु स्वकीयं दृष्टिनिक्षेपं विहितवती। तत्रैषा परिषत् प्रथमं संस्कृतह्रासावरोधप्रयासे साफल्यमासाद्य शनैः शनैः संस्कृतोन्नतिसंपत्तये गवेषणादिकर्मस्वपि प्रवृत्ता भविष्यति। साम्प्रतं हि पण्डितमण्डलीषु नूतनरीत्याऽनुसन्धानप्रवृत्तिर्नैव प्राधान्येनावलोक्यते। गुरुपरम्पराप्राप्तस्य शास्त्रस्य संरक्षणमेव तेषां परमं तपः। आसीदस्यैव कैदाचिदावश्यकता। साम्प्रतं तु शास्त्रीयगभीरज्ञानेन सह तत्र निहितानां निगूढानां तत्त्वानां नूतनतुलनात्मकाध्ययनादिपद्धत्या जनतायाः पुरतः समुपस्थापनं नितान्तमपेक्ष्यते। अमूमनुसन्धानप्रवृत्ति

जागरयितुं संस्कृतवाङ्मयस्य विभिन्नासु शाखासु विचारविनिमयार्थं चाखिलभारतीयप्राच्यविद्यामहासंमेलनवदस्याः परिषदः कार्यक्रमोऽपि विभिन्नासु शाखागोष्ठीषु विभक्तव्यो भविष्यति। पुराणानां प्रामाणिकसंस्करणानि, हस्तलेखानां संग्रहः, विदेशस्थितग्रन्थरत्नानां प्रामाणिकप्रतिलिपिसंपादनम्, संस्कृतग्रन्थानां विदेशीयासु देशीयासु च विभिन्नासु भाषास्वनुवाद इत्येवमादीनि महान्ति गवेषणाकार्याणि सर्वासां संस्थानां सहयोगमन्तरा नैव सत्वरं संपूर्णानि भवन्ति। अतस्तत्र सर्वजनीनसहयोगप्राप्त्यै परिषदेषा बद्धादरा भविष्यति।

अस्याः परिषदः संस्थापकैरुत्तरप्रदेशराज्यपालैर्महामहिमश्रीकन्हैयालालमाणिकलालमुंशिमहाशयैः, संस्कृतवाङ्मयसमुन्नयनमहामखे गृहीतदीक्षैरुत्तरप्रदेशगृहमन्त्रिभिर्माननीयश्रीसम्पूर्णानन्दमहानुभावैश्च सोत्साहं सादरातिरेकं संवर्द्धमाना, भारतीयसभ्यतासंस्कृत्योः सुरभारत्याश्च परमोपासकैर्भारतस्यानुरूपराष्ट्रपतिभिर्महामान्यश्रीराजेन्द्रप्रसादमहाभागैः समनुगृह्यमाणा च संस्कृतविश्वपरिषदेषा निःसन्देहं निर्विवादं च स्वकीयेषूद्देश्येषु सफला भविष्यतीति सुभृशमाशास्यते॥

## नृत्यनाटकसंगीतप्रतिष्ठानम्

विगतमाघशुक्लचतुर्दश्यां बुधवासरे (२८।१।५३) भारतराजधान्यां दिल्लीनगर्यां राष्ट्रपतिना महामान्येन श्रीराजेन्द्रप्रसादमहाभागेन नृत्यनाटकसंगीतप्रतिष्ठानस्योद्घाटनं व्यधायि। अस्मिन्नवसरे केन्द्रीयशिक्षामन्त्रिणा माननीयेन मौलाना-अबुलकलाम-आजादमहोदयेनास्य प्रतिष्ठानस्येमान्युद्देश्यानि स्पष्टीकृतानि—

(१) भारतीयनृत्यनाटकसंगीतविषयकस्य गवेषणाकार्यस्य प्रोत्साहनं विस्तारस्तदर्थं ग्रन्थालयसंग्रहालययोर्निर्माणं च।

(२) नृत्यनाटकसंगीतशैलीनां परिष्काराय दार्ढ्याय च प्रादेशिकविचारगोष्ठीनामायोजनम्।

(३) समुचितेषु स्थानेषु नाट्यकेन्द्राणां स्थापनम्।

(४) नाट्यकलायास्तस्या विभिन्नानामङ्गानां च शिक्षायै शिक्षणसंस्थानां निर्माणाय प्रोत्साहनदानम्।

(५) भारतीयनृत्यनाटकसंगीतसाहित्यस्य प्रकाशनम्।

(६) विभिन्नेषु प्रदेशेषु लोकनृत्यानां लोकगीतानां च विकासस्य सुप्रबन्धः ।

(७) नृत्यनाटकसंगीतसंबद्धानामखिलभारतीयमहोत्सवानामारम्भः प्रादेशिकोत्सवानां प्रोत्साहनं च ।

(८) नृत्यनाटकसंगीतेषु लब्धप्रतिष्ठानां कलाकाराणां पुरस्कारसत्कारादिभिर्मान्यताप्रदानम् ।

(९) नृत्यनाटकसंगीतक्षेत्रेष्वितरैर्देशैः सह सांस्कृतिकविनिमयसंपादनमिति ।

स्वतन्त्रताप्राप्त्यनन्तरं यासां समस्यानां समाधानदिशि विशेषतयाऽवधातव्यमासीत्, तासु सांस्कृतिककार्यकलापस्य पुनरुज्जीवनमतीव महत्त्वाधायकमभूत् । विगतयोः शताब्द्योर्विदेशीयशासनेन भारते ललितकलानामुन्नयनकर्मणि नावहितम्, यद्यपि तदानीन्तनैर्भारतीयैः शासकवर्गैर्यथाकथञ्चित् तासां संरक्षणमाचरितम् । तदपर्याप्तमासीदेव, स्वातन्त्र्यवेलायां समायातायामकिञ्चित्करस्य अस्याप्याधारस्य विलोपो जातः । अस्यां दशायां स्वतन्त्रभारतस्य शासनं समस्यामेनां समाधातुं बद्धपरिकरं स्यादिति समुचितमेव ।

विद्वद्भिर्विशेषज्ञैश्च सह गभीरविचारविनिमयानन्तरं केन्द्रीयशासनेन नृत्यनाटकसंगीतसाहित्यकलासंबन्धिनां त्रयाणां प्रतिष्ठानानां निर्माणस्य निश्चयः कृतः । तदनुरूपमेव प्रथममेतत् प्रतिष्ठानं जन्म लेभे । यद्यपि देशीयराज्येषु ललितकलानामेतावत्कालपर्यन्तं संरक्षणं जायते स्म, तथापि तत्र कलायाः क्षेत्रं संकुचितमभूत्, अस्याः स्वरूपे वैविध्यमव्यवस्था क्वचिच्च स्वरूपहानिश्चाप्यजायन्त । अस्याः केन्द्रीयसंस्थाया अवलोक्य मौलिकानुदेश्यान् दोषाणामेषामपास्तिः स्यादित्याशास्यते । केन्द्रीयशासनेनाभीष्टानामेकादशगवेषणासंस्थानामिवावशिष्टे द्वे प्रतिष्ठाने अपि शीघ्रमेव स्थापिते भविष्यत इति च संभाव्यते ।

पञ्चाशद्वर्षेभ्यः पूर्वं पाश्चात्त्यविद्वद्भिः संपूर्णे भारते हस्तलेखसंग्रहाय भागीरथः प्रयत्नो विहित आसीत् । सोऽधुना विरतिं गतः । भारतीयगणतन्त्रमहामात्येन महामान्यश्रीजवाहरलालनेहरूमहाभागेन भारतस्येतिवृत्तं वर्णयता कथितमासीत्—"अमूल्यो हस्तलिखितग्रन्थराशिरस्माकं राष्ट्रेऽधुनाप्युपेक्षितदशायामितस्ततः पतितः समुच्छ्वसिति । स्वातन्त्र्य-

वेलायां समायातायां यान्यभीष्टान्यस्माकं भविष्यन्ति, तेष्वस्यामूल्य-ग्रन्थराशेरुद्धारोऽपि प्रधानतमं कार्यम्" इति। साम्प्रतमनिश्चितस्थितिकेषु कश्मीर-नेपाल-तिब्बत-भोटादिदेशेषु हस्तलेखगवेषणासंग्रहकार्यस्य स्वतः सिद्धं वैशिष्ट्यमवधार्य केन्द्रीयशासनमेतासां नूतनस्थापितानां च संस्थानां साहाय्येन लुप्यमानस्यैतस्य राष्ट्रियनिधेः संरक्षणाय सावहितं भविष्यतीत्याशास्यते ॥

## स्पेनदेशीया वीरबाला

विगतपौषशुक्लदशम्यां शुक्रवासरे (२६।१२।५२) स्पेनदेशस्य वारसिलौनासमीपस्थे मैनरेसानगरे तत्रत्यया चत्वारिंशत्सहस्रमितया शोकसन्तप्तया जनतया सप्ताहत्रयात् पूर्वं दुराचारिणः कामुकस्य करवालिकया क्षतविक्षतायै देहपावित्र्यरक्षापणेन दत्तप्राणायै द्वादशवर्षीयायै वीरबालायै श्रद्धाञ्जलिः समर्पितः। स्पेनदेशीयाया अस्या बालाया नाम 'जोसिफिना बीलासेर अलसिमा' इत्यासीत्। स्वनामधन्यया किशोरिकयाऽनयाऽदम्येनोत्साहेन कृतः कामुकतायाः प्रतिरोधो नारीजातेर्गौरवाय गर्वाय चालम्। कामान्धस्य दुरात्मनो करवालिकया देहे क्षतविक्षतेऽपि पावित्र्यं न जिहासितमनया। एतादृशीनामेव नारीणां माहात्म्येन देशस्य समाजस्य च वर्चः, नैतिकताया मूल्यं चोन्नतिशिखरमवलम्बते ॥

## ब्राह्मणारण्यकोपनिषदः

यावत्यः संहितास्तावन्त्येव ब्राह्मणान्यारण्यकान्युपनिषदश्चेति संप्रदायः। किन्तु यथा साम्प्रतं द्वादशैव संहिता उपलभ्यन्ते, तथैव ब्राह्मणान्यप्येकोनविंशतिरेवोपलभ्यन्ते। तेष्वैतरेय-कौषीतकि-(शाङ्खायन)-नामके द्वे ऋग्वेदस्य, तैत्तिरीय-मैत्रायणी-काठकनामानि त्रीणि कृष्णयजुर्वेदस्य, माध्यन्दिनकाण्वशाखयोः शतपथनामके द्वे शुक्लयजुर्वेदस्य; ताण्ड्य-महाब्राह्मण (पञ्चविंशब्राह्मण—महाब्राह्मण—प्रौढब्राह्मणेत्यनर्थान्तरम्)-षड्विंशब्राह्मण(अस्यैवान्तिमो भागः 'अद्भुतब्राह्मणम्', इति कथ्यते)-मन्त्रब्राह्मण-दैवतब्राह्मण(छान्दोग्योपनिषदपि छान्दोग्यब्राह्मणनाम्ना परिचीयते, किन्तु सोपनिषत्स्वन्तर्भवति। अस्या एवैको भागो दैवतब्राह्मण-नाम्ना परिचीयते, देवताध्याय इत्यपि तस्य नाम। इमानि चत्वारि

ब्राह्मणानि छान्दोग्योपनिषच्च चत्वारिंशत्प्रपाठकात्मकस्य कौथुमशाखाया एकस्यैव ब्राह्मणस्य भागविशेषाणि । पूर्वं सर्वेषामेषां समुदायरूपं छान्दोग्य-ब्राह्मणनामधेयमेकमेव ब्राह्मणमासीदिति श्रीसत्यव्रतसामश्रमिप्रभृतयः)-आर्षेयब्राह्मण–सामविधानब्राह्मण–संहितोपनिषद्ब्राह्मण–वंशब्राह्मण-जैमिनीयब्राह्मण( तलवकारब्राह्मण )–जैमिनीयार्षेयब्राह्मण–जैमिनीयोपनिषद्–ब्राह्मणानीत्येकादश सामवेदस्य, अथर्ववेदस्य च गोपथब्राह्मणमेकमेवेत्येवं साम्प्रतमेकोनविंशतिब्राह्मणानामेवोपलब्धिः संजाता । एतदतिरिक्तं वैदिकवाङ्मये त्रिंशदधिकानां ब्राह्मणानां नामान्युद्धरणानि चोट्टङ्कितानि दरीदृश्यन्ते । एतेषां हस्तलेखादयस्तु नोपलब्धाः ।

साम्प्रतमारण्यकानि तु संहिताब्राह्मणापेक्षयाऽपि स्वल्पतमान्येवोपलभ्यन्ते । तानि चैतरेय-शाङ्खायन-तैत्तिरीय-मैत्रायणी-माध्यन्दिन-काण्व-छान्दोग्यारण्यकानीति सप्तैव ।

उपनिषदस्तु संहिताब्राह्मणारण्यकापेक्षयाधिका उपलभ्यन्ते । साम्प्रतं त्रिशताधिका उपनिषदः प्रकाशिताः सन्ति । आसु द्वादशोपनिषदः प्रसिद्धतराः, यासां श्रीशङ्कराचार्यप्रभृतिभिः सर्वैराचार्यैर्भाष्यव्याख्यानादिकमकारि । प्रस्थानत्रय्यां वेदान्तसूत्रभगवद्गीतोपनिषद्रूपायामुपनिषत्पदेनासां द्वादशोपनिषदामेव ग्रहणमिति ॥

## विश्वकथासाहित्ये पञ्चतन्त्रस्य स्थानम्

दक्षिणैशियायां जावात आरभ्य पश्चिमोत्तरयूरोपस्य 'आईसलैण्ड'-देशपर्यन्तं प्रचलितासु प्रायः षष्टिमितासु भाषासु जनपदभाषासु च द्विशताधिका अनुवादाः पञ्चतन्त्रस्य समुपलभ्यन्ते ।

ईशवीयषष्ठशताब्द्यां 'खुशरो अनशेरवां' इति नामकस्य पारसीकनृपतेः साम्राज्ये 'बुर्ज़ो'–नामक एकश्चिकित्सको निवसति स्म, येन भारतभ्रमणमाचरितम् । स भारतीयानां पण्डितानां साहाय्येनात्रत्यानां कतिपयकथानां स्वकीयायां 'पहलवी'-भाषायामनुवादं विधाय ५५० ई० वर्षे पुनः स्वगृहं परावृत्तः । एतासु कथासु पञ्चतन्त्रकथानां प्रामुख्यमासीत् । तेन प्रथमतन्त्रे प्रामुख्येण वर्णितयोः [1]करटकदमनकश्शृगालयोर्नाम्नैव स्वकीयग्रन्थस्य नामकरणं कृतम् ।

---

१. 'कल्पना'नामके हिन्दीमासिकपत्रे (मार्च १९५३, पृ० २००), 'विश्वभारती क्वार्टर्ली'-नामकपत्रिकायां च (मई-जुलाई १९५२, पृ० १२) करटकदमनकयोर्वृषभत्वोक्तिस्त्वनवधानमूला ।

'बुर्जो'निर्मित एषोऽनुवादो यद्यपि प्रनष्टस्तथाप्यचिरादेवास्याधारेण द्वावनुवादौ विहितौ, ययोरेकतरः सम्पूर्णे यूरोपदेशे पञ्चतन्त्रप्रचारस्याग्रदूत आसीत् । प्रथमोऽनुवादः सीरियाभाषायां षष्ठशताब्द्यां 'बुर्जो'-समकालमेव विहितः। जर्मनभाषानुवादेन सहैष साम्प्रतं प्रकाशित उपलभ्यते। द्वितीयोऽनुवाद आरब्यभाषायाम् 'अब्दुल्ला इब्न अल मोकाफ़ी'-नामकेन विदुषा 'कलीला वा दिमना'-नाम्नाऽष्टमशताब्द्यां विहितः। अष्टादशशताब्दीं यावत् सम्पूर्णे यूरोपे पश्चिमैशियायां च पञ्चतन्त्रपरिचय एतत्साहाय्येनैवासीत् ।

एकादशशताब्द्यां 'सायमन सेथ'-नामकेन विदुषाऽस्य ग्रीकभाषायामनुवादो विहितः। पञ्चतन्त्रस्य यूरोपीयभाषायां समुत्पन्नैषा प्रथमा सन्ततिरासीत्। एतदाधारेण पञ्चतन्त्रस्य प्रचारो रशियादिपूर्वीययूरोपदेशेषु संजातः। पश्चिमयूरोपीयभाषासु १२५१ ई० वर्षे संजातः स्पेनीयानुवादः प्राचीनतमः प्रतीयते ।

पञ्चतन्त्रस्य हिब्रूभाषायामेकः प्राचीनोऽनुवादः समुपलभ्यते, यस्य रचनाकालः कर्तुंश्च नाम नोपलभ्येते। अस्यैतिहासिकं महत्त्वं वरीवर्ति, यतो ह्यस्यैव साहाय्येन १२६०-१२७० वर्षेषु 'जोन'-नामकेन विदुषा लेटिनभाषायामस्यानुवादः कृतः। लेटिनभाषाया अस्यानुवादस्याधारेण विभिन्नासु दशयूरोपीयभाषासु तस्य रूपान्तरं संजातम्। एषु प्रसिद्धतमो जर्मनभाषानुवाद आसीत्, यस्य १४८० ई० प्रथमं संस्करणं प्रकाशितम्। प्रथमसंस्करणादनन्तरभवेषु पञ्चाशद्वर्षेष्वस्य विंशतिसंस्करणानि प्रकाशितानि ।

'जोन'-कृतलेटिनानुवादमाधारीकृत्य स्पेनिश-चेक-इटलीयभाषासु पञ्चतन्त्रस्यानुवादाः संजाताः। इटलीयानुवादो 'दोनी'-महाशयेन १५५२ ई० विहितः। अस्य साहाय्येनैव 'सर टोमस नार्थ'-महाशयेन पञ्चतन्त्रस्यांग्लानुवादः कृतः। अस्य प्रथमं संस्करणं १५७० ई० प्रकाशितमभूत्। एतच्च संस्कृतपञ्चतन्त्रस्य षष्ठी कुलसन्ततिरासीत्। संस्कृततः पारसीकानुवादः, पारसीकत आरब्यः, आरब्यतो हिब्रू, हिब्रूतो लेटिनः, लेटिनत इटलीयः, इटलीयत आंग्ल इति ।

'कलीला वा दिमना'-नामकस्यारब्यानुवादस्य 'पिप्लाय-विदपई'-नामभ्यां प्रसिद्धावन्यौ द्वौ फ्रेंचानुवादौ संजातौ, ययोर्नामनी यूरोपीये जनजीवने जल्पकथासु प्रथितचरे अभूताम् ।

अनुरञ्जनसाहित्ये विश्वजनीनमिदं पञ्चतन्त्रं भारतीयकथासाहित्यस्य समुज्ज्वलं रत्नम्, यस्य भासुरा प्रभा भारताद्बहिरपि विदेशीयानां मनांसि षष्ठशताब्दीत एव रञ्जयन्तो व्यद्योतिष्ट। एवं स्थिते—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति॥२६॥

सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः॥२७॥

इति प्रचलितेषु पञ्चतन्त्रेषु समुपलब्धं माघकाव्यस्य द्वितीयसर्गस्थमेतच्छ्लोकद्वयं प्रक्षिप्तमेवेति निश्चितम्। पञ्चतन्त्रस्य प्राचीनतमरूपस्य परिचयाभिलाषुकैः पूनानगरीतः प्रकाशितं 'फ्रेंकलिन एजर्टन'-महाशयेन संपादितं संस्करणं द्रष्टव्यम्॥

## सरस्वतीभवनग्रन्थानां बृहत्सूची

राजकीयसंस्कृतमहाविद्यालयस्य सरस्वतीभवनपुस्तकालयो नाम प्राचीनहस्तलेखानां समुज्ज्वलं निधानम्। साम्प्रतमत्र षष्टिसहस्रसंख्याका हस्तलेखाः संगृहीताः सन्ति। अस्य ग्रन्थालयस्य स्थापना राजकीयसंस्कृतमहाविद्यालयभवन एव १७९१ ई० वर्षे संजाता। गच्छता कालेन ग्रन्थबाहुल्ये संजाते सति तत्र स्थानाभावमालक्ष्य तदानीन्तनाधिकारिभिरेतदर्थं नूतनभवननिर्माणस्यावश्यकताऽन्वभावि। अतः १९१४ ई० वर्षे भव्यस्यास्य भवनस्य निर्मितिः संजाता। ततः प्रभृत्यत्रैव ग्रन्थानां संग्रहः सुरक्षा च क्रियते।

प्राच्यविद्यासमाराधकं समग्रं जगदत्रत्याया विशालाया ग्रन्थसम्पत्तेः परिचयमासादयितुं समुत्सुकं विद्यते। यद्यपि समये समये पण्डितपत्रे स्वातन्त्र्येण च प्रकाशिता लघ्व्यः कतिपयाः सूच्यो विद्यन्ते, किन्तु ताः स्वकुक्षावत्रत्यान् सप्ताष्टसहस्रसंख्यापरिमितानेव ग्रन्थानन्तर्भावयन्ति। शेषो ग्रन्थराशिरपरिचित एव समुत्सुकस्य विश्वस्य। अतः सम्पूर्णग्रन्थानां विषयसूची निर्मिता प्रकाशिता च स्यादित्येतदर्थं १९४० ई० वर्षे विदुषां द्वयी नियुक्ताऽत्र कार्ये। प्रतिवर्षं संगृह्यमाणानां पूर्वं संगृहीतानां च ग्रन्थानां विषयविभाजनपूर्वकं सूचीनिर्माणरूपं सुमहत् कार्यमासीत्। अत्र विदुषां द्वयमपर्याप्तमासीत्। सरस्वतीभवने स्थापितायाऽनुसन्धानमन्दिराय, चात्रत्य-

ग्रन्थानां प्रामाणिकसूच्याः प्राथमिक्यावश्यकताऽवर्तत। अतः १९४८ ई० सूचीनिर्माणकार्ये चत्वारो विद्वांसो नियोजिताः। प्रामुख्येणैतेषां ग्रन्थपालोपग्रन्थपालादीनां च स्तुत्येन परिश्रमेण साम्प्रतं १७९१ ईशवीयतः १९५० ई० पर्यन्तमत्र संगृहीतानां प्रायः १४ सहस्रसंख्यापरिमितानां सर्वेषां वैदिकग्रन्थानां कर्मकाण्डग्रन्थानां च सूची चतुर्षु खण्डेषु संमुद्रय प्रकाशिता विद्यते। वैदिकविभागस्य प्रथमखण्डे संहिताब्राह्मणारण्यकानां शिक्षाकल्पनिघण्टुनिरुक्तप्रातिशाख्यानां शुल्बसूत्रादिप्रकरणग्रन्थानां श्रौतप्रयोगग्रन्थानां तद्भाष्यटीकादिग्रन्थानां च समावेशो विद्यते, उपनिषदां तद्भाष्यटीकादीनां च द्वितीये खण्डे। स्मार्तप्रयोगग्रन्थानां तु कर्मकाण्डविभागस्य द्वयोरपि खण्डयोः। सरस्वतीभवनस्यानेन प्रयासेन तत्परिचयाय समुत्सुकस्य विश्वस्योत्कलिका मात्रयाऽप्युपशमिता स्यादिति मन्यामहे॥

## संस्कृतपरीक्षाणां लोकप्रियता

काशिकराजकीयसंस्कृतमहाविद्यालये १९५० ई० वर्षे संस्कृतपरीक्षासन्तुलनपरिषदोऽधिवेशनमभूत्। तन्निर्णयानुरोधेन परवर्तिनि वर्षे एवात्रत्यपरीक्षासु महत्परिवर्तनमजायत। प्रौढपाण्डित्येन सह नूतनजगत्प्रतियोगितायां संस्कृतज्ञा अपि महत्त्वपूर्णानि पदान्यधिगच्छेयुरित्युद्देश्येन संस्कृतपरीक्षासु कतिचन नूतनविषया अपि समावेशिताः। शीघ्रमेवैतासां परीक्षाणामुत्तरप्रदेशीयप्रशासनेन मान्यतोद्घोषिता। अन्यान्यपि राज्यशासनानि सभाजयन्त्येताः परीक्षाः। साम्प्रतमेवोत्तरप्रदेशीयमाध्यमिकशिक्षासमित्याऽपि संमानितास्ताः। अधुना पूर्वमध्यमोत्तीर्णश्छात्र उत्तरप्रदेशीयायां कस्यामपि माध्यमिकशालायाम् 'इन्टरमीडियट'-कक्षायां समावेशमर्हति। 'इन्टरमीडियट'-परीक्षोत्तीर्णश्छात्रो यथा यत्र कुत्रापि 'बी० ए०'कक्षायां समावेशितो भवति, तथैवोत्तरमध्यमोत्तीर्णोऽपि तत्र न चिरेणैव प्रवेशमधिकर्तेत्यपि सुदृढमाशास्यते। उत्तरप्रदेशीयासु प्रतियोगितापरीक्षासु प्रतियोगितानिरपेक्षेषु विभिन्नेषु पदेषु चात्रत्याश्छात्राः स्थानं लभन्त एव साम्प्रतम्।

एवं चाङ्गलभाषायामधीतीनां सर्वाः सुविधा अत्रत्यैश्छात्रैः साम्प्रतं लभ्यन्ते, अथ चाध्ययनव्ययभारोऽपि तथात्र नास्त्येव। प्रत्युत संस्कृताध्ययनव्यापृतैश्छात्रैस्तासु तासु पाठशालासु वृत्तयः प्राप्यन्ते। अन्यत्रालभ्याभिराभिः सुविधाभिः समाकृष्टानां परीक्षार्थिनां संख्या प्रतिवर्षं वर्द्ध-

मानावलोक्यते। स्वतन्त्रतासमधिगमवत्सरेषु संस्कृतविद्यार्थिनां संख्या याऽतीव कार्श्यमुपगताऽऽसीत्, सा नूतनेनानेन प्रयोगेण पुनरपि निस्संशय-मुन्नत्युन्मुखी संजाता।

नवीनपाठ्यक्रमेण विद्यार्थिनः संस्कृतं प्रति हठादाकृष्टा यद्यपि, तथापि कुत्र कुत्रचिन्नूतनपाठ्यक्रमो विद्यार्थिनां कृतेऽतीव भारभूतः संजातः। अतः संस्कृतशिक्षापरिषदा गभीरं विचारविनिमयं विधाय नूतनविषयाणां भारः कथञ्चिदपि लघूकृतः स्यादिति निश्चितम्। तदनुरूपमेव नूतननियमावल्या रचना भविष्यति। परीक्षार्थिनां सुविधायै पूरकपरीक्षासंचालनमपि निश्चितप्रायमेव, यस्य प्रयोगः सहायकपरीक्षाध्यक्षस्य नियुक्तत्वेनाचिर-भावितया संभाव्यते। इतरसंस्थापरीक्षा अपि पाठ्यक्रमे सन्तुलिते सति अस्याः संस्थायाः परीक्षाणां समानं मानं लप्स्यन्त इति। एवं चेतोऽप्यधिका संस्कृतपरीक्षाणां लोकप्रियताऽवश्यं भाविनीति निश्चप्रचम्॥

## संस्कृतविश्वपरिषदः प्रचारकार्यम्

स्वतन्त्रतासमधिगमसमनन्तरममरभारत्या भारते भारताद्बहिरपि च पुनः प्रतिष्ठामभिलषत्सु मनीषितल्लजेषु द्वावेव सुरभारतीसमाराधकौ मूर्द्धन्यायेते, ययोर्हार्दिको भावः कार्याकारमादधन्मूर्तिमानिवाऽऽविरभूत्। तयोरेकतर उत्तरप्रदेशीयराज्यपालपदवीं बिभर्ति, अपरश्चात्रत्यगृहमन्त्रि-पदमलङ्करोति। काशिकराजकीयसंस्कृतमहाविद्यालयस्याहर्निशमुन्नति-पथारोहणं प्रादेशिकप्रशासनस्य कृपाया विशेषतः श्रीसम्पूर्णानन्दमहा-भागस्य तपसः फलम्। विदेशेष्वपि गीर्वाणवाण्याः कीर्तिदुन्दुभिं श्रावयन्ती संस्कृतविश्वपरिषच्च महामान्यश्रीकन्हैयालालमाणिकलाल-मुंशिमहोदयानामनवरतं श्रमं सफलयन्ती सहृदयानां संस्कृतानुरागिणां मनस्तर्पयति। स्वनामधन्यौ तौ द्वावपि परेशकृपया साम्प्रतमेकत्रीभूतौ। एष सहयोगः सुरभारत्या उदर्कायैवाभूत्। फलतो विगते वर्षे संस्कृत-विश्वपरिषदो द्वितीयमधिवेशनं राजकीयसंस्कृतमहाविद्यालयप्राङ्गणे विश्वेश्वरपुर्यां वाराणस्यां संजातम्। तत्र निश्चितेषु सिद्धान्तेषु संस्कृत-विश्वविद्यालयः साम्प्रतं प्रगतिपथमधिरोहति। देववाण्याः प्रचाराय चोत्तर-प्रदेश एव चतुर्णां विदुषां नियुक्तयः संजाताः। ते च लक्ष्मणपुरविश्व-विद्यालयसंस्कृतविभागाध्यक्षः श्री को० अ० सुब्रह्मण्याय्यरमहोदयः, प्रयाग-विश्वविद्यालयसंस्कृतविभागाध्यक्षः श्री डॉ० बाबूरामसक्सेनामहोदयः,

सरस्वतीभवनस्थानुसन्धानमन्दिरसदस्यः श्रीरामाज्ञापाण्डेयः, काशिकराजकीयसंस्कृतमहाविद्यालयपुराणाध्यापकः श्रीमदनन्तशास्त्रिफडकेमहोदयश्च। लक्ष्मणपुरस्थे राजभवने विपश्चितां समितयो बहुश एकत्रीभूय भविष्यत्कार्यक्रमनिश्चयं कृतवत्यः। संस्कृतप्रचारे नियुक्ता महानुभावाः साम्प्रतमुत्तरप्रदेशस्य प्रसिद्धेषु केन्द्रेषु सभासमितीः संयोज्य स्वोद्देश्यं सफलयन्ति। संस्कृतभाषणवार्तालापादिद्वारा यथा स्यात्तथा तत्र जनरुचिमुद्भाव्य संस्कृतविश्वपरिषदः शाखाप्रशाखाजालं सम्पूर्णे उत्तरप्रदेशे प्रसार्य गीर्वाणवाण्याः पुनः स्वगौरवमयपदावाप्तिरेवैतेषां परमं ध्येयम्। सफलयतु भगवान् विश्वनाथ एनं मनोरथमित्येवास्माकीनाऽऽकाङ्क्षा॥

## देवनागरीलिपिप्रतिसंस्कारसंमेलनम्

विगतमार्गकृष्णाष्टमीनवम्योः शनिरविवासरयोः (२८-२९ नवम्बर) उत्तरप्रदेशराजधान्यां लक्ष्मणपुर्यां राजभवने महामान्यानामुपराष्ट्रपतीनां दार्शनिकप्रवराणां डा० राधाकृष्णन्महोदयानामाध्यक्ष्ये देवनागरीलिपिप्रतिसंस्कारसंमेलनं समजायत। तत्र भारतसंघस्थितानां प्रायः समेषां राज्यानां प्रधानमन्त्रिणः शिक्षामन्त्रिणोऽन्ये च समाहूता मनीषिणः समवेता अभवन्। समुपस्थितानां प्रतिनिधीनां स्वागतवाचनं महामान्यैरुत्तरप्रदेशप्रधानमन्त्रिभिः श्रीगोविन्दवल्लभपन्तमहोदयैरकारि। उत्तरप्रदेशराज्यपालमहामहिमश्रीकन्हैयालमाणिकलालमुंशिमहोदयाश्च संमेलनमिदं समुद्घाटयन्ति स्म।

१९४७ ई० वर्षे उत्तरप्रदेशीयप्रशासनेन देवनागरीलिप्या सह हिन्दी राजभाषापदवीं प्रतिष्ठापिता, अथ च तस्मिन्नेव हायने मनीषिप्रवराणामाचार्यनरेन्द्रदेवमहोदयानामाध्यक्ष्ये देवनागरीलिपिप्रतिसंस्कारसमितिः संघटिता। अनया समित्या वर्षद्वयं यावद् विभिन्नाभिः संस्थाभिर्व्यक्तिभिश्च समुद्भाविता एकाधिकपञ्चाशत्परिमिता योजनाः सम्यक् परीक्ष्य, विधानपरिषदा मनीषिप्रवरकाकाकालेलकरमहोदयानामाध्यक्ष्ये निर्मितया समित्या सह विचारविनिमयं च विधाय स्वकीया निश्चयाः प्रशासनस्य पुरतः समुपस्थापिताः।

भारतीयसंविधानेनापि देवनागरीलिप्या सह हिन्दीभाषा राष्ट्रभाषात्वेनाङ्गीकृता विद्यते। संविधानस्वीकारस्य पञ्चदशवर्षाभ्यन्तरे तदनन्तरं

वा हिन्दीभाषाऽथ च देवनागरीलिपिरांग्लभाषाया रोमनलिप्याश्च स्थानमाप्स्यत इति सुनिश्चितमेव। पुराऽऽनुश्रविकयुगे भाषाया एव प्राधान्यमासीन्न तु लिपेः। साम्प्रतं तु तद्विपरीतं लेखन-शीघ्रलेखन-मुद्रण-टङ्कन-दूरटङ्कनादिषु विविधक्रियाकलापेषु लिपेरेव प्राधान्यं विद्यते। वैज्ञानिकेऽस्मिन् युगे प्रायः समेषां ध्वनीनां याथातथ्येनाभिव्यञ्जिका विश्वस्य समासु लिपिषूत्कृष्टतमापि देवनागरी नूतनासु यन्त्रयोजनासु पश्चादगामितामेव दधाति। कथं ह्यस्य दोषस्यापनोदनं भवेदित्येव समेषां देवनागरीप्रतिसंस्कारप्रयत्नानां मूलम्। नरेन्द्रदेवसमितिनिश्चयेषु दोषापनोदनेन सह मौलिकताया ह्रासोऽपि यथा न भवेत्तथा साध्ववहितम्।

सम्पूर्णे राष्ट्रे संस्कृतभाषायाः प्रचारो विद्यते, संस्कृतस्य ग्रन्थाः प्रकाश्यन्ते। संस्कृतग्रन्थानां च प्रकाशनं सर्वत्र प्रायो देवनागरीलिप्यामेव भवति। अतोऽस्या लिपेः प्रचारः सार्वत्रिको वरीवर्त्येवेति स्वभावत एव तस्या राष्ट्रलिपित्वं सिद्धम्। अपि चापहाय दूरदक्षिणराज्यीया द्वित्रलिपीः सर्वासां गुर्जरवङ्गगुरुमुखीप्रभृतिलिपीनां जननी प्राचीना देवनागरी लिपिरेव। अन्यच्च सम्पूर्णे महाराष्ट्रे बिहारोत्तरप्रदेश-हिमाञ्चलप्रदेशविन्ध्यप्रदेशमध्यप्रदेशमध्यभारतराजस्थानादिहिन्दीभाषि-राज्येषु देवनागरलिपेरेवाप्रतिहतं साम्राज्यं वर्तते। सत्येवमस्याः प्रतिसंस्कारवेलायां मा भूत् क्वचन विरोधाशङ्काऽथ च सर्वेषामेषां देवनागरीप्रियाणां संमत्यैव भवतु किञ्चित् सर्वमान्यं प्रतिसंस्करणमिति धीरेवास्य संमेलनस्य पृष्ठभूमिमरीरचत्।

लिपिषु प्रतिसंस्काराय पुरैतादृशं संमेलनमभून्न वेति विचारणीयो विषयः। तथापि लिपिषु विकासवादन्यायेन समये समये परिवर्तनमजायतेति पुरातत्त्वविदां सुविदितमेव। पुरा हि भारते ब्राह्मी खरोष्ठी चेति द्वे लिपी प्रचलिते आस्ताम्। तत्र खरोष्ठी साम्प्रतिकअरबीलिपिवद् दक्षिणतो वामपार्श्वं लिख्यते स्म। अस्याः प्रचारश्च पश्चिमोत्तरसीमावर्तिषु कतिपयेषु प्रदेशेष्वेवासीत्। खरोष्ठनामकेनान्येन वा केनचिद्विदुषा पारसीकदेशीयाम् 'अमरहक्' नाम्नीं लिपिमाधारीकृत्य निर्मितैषा लिपिः खरोष्ठीति नाम्ना प्रथिताऽभवत्। ई० पूर्वतृतीयशतकादारभ्य ई० तृतीयशतकपर्यन्तमस्याः प्रचारः पश्चिमोत्तरसीमाप्रदेशेष्वासीत्। अनन्तरं तत्रापि ब्राह्मीलिपेः प्रचारातिशयात् तस्या लोप एव संजातः।

देवनागर्यादिलिपिवद् वामतो दक्षिणपार्श्वं लिख्यमानाया ब्राह्मीलिपेः प्रचारस्तु पुरा प्रायः सम्पूर्णे भारते आसीत् । एषैव भारतस्य प्राचीनतमा लिपिः । यतो ह्येषा ब्रह्मणा प्रदत्ताऽतोऽस्या ब्राह्मीति नाम । यद्वा स्वाध्यायप्रवणेन ब्राह्मणसमाजेन निर्मिताऽतोऽस्या ब्राह्मीति नाम । भारतीयेषु ऋतुपरिवर्तनेषु तूलपत्रभूर्जपत्रतालपत्रादिषु लिखिता ग्रन्था नैवातिवेलमवस्थातुं सहन्ते । अतः प्राचीनतमाया भारतीयलिपेः स्वरूपं गण्डशैलेषु शैलशिखरेषु स्तम्भस्तूपादिषु मुद्रासु चैवावलोकयितुं शक्यते । अत्र च प्राचीनतमौ द्वौ शिलालेखौ ब्राह्मीलिपेरेव समधिगतौ । एकस्तयोर्नेपालराज्यीये पिप्रावास्थाने, अपरश्च अजमेरमण्डलस्थवड़लीग्रामे । पुरातत्त्वज्ञैस्तयोः समय ई० वर्षाच्चतुःशतकपूर्वं स्वीक्रियते । इतोऽपि पूर्वमत्र लेखनकलायाः प्रचार आसीदिति ब्राह्मीलिपेश्चरमविकासेन बौद्धजैनसाहित्यतोऽष्टाध्यायीनिरुक्तब्राह्मणवेदादिग्रन्थेभ्यश्च सम्यक् प्रतीयते । "त्रिषष्टिश्चतुःषष्टिर्वा वर्णा शम्भुमते मताः" इति पाणिनिशिक्षोक्तानां समेषां वर्णानामभिव्यञ्जिका आकृतयस्तत्समयेऽपि तस्यामासन्नेव । अतः प्राचीनतमेऽपि तस्मिन् काले एषा पूर्णविकसिता लिपिरासीदिति स्वीकर्तव्यमेव । इतोऽपि प्राचीना काचिल्लिपिरत्राऽऽसीन्न वा, चित्रलिपितो मिश्रदेशीयप्राचीनलिपिवदस्या विकासः संजातोऽन्यया वा कयाचित् पद्धत्येति प्रमाणाभावान्न किञ्चिदपि कथयितुं शक्यते ।

केचित्तु तान्त्रिकोपासनायां प्रयुक्तेभ्यः सांकेतिकचिह्नेभ्यस्त्रिकोणश्रीचक्रादियन्त्रेषु लिखितेभ्य एव भारतीयायाः प्राचीनतमाया लिपेर्विकासं संमन्वते । तान्त्रिकी कामकला हि बिन्दुत्रयेभ्यो निर्मीयते । या हि— "मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य" इत्यादिना स्तूयते सौन्दर्यलहर्यां शङ्कराचार्यैः । एतच्च कामकलाबीजं ब्राह्मीलिपेरिकारं सर्वथानुकरोति । वैदिकी तान्त्रिकी चेति द्विविधा हि श्रुतिरभ्युपेयते । अतस्तान्त्रिकश्रुतेर्वाङ्मय एव कुत्रापि निहितं भारतीयलिपिविकासतत्त्वमित्यनुमातुं शक्यते । तान्त्रिकसाहित्ये च लिपिर्मातृकाऽक्षमालेतिनामभ्यां प्राचुर्येण स्मर्यते ।

जैनानां पन्नवणासूत्रे समवायाङ्गसूत्रे च ब्राह्मीसहितानामष्टादश लिपीनाम्, बौद्धानां ललितविस्तरे च ब्राह्मीखरोष्ठीसहितानां चतुष्षष्टिलिपीनां नामान्युपलभ्यन्ते । तान्त्रिकसाहित्येऽपि भूतमातृका-मालिनीमातृकेत्यादिबह्वीनां मातृकाणां समुल्लेखः ।

वैखरी हि वाणी कण्ठताल्वादिस्थानेभ्योऽभिव्यक्ता चतुष्षष्टिवर्णात्मिका निरालम्बे आकाशे कानप्याकारानाविर्भावयति। योगिन एव तद्द्रष्टुं प्रभवन्ति। विभिन्नेषूच्चारणेषु विभिन्ना आकारा जायन्ते। तेषामेवाकाराणां प्रतीकरूपा इमा लिपयः। भारतीयरागरागिणीनां या हि मूर्तयः कल्पितास्ता गायकस्य पुरतो यद्धि रूपं विशिष्टासु वेलासु प्रादुर्भवन्ति तत्प्रतिकृतिरूपा एव। चिररात्राय संचितो ज्ञानराशिरानुश्रविकपद्धत्योपलभ्यतेऽस्माभिर्यद्यपि, तथापि तपःपूतैर्ऋषिभिर्महर्षिभिर्मनीषिभिश्च प्रणीतमतीव विशालं वाङ्मयं लिपिरूपमादधदेवास्माभिरधिगतम्। अत एव निखिलानुदात्तभावान् संवहन्ती लिपिरेषा भगवती भगवत्याः सरस्वत्या विग्रहत्वेनाच्यंते। अत एव च—"नमो बंभीए लिविए" इत्यादिना भगवतीसूत्रे स्तुता सा।

अस्तु विशेषप्रमाणानामभावेन ब्राह्म्येव प्राचीनतमा भारतीया लिपिः। तस्याश्च विकासवादन्यायेन समये समये यानि रूपान्तराणि संजातानि, तानि क्रमशो गुप्तलिपि-कुटिललिपि-नागरीलिपिरिति नामभिरभिधीयन्ते। नागरीलिपेराविर्भाव ई० अष्टमे शतके जातः। सा च विकासमापद्यमाना शनैः शनैः साम्प्रतिकीमवस्थां प्रापत्, प्रकारान्तरेण वङ्ग-शारदा-गुर्जरादिलिपीनां च रूपमदधात्। एवं च स्वयमेव विकासपथमनुवर्तन्त्या अस्या देवनागरीलिपेर्युगानुरूपं प्रतिसंस्करणं नैव क्षोदक्षमम्, अपि त्वावश्यकमेव। इयानेवावधातव्यो विषयो यन्नहि सहसा तादृशेन परिवर्तनेनापातरमणीयेन भाव्यं येन भारतीयसंस्कृत्या सर्वदा तिरस्कृतानामसुरसंस्कृतिप्रतीकभूतानां यन्त्राणां प्रवाहे वैज्ञानिकतमैषा देवनागरी प्रवहिता स्यात्। नहि यन्त्रसौकर्यार्थं परिवर्तनेन भाव्यमपि तु यन्त्रैरेव लिपेरनुसरणं विधेयम्। अस्यां सरणौ च या बाधाः स्युस्ता एवापनोदनीयाः। अतीव प्रमोदस्यायं विषयो यदत्र संमेलने एषैव सरणिः शरणीकृतेति॥

## स्वर्गीयाः पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाः

"सारस्वत्याः सुषमायाः" प्रधानसंपादका वाराणसेयराजकीयसंस्कृतमहाविद्यालस्य प्रधानाचार्याः पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाश्चैत्रकृष्णपष्ठ्यां गुरुवासरे (२५-३-५४) प्रातः सहसैव हृद्गतिरोधेन पञ्चत्वं गता इति हन्त! वज्रपात इव संजातो विद्वत्समाजाय, विशेषतोऽस्मै

महाविद्यालयाय। उपाध्यायमहोदयानां जनिरुत्तरप्रदेशीयबलियामण्डलान्तर्गतसुखपुराग्रामे काशिकराजकीयसंस्कृतमहाविद्यालये प्रधानाध्यापकानां वैयाकरणप्रवराणां श्रीरामभवनोपाध्यायानां गृहे १९०२ ईशवीयवर्षस्य जुलाईमासस्य १६ तारिकायां संजाता। पित्रा सविशेषं लालितैः प्रखरमतिभिरेभिर्महानुभावैर्विद्वत्पितृसान्निध्यतः, अस्य महाविद्यालयस्य भूतपूर्वप्रधानाचार्याणां म० म० डा० गङ्गानाथझामहोदयानां स्नेहातिशयवशाच्च वयसश्चतुर्विंशे वर्ष एव व्याकरणाचार्यपरीक्षा, एम० ए० परीक्षा च सोत्साहं समुत्तीर्णा। तद्वर्षीयाचार्यपरीक्षायां सर्वातिशायितया महाविद्यालयेनानेनैते स्वर्णपदकप्रदानेन पुरस्कृताः। अध्ययनसमाप्तिसमकालं भवतां नियुक्तिर्बिहारप्रदेशीयनालन्दामहाविद्यालये प्राध्यापकपदे संजाता, तदनु वर्षद्वयाभ्यन्तर एव चोत्तरप्रदेशीयसंस्कृतपाठशालानिरीक्षकपदभारमङ्गीचक्रुः। तत आरभ्य १९५१ ई० पर्यन्तं सविशेषं कृतावधानैरेभिः संस्कृतपाठशालानां पण्डितानां छात्राणां संस्कृतवाङ्मयस्य च समुन्नत्यै दिवारात्रं भागीरथः प्रयत्नो विहितः। सुदीर्घकालिक्योपाध्यायमहोदयानां सेवया प्रीतमुत्तरप्रदेशीयं राष्ट्रियं प्रशासनं १९५१ ई० वर्षस्य जुलाईमास एतान् राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदे न्ययोजयत्। स्वकीये स्वल्पे कार्यकाल एवैभिर्महानुभावैर्महाविद्यालयस्य चतुरस्रोन्नतिर्विहिता। संस्कृतज्ञाः पूर्ववत् साम्प्रतमपि राजकीयानन्यांश्च महत्त्वपूर्णान् पदभारान् प्राप्नुयुर्जीवनस्य प्रत्येकस्मिन् क्षेत्रे च ते साफल्यमधिगन्तुं शक्नुयुरेष महाविद्यालयश्च संस्कृतविश्वविद्यालयपदवीमधिकुर्यादिति तेषां महानभिलाषस्तत्र प्रयत्नश्चासीत्। एतेषामास्तिक्यमयं विद्यामयं भक्तिमयं धर्मोज्ज्वलं जीवनं लोकचेतस्यद्भुतां स्पृहणीयां प्रेरणां निश्चप्रचं प्रसूते स्म।

सुदुःसहं दुष्प्रसङ्गमिमं विधिविधानेनात्मनो वैवश्येन च कथञ्चित् सहमाना वयं स्वर्गीयोपाध्यायमहोदयानां शाश्वतशान्तिलाभाय भगवन्तं काशीविश्वनाथं तदुपास्यं रामभक्तं हनूमन्तं च भृशमभ्यर्थयामहे ॥

संस्कृतविश्वविद्यालयः

## संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।

परःसहस्रवर्षेभ्य आविर्भूतान् सांस्कृतिकाध्यात्मिकविचारनिवहान् संवहन्ती नूनमियं दैवी वाक् संस्कृतं नाम। साम्प्रतमपि दशसहस्रपरिमितासु पाठशालासु कृत्स्ने जीवने संस्कृतभाषाध्ययनायात्मानं विनियु-

ज्ञानैः सा सजीवभाषावदुपयुज्यते। अत्र देशे पञ्चविंशतिसहस्रतोऽभ्यधिका जना एनां वाग्मितया व्यवहरन्तीति निश्चप्रचम्। पञ्चलक्षमितेभ्योऽन्यूना अनया पौरोहित्यवृत्तिमनुतिष्ठन्ति। जनने, विवाहे, मरणे, स्तुतौ, संस्कारपद्धतौ च विंशतिकोटिपरिमितानां मानवानां जीवनं पवित्रस्य मधुरस्वरस्य संस्कृतोच्चारणस्य प्रतिध्वनिना पूरितं भवति। किं बहुना, संपूर्णस्य भारतराष्ट्रस्य जीवनं संस्कृतेन ओतप्रोतमिव दरीदृश्यते संस्कृतानुप्राणितविविधभाषाव्यवहारनिर्मितम्।

विक्रमप्रथमसहस्राब्दीसमाप्तिपर्यन्तं सैषा भाषा चूडान्तमुत्कर्षमधात्। ततः परं विविधापायग्रस्ता वागियं केदाररक्षणार्थं कण्टकशाखावरणवत् तत्परिरक्षणप्रयोजनेषु नव्यन्यायव्याकरणादिशास्त्रेषु प्रतिष्ठां प्रापत्। सुदृढैरेभिर्वर्मभिः सुरक्षितमपि संस्कृतवाङ्मयं राजाश्रयजनाश्रयविरहितं लोकव्यवहारपरित्यक्तं च साम्प्रतं सकृच्छ्रं निःश्वसिति। आयातः स कालो यदा कालकवलितमिव विस्मृतिगर्ते निलीनमिवैतत् कृत्स्नं संस्कृतवाङ्मयं पुनरपि विविधविभीषिकाभीतस्य विश्वस्य कल्याणाय ज्योतीरूपतामियात्।

कथमेतत् संभवेत्? संस्कृतविश्वविद्यालय एव तत्र क्षमतामर्हति। आसन् पूर्वं तक्षशिलानालन्दाप्रभृतयो विश्वविद्यालयाः, यत्र राष्ट्रौपयिकीनां सर्वासामपि विद्यानां पुरुषार्थप्रापकाणां च शास्त्राणां भवति स्माध्ययनाध्यापनम्। तदा विश्वस्य नानादेशेभ्यः समेत्य जिज्ञासवः स्वज्ञानपिपासां शमयन्ति स्म तत्र। महानयं परीवर्तः समुत्पन्नो दृश्यतेऽत्र। विक्रमस्य विगतायां सहस्राब्द्यां तनुतामलभत सोऽयमास्माकीनो महान् ज्ञानराशिः। विगतासु कतिपयशताब्दीषु पाश्चात्त्यदेशेषु नूतना ज्ञानविज्ञानशाखाः प्रस्फुटिताः। राजनीतिविज्ञानादिगतं संस्कृतवाङ्मयमधुनातनीः समस्याः समाधातुं नालम्। फलतस्तत्र विश्वविद्याप्रातिनिध्यं नैवाधातुं शक्यतेऽद्य। नूतनोऽयं विश्वविद्यालयो नैव भवितुमर्हति विश्वविद्यानामालयः, किन्तु संस्कृते निबद्धानां विश्वासां विद्यानामालयस्तु भविष्यत्येव।

पूर्वापरान्तोत्तरापथदेशीयाः प्रायो निखिलाः संस्कृतपाठशालाः, दक्षिणापथस्थाश्च बह्व्यः काशिकराजकीयसंस्कृतमहाविद्यालयपरीक्षया संबद्धाः खलु। अत्रत्याः स्नातका इदम्प्रथमतया सर्वत्र पाठशालासु सबहुमानमध्यापनकर्मण्यपेक्ष्यन्ते नूनम्। महिमायं ज्ञानखनेर्विश्वेतिहासे

प्राचीनतमायाः काशीनगर्याः। विरोधिभिर्नाशितेषु नामशेषेषु विद्याकेन्द्रेषु सेयमधुनाऽपि समुन्नतशिरस्का वितरति मानवाय ज्ञानोपदेशम्। सोऽयं महाविद्यालयोऽनादधानोऽपि विश्वविद्यालयपदवीं तत्कार्यं विदधात्येवेत्युत्तरप्रदेशीयप्रशासनेनास्य संस्कृतविश्वविद्यालयत्वं वैधं चिकीर्ष्यते।

इतरविश्वविद्यालयवदन्यराज्येषु संस्कृतविश्वविद्यालया यावन्न स्थापिता भवन्ति तावद् भाविनोऽस्य कार्यक्षेत्रं सम्पूर्णमेव भारतवर्षम्। विभिन्नेषु राज्येषु विभिन्नाः संस्कृतपरीक्षासंस्थाः स्वस्वपाठ्यक्रममनुरुध्य सुरभारतीं सेवन्ते। तासामनेन विश्वविद्यालयेन कीदृशः स्यात् संबन्धः, परस्परं सर्वासां संस्कृतपरीक्षाणां मान्यता, पाठ्यक्रमस्य प्रतिमानीकरणम्, नूतनविषयाणां संनिवेशः, उत्तराध्ययनप्रबन्धः, तुलनात्मकस्य समालोचनात्मकस्य चाध्ययनस्य प्रोत्साहनम्, नूतनगवेषणासाहित्यपरिचयः, परीक्षास्वसमावेशितानां विषयाणां चयनम्, ज्यौतिषायुर्वेदयोः प्रायोगिकमध्ययनम्, पालिप्राकृतापभ्रंशवाङ्मयस्य सिंहलद्वीप-स्वर्णद्वीप-यवद्वीप-बाली-सुमात्रा-कम्बोज-चीन-तिब्बतादिप्रातिवेशिकदेशीयवाङ्मयस्य च सुरभारतीसंबद्धस्याध्ययनप्रबन्धः, बृहत्तरभारतस्य सांस्कृतिकेतिहासपरिचयः,सर्वेष्वेषु देशेषूपलब्धानां शिलालेख-ताम्रलेख-हस्तलेख-तत्तद्भाषालिपिप्रभृतिपुरातत्त्वसामग्रीणां संकलनं संरक्षणमध्ययनं च, विश्वप्रसिद्धानां भारतीयस्थापत्यचित्रसंगीतादिकलानामुन्नयनमित्यादयो विषया भाविनोऽस्य विश्वविद्यालयस्य मुखापेक्षिणोऽवतिष्ठन्ते। भारतीया वास्तुकला विलीनेव दृश्यते साम्प्रतम्। आस्तां तावदत्र नवीनानां ज्ञानविज्ञानानां साकल्येन समावेशः, यदि भारतीयसंस्कृतेरङ्गभूतस्य समस्तस्यास्य विषयजातस्य समावेशः स्यात्तदापि प्राच्यविद्यानामध्ययनानुशीलनयोर्महत्केन्द्रं विश्वप्रतिष्ठितं भविष्यत्येव। तेनैव चास्य विश्वविद्यालयत्वं साफल्यमाप्नुयात्।

सा विद्या या विमुक्तये। सा च परा विद्योपनिषत्प्रतिपादिता नाम। प्रायेण भौतिकविद्यानामेवाध्ययनाध्यापनप्रबन्धसंपादनव्यस्तेष्वधुनातनेषु विश्वविद्यालयेषु द्वन्द्वात्मकस्य भौतिकवादस्यैव विद्वेषाङ्कुरप्रसूतेः सातिशयं प्रतिपादनं कथं नाम शान्तिसन्देशं प्रसारयितुं प्रभवेत्? कथं वा युद्धज्वालाधुक्षितं जगत् परित्रातुमर्हेत्। भारतीयाऽऽर्यसंस्कृतिरात्मवत् सर्वभूतप्रतिपादिका युद्धद्वेषादिबिभीषिकामिमां शमयितुमलमिति तदाधारभूतस्य पराविद्याप्रतिपादकस्य भारतीयवाङ्मयस्याध्ययनकेन्द्रत्वेन कृतपदो

नूतनोऽयं संस्कृतविश्वविद्यालयो विरोधिनोर्जडचेतनवादयोरविरोधमुत्पाद्य प्राच्यपाश्चात्त्यविचारसरण्योर्विरोधं विधूय सामञ्जस्यमार्गकल्पनेन स्वकीयास्तित्वं सफलयेत्, सर्वेषामितरविश्वविद्यालयानां पुरतश्च नवीनं कमप्यादर्शमुपस्थापयेदिति ज्ञानगुरुर्महेश्वरः प्रार्थ्यते ॥

## हस्तलेखानामुपेक्षा

भारतस्य पारतन्त्र्यवेलायां परःसहस्राणि भारतीयवाङ्मयरत्नानि विधर्मिभिर्भस्मसात्कृतानि। तक्षशिला-नालन्दा-विक्रमशिलाप्रभृतीनां विशालानि ग्रन्थागाराणि नामशेषतां नीतानि। सहस्रशाखस्य वेदस्यापि साम्प्रतमङ्गुलिगण्या एव शाखा उपलभ्यन्ते; इतरवाङ्मयस्य तु कथैव का? एवं सत्यपि भारतीयमनीषिभिरार्यसभ्यतासंस्कृत्योराधारभूतस्य तस्यैतस्य वाङ्मयस्य प्राणपणेन रक्षा विहिता। विभिन्नेषु ग्रन्थागारेषु मठमन्दिरादिषु पण्डितकुलेषु च भूरिशो विकीर्णो ग्रन्थराशिः सुरक्षितस्तिष्ठति, तथापि बहूनि ग्रन्थरत्नानि साम्प्रतमप्यज्ञानान्धकारे विलीनानि, अन्धविश्वासोपहितानि चावतिष्ठन्ते।

विक्रमस्य विंश्यां शताब्द्यां पाश्चात्त्यविद्वद्भिरेषां समुद्धाराय भागीरथः प्रयत्नो विहितः। कन्याकुमारीत आहिमालयं रत्नाकरत आमहोदधि न केवलं भारते, अपि तु मध्यैशियादेशेषु दक्षिणपूर्वैशियादेशेषु च परिभ्रमद्भिरेभिस्तपस्विभिर्विद्यानुरागिभिः शिलाखण्डेषु ताम्ररजतस्वर्णचर्मपट्टेषु भूर्जतालतूलपत्रेषु चोत्कीर्णानि भारतीयवाङ्मयस्य जाज्वल्यमानानि रत्नानि प्रकाश्यतां नीतानि, प्राचीनाया भारतीयायाः सभ्यतायाः संस्कृतेश्च महती प्रशस्तिः श्राविता। प्राचीनेषु शिलापट्टादिषूत्कीर्णा ब्राह्म्यादयो लिपयोऽपरिचितप्राया आसन् भारतीयविदुषाम्। तुगलकफिरोजशाहस्य सम्राजोऽकब्बरस्य च समयेऽशोकशिलालेखानां वाचकः कोऽपि नासीत्। सरविलियमजोन्समहाशयस्य समयेऽशोकशिलालेखो वाराणसीस्थेन केनचिद्विदुषा युधिष्ठिरस्य गुप्तवनवासकालीनोऽयं लेख इति कृत्वा पठितः। ट्रायर-मिल-जेम्सप्रिंसेप-रेवरेण्डजेम्सस्टीवेन्सन-लासनप्रभृतिमनीषिभिरन्ततो ब्राह्म्यादिलिपीनां समुद्धारः कृतः। कोलब्रुकविल्किन्स-टेलर-जान्सनफ्लीट-वेलेन्टाइन-वर्नेल-मेकेंजी-राहुलसांकृत्यायनप्रभृतिभिः कोविदैर्हस्तलेखानां संग्रहः कृतः। गन्धिनामापणेभ्यः, धूम्र-

पानरतेभ्यः सैनिकेभ्यः, ध्वंसावशेषेभ्यः, व्यवहारपदोपनीतनस्तिबन्धनेभ्यश्च समुद्धृता बहवो ग्रन्थाः।

प्राचीनतमेषु हस्तलेखेषु पाशुपताचार्यविरचितौ कुसुमाञ्जलिटीका-प्रबोधसिद्धिनामानौ ग्रन्थौ, कस्यचिन्नाटकस्य त्रुटितांशाश्च क्रमश ईशवीयप्रथमद्वितीयतृतीयशताब्दीयास्ताडपत्रेषूत्कीर्णाः, द्वितीयचतुर्थ-शताब्दीलिखितौ धम्मपदसंयुक्तागमयोर्भूर्जपत्रीयौ हस्तलेखौ, यारकन्दनगर-समीपे समुपलब्धास्तूलपत्रीयाः पञ्चमशताब्दीलिखिता ग्रन्थाश्चावसीयन्ते। शिलापट्टादिषूत्कीर्णयैतया विज्ञालया सामग्र्या निर्भ्रान्ता ऐतिहासिका निर्णया अक्रियन्त। सर्वमेतद्भारतस्य पारतन्त्र्यवेलायां प्रायः पाश्चात्त्य-विद्वद्भिः संसाधितम्।

भारतीयगणतन्त्रमहामात्येन महामान्यश्रीजवाहरलालनेहरूमहाभागेन भारतस्येतिवृत्तं वर्णयता कथितम्—"अमूल्यो हस्तलिखितग्रन्थराशिरस्माकं राष्ट्रेऽधुनाप्युपेक्षितदशायामितस्ततः पतित उपेक्षितश्च विद्यते। स्वातन्त्र्य-वेलायां समायातायां यान्यभीष्टान्यस्माकं भविष्यन्ति तेष्वस्यामूल्यग्रन्थ-राशेरुद्धारोऽपि प्रधानतमं कार्यम्" इति। संजातः स्वातन्त्र्यसूर्योदयः। तेन सहैव काश्मीरीया ग्रन्थसंपदस्तं गतेव दृश्यते। हन्त ! निकामं शोचनी-योऽयं समयः। पठ्यते वृत्तपत्रेष्वधुनापि भारताद् बहिर्गमनं हस्तलेखानाम्। प्राचीनपण्डितकुलभवनप्रान्तप्रोतानि वेष्टनान्युपदीकाभोजनानि भवन्ति। गन्धिनामापणेषु क्रय्याधारत्वेनोपयुज्यन्ते हस्तलेखाः। अन्धविश्वासग्रस्तै-र्जनैर्जलसमाधिर्दीयते तेभ्यः, रहस्यभेदभिया भित्तिषु वा चीयन्ते ते।

कथमेषाऽनर्थपरम्परा विराममीयात् ? सर्वप्रथमं ग्रन्थभर्तृषु कृतपदयो-रन्धविश्वासमिथ्यामोहयोरपनोदनं विधेयम्। एतच्च कार्यं संस्कृतानु-रागिणां भारतीयजनमनस्सु साम्प्रतमपि श्रद्धाभाजां पण्डितानामेव। राष्ट्रियेन प्रशासनेन च विनाशोन्मुखानामेषां हस्तलेखानां समुद्धारायागा-मिन्यां पञ्चवर्षीययोजनायां कापि व्यवस्थाऽवश्यमेव विधेयेति सविनयमनु-रुध्यते केन्द्रीयं प्रशासनम्॥

## स्वर्गीया पण्डिता क्षमादेवी

सत्याग्रहगीता–उत्तरसत्याग्रहगीता–तुकारामचरित्र–ज्ञानेश्वरचरिता-दीनामभिनवानां काव्यग्रन्थानां नैकशो लघुकथानामाख्यायिकानां च रचयित्री पण्डिता क्षमादेवी विगतस्य १९५३ ईशवीयस्य अप्रैलमासस्य

२२ तमे दिवसे दिवं गतेति हन्त ! महान् कष्टकरः शोचनोयोऽयं संवादः। काव्यानामेतेषाम्, सारस्वत्यां सुषमायामन्यत्र च प्रकाशितानां लघुकथानां च सरसानां भाषासौष्ठवं काव्यमाधुर्यं च पायं पायं कस्य नाम सहृदस्य चेतः सौहित्यं न लभेत। विदुष्या अस्याः काव्यानीमानि संस्कृतं मृतभाषेति मन्यमानानां प्रत्युत्तरदानायालम्। कर्णाटदेशोयेयं महिला यूरोपादि-देशभ्रमणलब्धवैदुष्या स्वकाव्यसौष्ठवेन विज्जका-विकटनितम्बाप्रभृति-प्राचीनकवयित्रीः स्मारयतीव। शोचामहे वयमद्यापूरणीयां क्षतिमेनाम्, प्रार्थयामहे च भगवन्तं विश्वनाथं दिवंगतात्मनः शान्त्यै॥

## संस्कृतोन्नायको डा० श्रीसम्पूर्णानन्दः

गीर्वाणवाणीसमाराधनसंश्रितव्रतो मनीषिप्रवरो डा० श्रीसम्पूर्णानन्द-महानुभाव इदानीमुत्तरप्रदेशमुख्यमन्त्रित्वधुरमुद्वहतीति संस्कृतसेविनां समेषां चेतांस्यानन्दोल्लासभरनिर्भराणि समुल्लसन्ति। उत्तरप्रदेशीय-शिक्षामन्त्रिपदमलङ्कुर्वताऽनेन महानुभावेन संस्कृतोन्नत्यै सुबहु प्रयतितम्। अतीतेषु विंशतिवर्षेषु संपादितानां संस्कृतोन्नयनकार्यव्रातानामितिहास-स्तस्यैव प्रयत्नानां परिणतिः।

ख्रिष्टीयाऽष्टादशी शताब्दी संस्कृतशिक्षाभ्युदये महत्त्वस्य कालः। संस्कृतशिक्षायाः संरक्षणाय समुन्नत्यै च काश्यामेकनवत्युत्तरसप्तदशशततमे वर्षे संस्कृतमहाविद्यालयः समस्थाप्यत। तदारभ्याद्य यावदिमं महाविद्या-लयं केन्द्रत्वेन परिकल्प्य शासनं संस्कृतशिक्षामुत्तरोत्तरं प्रासारयत्। यथार्थतो भारतेऽस्य महाविद्यालयस्य दीर्घकालिकमितिवृत्तं नाम संस्कृत-शिक्षाप्रसारस्यैवेतिहासः। वैदेशिकशासनसमयेऽपि महाविद्यालयेनानेन संस्कृतस्य यावानभ्युदयः समपादि, विश्वस्मिन् कस्या अपि प्राक्तनसांस्कृतिक-संस्थायै स्पृहणीयमेव तत्।

१९३७ वर्षे कांग्रेसाधिकारिषु शासनारूढेषु सत्सु साम्प्रतिकभारतेतिहासे प्राथम्येन संस्कृतशिक्षामधिकृत्य राष्ट्रसंमतो विचारः समजायत। सम्पूर्णानन्दमहोदयस्यैव श्रेयोभागित्वमेतत्सर्वस्येति विदितचरं तदभिज्ञा-नाम्। शासनभारग्रहणसमकालमनेन महाभागेन १९३८ वर्षे डॉ० भगवानदासमहोदयानामाध्यक्ष्ये संस्कृतकालेजपरीक्षापाठ्यक्रमसुधार-समितिः, श्रीयज्ञनारायणोपाध्यायानामध्यक्षत्वे च कालेजपुनःसंघटन-

समितिः स्थापिता। निरुक्ताभ्यामुभाभ्यां समितिभ्यां संस्कृतपाठ्यपद्धतिं महाविद्यालयस्य भाविस्वरूपं च पूर्णतया न्यरूप्यत। तन्निर्दिष्टानां प्रस्तावानां कार्यान्वयात् प्रागेव कांग्रेसशासनं प्रच्याव्य विदेशीयशासनं तस्याखिलमेव प्रयासमवारुणत्। १९४७ वर्षे पुनः श्रीसम्पूर्णानन्दमहोदयः शिक्षामन्त्रित्वमलञ्चकार। इदानीं पूर्वापेक्षयाऽप्यधिकेनोत्साहेन संस्कृत-शिक्षोन्नतिमवदधौ। एवं स्थिते १९४७ वर्षे महाविद्यालयस्य सार्धशताब्दी-महोत्सवः समपाद्यत। तत्सममेव प्रथमदीक्षान्तसमारोहोऽपि समायोजितः। तस्मिन्नेव हायने श्रीभगवानदाससमितिप्रस्तावानाश्रित्य पाठ्यक्रमे नूतनानि परिवर्तनानि परिवर्द्धनानि च स्वीकृतानि। द्वितीयोपाधि-वितरणोत्सवावसरे (१९४८) च श्रीसम्पूर्णानन्दस्यानुरोधमनुभावयतो-त्तरप्रदेशस्य तदानीन्तनमुख्यमन्त्रिणा माननीयश्रीगोविन्दवल्लभपन्त-महोदयेन महाविद्यालयं विश्वविद्यालयत्वेन परिणमयितुमुद्‌घोषितम्। तदानीमेव सरस्वतीभवनपुस्तकालयविकासायानुसन्धानमन्दिरस्य संग्रहा-लयस्य च स्थापना व्यधीयत। श्रीसम्पूर्णानन्दप्रैषयैवानुसन्धानविषयको दीर्घकालिकस्तात्कालिकश्च कार्यक्रमो निरमीयत। तात्कालिककार्यक्रमे हस्तलिखितग्रन्थानां प्रामाणिकसूचीप्रणयनम्, उत्तराध्ययने विशिष्टाचार्य-च्छात्रवृत्तिभाजां साधोलालच्छात्रवृत्तिभाजां चानुसन्धानकार्यस्यानुसन्धान-मन्दिरविद्वद्भिर्लिखितानां विशिष्टनिबन्धानां च प्रकाशनार्थं "सारस्वती सुषमा" नाम्न्यास्त्रैमासिकानुसन्धानपत्रिकायाः प्रकाशनप्रबन्धश्चाधिकृतः। उक्तकार्यकदम्बकमधिकृत्य प्रस्तावितविश्वविद्यालयप्रारूपं निर्मातुमव-काशप्राप्तानां राजकीयसंस्कृतमहाविद्यालयप्रधानाचार्याणां डाक्टर-श्रीमङ्गलदेवशास्त्रिमहोदयानां विशेषाधिकारित्वेन नियुक्तिः समजनि। अस्मिन्नेवावसरे संस्कृतपाठशालाः सुसंघटयितुं सुव्यवस्थापयितुं च संस्कृतपाठशालापुनःसंघटनसमितिरपि समस्थाप्यत।

संस्कृतशिक्षाविकासायाधिकृतेषु कार्येषु संस्कृतपाठशालाध्यापकान् प्रशिक्षयितुं पुनःशिक्षणसत्रोद्‌घाटनकार्यं विशेषेण महत्त्वं पुष्णाति। सत्रेण संस्कृताध्यापकेभ्यः शिक्षामनोविज्ञानं विभिन्नाश्चान्ये शिक्षणविषयः प्रशिष्यन्ते। एतेनाद्य यावत् पञ्चशती शिक्षकाणां प्रशिक्षिता। संस्कृत-शिक्षाक्षेत्रे श्रीसम्पूर्णानन्दमहोदयानामियमभिनवा कृतिर्मन्तव्या।

१९४८ वर्षे राज्यसंस्कृतपाठशालानां समुचितविकासाय संस्कृतशिक्षा-समुन्नयनाय चोत्तरप्रदेशीयनिखिलसंस्कृतपाठशालाप्रबन्धकानां प्रधाना-

ध्यापकानां च राजकीयसंस्कृतमहाविद्यालयभवने शासनकर्तृकमेकं बृहदधिवेशनमायोजितम्, यत्र संस्कृतपाठशालानां वर्तमानदशा उन्नमयितुं पाठ्यक्रमं परिवर्तयितुं चानेके महत्त्वाधायकाः प्रस्तावा अङ्गीकृताः। आचार्यनरेन्द्रदेवमहोदयानामाध्यक्ष्येऽखिलभारतीयसंस्कृतशिक्षापाठ्यक्रमे समानमानत्वसंस्थापनार्थम्, विभिन्नराज्येषु विभिन्नतया दीयमाना विभिन्नसंस्कृतपरीक्षाः संतुलयितुम्, तत्तत्पाठ्यक्रम उपयुक्ततया परिवर्तनं विधातुं चास्माकं मुख्यमन्त्रिमहोदयेन भारतवर्षस्य समेषां राज्यानां विश्वविद्यालयानां च प्रतिनिधीनामन्त्र्य संस्कृतोन्नत्यै हृदयेन महोद्यमः संभृतः। यदवधि विभिन्नसंस्कृतपरीक्षाणामुपाधिषु प्रमाणपत्रेषु शिक्षा-मर्यादासु चैकरूपता नायाति, यदालम्ब्य संस्कृतच्छात्राः सुखेन पाठ-शालातः पाठशालान्तरेषु प्रविष्टाः स्युः, तदवधि तेषां ज्ञानोपार्जनमानस्य साम्यं दुःशकमिति श्रीसम्पूर्णानन्दमहोदयेन निश्चितम्। एतत्संमेलन-निर्णयानुसारं संस्कृतशिक्षायामाचरणचूडं परिवर्तनमभूत्। परिणामतः उत्तरप्रदेशीयशासनेन संस्कृतपरीक्षाणां नव्या मान्यता उद्घोषिता। तदनुसारं प्रथमा-पूर्वमध्यमा-उत्तरमध्यमा-शास्त्रिपरीक्षाः क्रमेण जूनियरहाईस्कूल-हाईस्कूल-इन्टरमीडियट-बी०ए० इत्याख्याभिः परीक्षाभिः समानमानाः संवृत्ताः। एतेन मान्यताप्रदानेन न केवलं संस्कृतप्रणयिनां गौरवं समुपबृंहितम्, अपि तु संस्कृतसमाजे नवं जीवनं नव्या आशाश्च पल्लविताः।

श्रीसम्पूर्णानन्दमहोदयस्य विद्यानुरागस्तं संस्कृतजगतः संस्कृतविदुषां चाशाकेन्द्रत्वेन प्रतिष्ठापितवान्। तन्मते संस्कृतं नामेदानीन्तनीषु देशेऽस्मिन् प्रचलितास्वखिलासु भाषासूत्तमा भाषा। सा कथमपि मृतभाषा (अव्याव-हारिकभाषा) नैव परिगण्येत। सा न केवलं जीविता प्रत्युत स्वीयेनामृत-रसेन चिरादत्रत्याः सन्ततीः प्रादेशिकभाषाश्च सिञ्चन्ती पुष्णन्ती च प्राशस्त्येन जीवति। प्राचीनतमाऽपीयं स्वकीयैर्विशिष्टरूपैः स्वानुभाव-प्रभावैश्च भारतस्यात्मनि देहे च प्रतिक्षणं नवत्वमाधत्ते। इयं हि सुरगवी भारतीयसंस्कृतेर्मूलम्। दक्षिणभारतेन दक्षिणपूर्वेशियाखण्डेन च सम्बन्धस्थापनस्येयमेकलैव शृङ्खला। अस्य महोदयस्य गीर्वाणवाण्यनुरागः कस्य भारतीयस्य संस्कृतसंस्कृतिप्रियस्य तोषाय न प्रभवेत्।

दिष्ट्या साम्प्रतमेष महानुभावो विशालस्योत्तरप्रदेशस्य भारतीय-संस्कृतिहृदयभूतस्य मुख्यमन्त्रिपदमध्यास्ते। संस्कृतभाषायाः संस्कृतसमा-

जस्य चायतिरुत्तरोत्तरं कल्याणोन्मुखी प्रतिभाति। अग्रिमायां पाञ्चवर्षिक-योजनायां संस्कृतविश्वविद्यालयनिर्माणाय द्विपञ्चाशल्लक्षरूप्यकपरिमितो धनराशिरङ्गीकृत उत्तरप्रदेशीयशासनेन। वयमत्र भूतभावनं विश्वेश्वरमस्य महानुभावस्य मुख्यमन्त्रित्वं प्रद्योतयितुं संस्कृतोन्नमनमखमविघ्नं पूरयितुं च सविनयं प्रार्थयामहे॥

## स्वर्गीयाः श्रीकेशवद्विवेदिनः

वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य न्यायशास्त्रप्राध्यापका न्यायवेदान्तादिदुरवगाहपाथोधिप्रवहणा नैयायिककेसरिणः श्रीकेशवद्विवेदिनः शुद्धभाद्रशुक्लद्वितीयायां रविवासरे (१८-१०-५५) चतुश्चत्वारिंशद्वर्षपरिमाणकेऽल्पीयस्येव वयसि निधनमवापुरिति निवेदयतां नितरां चेखिद्यते नश्चेतः। उत्तरप्रदेशीयाऽऽजमगढमण्डलान्तर्गतपरवइपुरग्रामं स्वजनुषा प्रद्योतयन्त एते महानुभावाः पितरं श्रीसरयूप्रसादशर्माणं चिराभिलषितसुतलाभहर्षभरनिर्भरं समपादयन्। सुरभारतीसमाराधनाय बाल्य एवैभिरेषा पावनतमा काशीपुरी समासादिताः, अधीतं च व्याकरणशास्त्रं प्राथम्येन। तदनन्तरं श्रीराधाकान्तझा-श्रीशिवदत्तमिश्र-श्रीवामाचरण-भट्टाचार्यमहोदयेभ्यो विधिवन्नव्यन्यायशास्त्रमधीतम्। वेदान्तशास्त्रस्याध्ययनमेभिः स्वामिश्रीकरपात्रमहोदयानाम्, स्व० म० म० श्रीहरिहरकृपालुद्विवेदिनाम्, यशस्विनां स्वामिश्रीभारतीमहोदयानां च सान्निध्ये सम्पादितम्। न्यायवेदान्ताचार्यादिविरुदालङ्कृता गभीरपाण्डित्यलब्धगरिमाण इमे महानुभावा १९४४ वर्षे राजकीयसंस्कृतमहाविद्यालये न्यायाध्यापकपदे नियुक्ताः। ततः प्रभृति विद्यासमाराधनधृतव्रतैस्तत्परतयोपेक्षितजीवनसर्वस्वैरेभिरविगणय्य शरीरस्वास्थ्यमहर्निशमध्ययनाध्यापनयोरेवैकादशवर्षपरिमितः कालो यापितः। खण्डनखण्डखाद्याद्वैतसिद्धिप्रभृतयोऽतिकठिना अपि ग्रन्था द्विवेदिमहोदयानां सविधे सरलसरला इव भासन्ते स्म। अत एव शास्त्रिवर्यैर्नव्यन्यायग्रन्थानामन्येषां च बहूनां ग्रन्थानां शास्त्रगभीराः सरलतमाश्च टीकाग्रन्था निर्मिताः प्रकाशिताश्च। असमय एव विधेः करालेन करेण कवलिता एते महानुभावा इति हा हन्त! सीदामः, अभ्यर्थयामश्च निग्रहानुग्रहसमर्थं भगवन्तं विश्वेश्वरं शाश्वतपदलाभाय शास्त्रिवर्याणाम्, धैर्यलाभाय च शोकसन्तप्तस्य कुटुम्बिजनस्येति॥

## उत्तरप्रदेशीया द्वितीया पाञ्चवर्षिकी योजना, संस्कृतं च

संस्कृतविश्वपरिषदश्चतुर्थाधिवेशनावसरे महामान्यश्रीक० मा० मुंशी-महादेवैरुक्तम्—"अस्त्येक एवोपायः संस्कृतस्य स्थैर्यसम्पादने। स च पाञ्च-वर्षिकयोजनायां तदर्थं द्रव्यपरिकल्पनम्, येन केन्द्रीयप्रान्तीयशासनानि देशेऽस्मिन् त्रिचतुरान् संस्कृतमेवावलम्ब्य पाठयतः संयोजितपाठशालान् संस्कृतविश्वविद्यालयान् स्थापयितुं शक्नुयुः, सर्वेषु विश्वविद्यालयेषु संस्कृत-विद्यापीठानि स्थापयेयुः, पाठशालाभ्यः पर्याप्तं द्रव्यं वितरेयुः, अप्रकाशितानां संस्कृतग्रन्थानां संग्रहार्थं प्रकाशनार्थं च द्रव्यं प्रयच्छेयुः, राष्ट्रीयप्राचीने-तिहासप्रमाणसंग्रहालये तादृशं संस्कृतग्रन्थालयमपि स्थापयेयुर्यत्र सर्वेषां हस्तलिखितग्रन्थानां चित्राणि संगृह्येरन्" इति।

उत्तरप्रदेशीया द्वितीया पाञ्चवर्षिकी योजना सत्यं मुंशीमहोदयनिर्दिष्टाः सर्वा आशाः परिपूरयति। सर्वप्रथममत्र संस्कृतविश्वविद्यालयस्थापनाया-शीतिसहस्रोत्तरद्वात्रिंशल्लक्षरूप्यकपरिमितो धनराशिः कल्पितः, येन हि साम्प्रतिको राजकीयसंस्कृतमहाविद्यालयो विश्वविद्यालयरूपेण परिणम-यिष्यते। अनेन धनराशिना विश्वविद्यालयकार्यालयादिभवननिर्माणा-दिकमनेकेषु विषयेषु प्राध्यापकनियोजनादिकं कार्यजातं संपत्स्यते। राज-कीयसंस्कृतमहाविद्यालयपरीक्षाभिरुत्तरप्रदेशस्था बहिस्थाश्च सहस्राधिकाः पाठशालाः संबद्धाः सन्ति। उत्तरप्रदेशस्थानां पाठशालानां साहाय्यार्थमत्र पञ्चविंशतिसहस्राधिकद्वादशलक्षरूप्यकाणि निर्धारितानि सन्ति। साम्प्रत-मुत्तरप्रदेशे ४१८ पाठशाला राजकीयं साहाय्यं लभन्ते, आसु ९८ पाठशाला आदर्शपाठशालात्वेन व्यवस्थापिताः। अनेन निर्धारितेन धनराशिनाऽन्यासां ९८ विशिष्टपाठशालानामादर्शपाठशालात्वेन परिणतिर्भविता। द्विशतपाठ-शालाभ्यः प्रत्येकं सहस्ररूप्यकाणां वार्षिकं साहाय्यम्, पञ्चाशत्पाठशाला-भ्यश्च प्रत्येकं पञ्चसहस्ररूप्यकाणि भवननिर्माणार्थं प्रदास्यन्ते। पाठशालानां निरीक्षणस्य सुव्यवस्थायै द्वावन्यौ सहायकनिरीक्षकौ नियोक्ष्येते। एतदर्थं ६५९५२ रूप्यकाणां व्ययो निर्धारितः। साम्प्रतं एकः प्रधाननिरीक्षकः, त्रयश्च सहायकनिरीक्षका वर्तन्ते। द्वयोरन्ययोरपि सहायकनिरीक्षकयो-र्नियोजने संजाते पञ्चधा विभक्तस्योत्तरप्रदेशस्य प्रत्येकभागस्य निरीक्षणायै-कैकः सहायकनिरीक्षकस्तत्र तत्र विभागे स्वकार्यालयेन सह वर्तिष्यते।

राजकीयसंस्कृतमहाविद्यालयस्य पुस्तकालये सरस्वतीभवने हस्तलेखानां षष्टिसहस्रपरिमितानां महान् संग्रहो वर्तते। एषां ग्रन्थानां न चिरात् सूचीनिर्माणाय, विशिष्टानां ग्रन्थानां प्रकाशनाय, हस्तलेखानां संग्रहाय, विशालस्य पुस्तकालयभवनस्य च निर्माणायाऽस्यां योजनायां ६०५७७७ रूप्यकाणि निर्धारितानि सन्ति। तत्र प्रतिवर्षं ग्रन्थानां प्रकाशनाय पञ्चाशत्सहस्ररूप्काणि, हस्तलेखानां संग्रहाय संरक्षणाय च विंशतिसहस्ररूप्यकाणि निर्धारितानि वर्तन्ते। सरस्वतीभवनाय हस्तलेखानां छायाचित्रग्राहकाणि यन्त्राणि क्रीतानि। एवं चात्र हस्तलेखानां संग्रहप्रकाशनयोः, तेषां छायाचित्रसंग्रहस्य च शोभना व्यवस्थाऽनया योजनया संपादिता। आशास्यते द्वितीयाऽऽयोजनगृहीत-शम्बलोऽयं महाविद्यालयो विश्वविद्यालयरूपेण परिणंस्यते, सरस्वतीभवनं च संस्कृतवाङ्मयानुशीलनस्य विशालं केन्द्रं संपत्स्यते॥

## संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनम्

दक्षिणभारतस्यान्ध्रप्रदेशस्य सुप्रथिते तिरुपतिनामके तीर्थस्थले राष्ट्रपतीनां महामान्यश्रीराजेन्द्रप्रसादमहाभागानामाध्यक्ष्ये कार्तिककृष्ण-द्वादशीशुक्रवासरतः कार्तिककृष्णचतुर्दशीरविवासरं यावत् (११-१३ नवम्बर, १९५५ ई०) संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनं सम्पन्नमिति जानन्त्येव विद्वच्चणाः। अत्र सार्द्धैकसहस्रं प्रतिनिधयो विद्वत्तल्लजाः, संस्कृतप्रिया बहवो भारतीयशासकाश्च समुपस्थिता आसन्। इदमेवास्या-धिवेशनस्य किमुत संस्कृतविश्वपरिषदो वैशिष्ट्यं यदत्र प्राचीनामध्ययन-प्रणालीमनुसरन्तः पण्डिताः, नूतनामालोचनात्मिकां सरणिं क्षुन्दन्तः प्राध्यापकाः, संस्कृतप्रियाः शासकाश्च समवेत्य देववाण्याः समुन्नत्यर्थं प्रयतन्ते।

सन्ति संस्था अन्या अपि या भागशः सर्वांशेन वा सुरभारतीं सेवन्ते। तत्राऽन्तरराष्ट्रिया प्राच्यविद्यापरिषत्, यस्यास्त्रयोविंशतितम-मधिवेशनं १९५४ ई० वर्षे इङ्गलैण्डदेशीये केम्ब्रिजनगरे संपन्नम्, मिश्र-मेसोपोटामिया-ईरान-चीनप्रभृतिदेशानां विद्याभिः सह भारती-विद्यामपि संस्कृतवाङ्मयसहकृतामालोचयति। अत्र श्रवन्ति समवेताः प्रत्येकं देशानां विशिष्टतमा विचारकाः। अपरा च वर्ततेऽखिलभारतीया प्राच्यविद्यापरिषत्, या संस्कृतेन सह पालिप्राकृतयोरितिहासस्य,

पुरातत्त्वस्य च, आरब्यपारसीकसाहित्ययोरन्येषां च भारतसंबद्धविद्या-कलातत्त्वानां विचारमातनुते । अस्याश्चैषमो मार्गशीर्षमासे (२६-२८ दिसम्बर ५५ ई०) अष्टादशतममधिवेशनमुपराष्ट्रपतीनां डॉ० राधाकृष्णन्महोदयानामाध्यक्ष्येऽन्नमलाइनगरे चिदम्बरतीर्थं निकषा सम्पन्नम् । अत्र प्रायशो नोपतिष्ठन्ते प्राचीनामध्ययनप्रणालीमनुसरन्तः पण्डिताः । इतरा च भवति संस्कृतसाहित्यसंमेलनं नाम । अस्य द्वाविंशतितममधिवेशनं विगते चैत्रमासे (२६-२८ मार्च, ५५ ई०) महामान्यश्रीचिन्तामणिद्वारकानाथदेशमुखमहोदयानामध्यक्षतायां संजातम् । इदं हि देववाणीसमुपासकानां प्राधान्येन पण्डितानां संघटनम् । अस्य संस्थापनं १९७० वैक्रमेऽब्दे समजायत । साम्प्रतमनेकेषु प्रदेशेष्वस्य शाखा वर्तन्ते, प्रकाश्यते च संस्कृतरत्नाकरनामकं मुखपत्रम् ।

एवं सतीष्वप्यन्यास्वेवंविधासु संस्थासु केनाप्यनितरसाधारणेन वैशिष्ट्येन संस्कृतविश्वपरिषदियं राजतेतमाम् । भारतस्य पारतन्त्र्यवेलायां यदैकतो यूरोपीया अन्ये च मनीषिणः सुरगवीचरणेषु नतमस्तका आसन्, यदा च यूरोपद्वीपे १८७३ ई० वर्षे, भारते च १९१९ ई० वर्षे प्राच्यविद्यासमुपासकानामान्तरराष्ट्रियाऽखिलभारतीया च परिषत् समस्थाप्यत, तदैवान्यतो विदेशीयेन शासनेनात्र सा नितरामुपेक्षिता । विदेशीयशासनदुष्प्रचारनिबन्धनेयं दुःस्थितिः स्वतन्त्रे भारते शासनाधिकारिभिरेव झटिति परावर्तितुं शक्यते । "पण्डिताः प्राध्यापका इति विधाद्वयरूपः परस्परविरोध एव संस्कृतस्योपेक्षाया मुख्यो हेतुः" इति हि ब्रुवन्ति स्म स्वीये प्रारम्भिके भाषणेऽत्र श्रीमुंशीमहोदयाः । नूनमेषा परिषत् शासनाधिकारिणः पण्डितान् प्राध्यापकांश्चैकत्र योजयित्वा किमपि वैशिष्ट्यमात्मनः ख्यापयति ।

पण्डितेष्वभिनवपद्धत्याऽनुशीलनप्रवृत्तिर्नैव प्राधान्येनावलोक्यते, गुरुपरम्पराप्राप्तस्य शास्त्रस्य संरक्षणमेव तेषां परमं तपः । एतद्विपरीता च प्रवृत्तिः परिदृश्यते प्राध्यापकेषु । शासनाधिकारिणां सहयोगेन परिहृते संस्कृतविरोधिप्रचारवात्याचक्रे सोऽयं विधाद्वयरूपः परस्परविरोधोऽपि परिहरणीय एव संस्कृतविश्वपरिषदा । उभयगुणान्वितपाठ्यक्रमनिर्धारणेनायं विरोधः परिहृतः स्यादिति बाढं सत्यम्, तथाप्येतदर्थं पण्डितप्राध्यापकसंगमस्थल्यामस्यां परिषदि कोऽपि कार्यक्रमो निवेशनीयः । स

च संस्कृतवाङ्मयस्य विभिन्नासु शाखासु विचारविनिमयार्थमखिल-भारतीयप्राच्यविद्यासंमेलनवदस्याः परिषदो विभिन्नासु शाखागोष्ठीषु प्रविभाग एव। अत्र च निबन्धादीनां भाषणादीनां चाधिकारिकी भाषा संस्कृतमेव स्वीक्रियेत ॥

## दर्शनपरिषदः संस्थापनम्

एषमो राजकीयसंस्कृतमहाविद्यालयेऽत्रत्यानां दर्शनविभागीयाध्यापकानां छात्राणां चोत्साहेन दर्शनपरिषदेका संस्थापिता। अस्या उद्घाटनं कार्तिकशुक्लचतुर्दश्यां सोमवासरे (२८.११.५५) उत्तरप्रदेशस्य मुख्यमन्त्रिभिर्मनीषिप्रवरैः श्रीसम्पूर्णानन्दमहाभागैरकारि। आर्षदर्शनानां तत्त्वानुशीलनम्, नव्यानां दार्शनिकराद्धान्तानां समुद्भावनम्, सामाजिकजीवनस्योपयोगिनां दार्शनिकतथ्यानां संकलनम्, प्राच्यप्रतीच्योभयदार्शनिकपद्धत्या छात्राणां परिचायनं चास्याः परिषदो मुख्यमुद्देश्यम्। गवेषणात्मकानां परिचयात्मकानां च निबन्धानां पाठः, दर्शनेषु व्यवहृतानां पारिभाषिकशब्दानां कोशनिर्माणम्, पाश्चात्त्यानामितरेषां च दर्शनानां सिद्धान्तानवगमयितुं तत्तद्ग्रन्थानां तात्पर्यसंकलनात्मकः प्रामाणिकोऽनुवाद इत्येष कार्यक्रमो वर्ततेऽस्याः।

अस्य कार्यक्रमस्य पूर्त्यै साम्प्रतमध्ययनाध्यापनादिषु विरलप्रचाराणामागमवैष्णववेदान्त-बौद्ध-जैन-मीमांसाप्रभृतिदर्शनानां पुनरुज्जीवनाय, हिन्दीभाषानिबद्धस्य 'सन्त'-मतस्य पाश्चात्त्यदर्शनस्यान्येषां दर्शनानां च परिचयमापादयितुं च तत्तद्विषयनिष्णातैः सुधीभिर्निर्दिष्टेषु विषयेषु गवेषणात्मकाः परिचयापादकाश्च निबन्धा ग्रन्थाश्च निबद्धाः स्युरिति प्रयतिष्यते, वादगोष्ठीनां संमेलनानां चायोजनं करिष्यते; यत्र ह्याधुनिकप्रश्नानां दार्शनिकं समाधानं नूतनानामरविन्दादिभारतीयदर्शनानां पाश्चात्त्यदर्शनानां च विवेचनापुरःसरं समुपस्थापयिष्यते। तत्र दार्शनिकपरिभाषाव्यूहाज्जिज्ञासूनुद्धर्तुं प्रथमं शैवशाक्तोभयभेदभिन्नस्यागमस्य, पाञ्चरात्रसहितस्य वैष्णववेदान्तस्य, बौद्ध-जैनदर्शनयोः, व्याकरणदर्शनस्य, सांख्ययोगयोश्च विशिष्टपदानां विवरणात्मका विभिन्नाः कोशाः संग्रहीष्यन्ते, प्रकाशयिष्यन्ते च। परिचयात्मकानामनुवादात्मकानामन्येषां च ग्रन्थानां प्रकाशनाय ग्रन्थमाला, निबन्धानां प्रकाशनाय चैका षाण्मासिकी पत्रिका प्रकाशयिष्यते।

विगतासु कासुचिच्छताब्दीषु भारतीयदर्शनानां मौलिको विकासः प्रायोऽवरुद्ध इव दृश्यते। पुरा यवनदेशे सुकरातसदृशा महामनीषिणो दार्शनिका अभूवन्। दार्शनिकजगति सापेक्षतासिद्धान्तस्य प्रादुर्भावको विश्वमान्यो वैज्ञानिको दार्शनिकश्च आइन्स्टाइनमहोदयो न चिरादेव पञ्चत्वं गतः। वर्तत एवं महती पाश्चात्त्या दर्शनपरम्परा। चीनप्रभृति-पुरातनदेशेष्वपि दर्शनविकासः समजनि। दर्शनानामेतेषां तुलनात्म-केनाध्ययनेन भवितव्यम्। दर्शनपरिषदमुद्घाटयन्तः श्रीसम्पूर्णानन्द-महोदया अवोचन्—

"तदेव दर्शनं यथार्थं यद्धि प्रेक्षावतां जिसाज्ञूनां जिज्ञासाः समादधीत। नहि केवलं दर्शनमध्ययनस्य विषयः, तद्धि जगतो रूपपरिवर्तनेऽपि क्षमम्। साम्प्रतिक आक्षेपको नहि बौद्धो जैनो वा, अपि तु वर्तते प्रत्यक्षप्रयोगवादी वैज्ञानिकः। नहि स प्रत्यक्षविरोधिना तर्केण, केनचिद् ग्रन्थोद्धृतेन सिद्धान्तेन वा समाधातुं शक्यः। भारतीयदर्शनसिद्धान्त-स्त्रिकालाबाधित इति सत्यम्, तथापि तस्य केनाप्यभिनवेन कालानुवर्तिना व्याख्यानेन भवितव्यम्, यद्धि ईर्ष्याद्वेषकलुषितस्य युद्धज्वालाबिभीषिका-भीतस्य विश्वस्य परित्राणक्षमं स्यात्" इति।

अपि नाम सेयं दर्शनपरिषद् मनीषिप्रवरस्य मुख्यमन्त्रिणः, दर्शना-नुरागिणां मनीषिणां च आशाः सफलयेत्॥

## स्वर्गीयाः श्रीरामचन्द्रपाठकमहोदयाः

राजकीयसंस्कृतमहाविद्यालयस्याङ्गलविभागस्य लब्धावकाशा अध्यापकाः श्रीमन्त आर०सी०पाठकमहोदया माघकृष्णद्वितीयायां रवि-वासरे (२९-१-५६) त्रिसप्ततिवर्षे वयसि ब्रह्मसायुज्यतां गता इति निवेदयतां नितान्तं चेखिद्यते नश्चेतः। एते महानुभावा आश्विनकृष्णपञ्चम्यां १९४० वैक्रमे संवत्सरे (२१-९-१८८३ ई०) स्वजनुषा वाराणसीवास्तव्यानां प०गोकुलचन्द्रपाठकमहोदयानां गेहमलङ्कृतवन्तः। स्थानीयात् 'क्वींस कालेज'नाम्नः शिक्षासंस्थानाद् बी०ए० परीक्षामुत्तीर्य महानुभावा इमे तत्र संस्कृतविषये सर्वातिशायित्वेन मित्रस्वर्णपदकमधिगतवन्तः। अत्र आचार्यनरेन्द्रदेवमहोदयाः, राज्यपुनःसंघटनायोगस्याध्यक्षाः श्रीफजले-अलीमहानुभावाश्चैषां सहपाठिन आसन्। ततः प्रयागनगरत एल० टी०-

प्रशिक्षणमधिगत्य १९१५ ई० वर्षे राजकीयसंस्कृतमहाविद्यालये आङ्ग्ला-ध्यापकपदे नियुक्ता एते पञ्चविंशतिवर्षपर्यन्तमनेकशः संस्कृतच्छात्रा-नाङ्ग्लभाषाभिज्ञानकार्षुः। महाविद्यालयतोऽवकाशं लब्ध्वा लेखनकार्या-र्पितं स्वीयं जीवनमेभिः, पञ्चाशत्सहस्रपृष्ठपरिमितं च साहित्यमारचि। आङ्ग्ल-हिन्दीकोशः, हिन्दी-आङ्ग्लकोश इत्यादिकाः कोशग्रन्था अन्ये च महत्त्वाधायका ग्रन्था रचिता एभिर्महानुभावैर्येषां लक्षाधिकाः प्रतयोऽधु-नावधिः प्रकाशिताः। एषामाङ्ग्ल-संस्कृतकोशोऽन्तिमा रचना, या च साम्प्रतमप्रकाशितैव वर्तते। उदारचरितानां निरभिमानिनां प्रतिभाजुषां शिक्षाशास्त्रिणामेतेषां चरणयोरेष शब्दप्रसूनाञ्जलिरर्प्यते ॥

## संस्कृतविश्वविद्यालयाधिनियमः

चिरप्रतीक्षितं वाराणसेयसंस्कृतविश्वविद्यालयविधेयकमुत्तरप्रदेशीय-विधानमण्डलेन पारितम्, महामान्येन राज्यपालेन स्वीकृत्याधिनियमपदवी-मारोपितं च। तदनु भाविनः संस्कृतविश्वविद्यालयस्य कार्यप्रणालीं निर्धारयितुं विशेषाधिकारिणो नियुक्तिरपि कृता प्रशासनेन। इत्थं संस्कृत-विश्वविद्यालयप्रतिष्ठापूर्वार्धं संपन्नम्।

अस्मिन्नधिनियमे सन्ति पञ्चाशद् धाराः। तासु विश्वविद्यालयस्यास्य नामधेयम्, कार्यारम्भविधिः, अत्र समागतानां पारिभाषिकशब्दाना-मभिप्रायः, विश्वविद्यालयस्वरूपम्, विश्वविद्यालयस्याधिकारक्षेत्रम्, इतर-संस्थानामनेन संयोजनम्, पाठ्यक्रमव्यवस्था, विश्वविद्यालयनिरीक्षण-व्यवस्था, संबद्धमहाविद्यालयनिरीक्षणम्, अस्य पदाधिकारिणः, कुलपति-प्रतिकुलपति-उपकुलपतीनां स्वरूपादिकम्, उपकुलपति-कोषाध्यक्ष-प्रस्तोतृ-ग्रन्थाध्यक्षाणां कर्तव्याधिकारयोर्निरूपणम्, विश्वविद्यालयप्राधिकारिणः, शिष्टपरिषत्-कार्यकारिणीसभा-विद्वत्परिषद्-अर्थसमितीनां स्वरूपादिकम्, पाठ्यक्रमसमितिनिर्धारणम्, छात्रकल्याणपरिषत्स्वरूपम्, परिनियम-अध्यादेश-विनियमानां निर्माणप्रकारः, विश्वविद्यालयपरीक्षासु प्रवेशार्हता, परीक्षाव्यवस्था, वार्षिकप्रतिवेदनाऽऽयव्ययादिविवरणव्यवस्था, विश्वविद्या-लयसंबद्धमहाविद्यालयास्तेष्वध्यापकानां नियुक्तिः, प्रथमोपकुलपतेर्विश्व-विद्यालयकर्मचारिवृन्दस्य च प्रथमा नियुक्तिरित्यादीनां विषयाणां समासेन प्रतिपादनं विद्यते। संस्कृतवाङ्मयाध्ययनाध्यापनव्यवस्थामधिकृत्येदं-प्रथमतया प्रवर्ततेऽयं विश्वविद्यालयः शिक्षणपरीक्षणोभयविधकार्यनिर्वर्तकः

प्राचीनतमायां भारतस्य सांस्कृतिकराजधान्यां वाराणस्याम्। सर्वेषां विषयाणामत्र संस्कृतभाषयैवाध्यापनादिकं भविष्यति। राजकीयसंस्कृत-महाविद्यालयेन, सरस्वतीभवनेन, उत्तरप्रदेशीयसंस्कृतशिक्षापरिषदा च क्रियमाणं कार्यजातमयमेव संपादयिष्यति। उत्तरप्रदेशीयाः संस्कृत-महाविद्यालया बहिस्स्थाश्च राज्यप्रशासनलब्धानुज्ञा अनेन संयोक्ष्यन्ते। उत्तरप्रदेशस्य राज्यपालोऽस्य कुलपतिः, काशीनरेशः श्रीविभूतिनारायण-सिंहमहोदय आजीवनं प्रतिकुलपतिश्च भविष्यति। संस्कृतभाषायामाधु-निकज्ञाने च निपुणोऽस्योपकुलपतिर्भविता। प्रथम उपकुलपतिः प्रशासनेन वर्षत्रयानधिककालिको नियोक्ष्यते। शिष्टपरिषत्कार्यकारिणीसभाप्रभृतीनां विश्वविद्यालयाङ्गानां कार्यपद्धतिं स्वरूपादिकं च निर्धारयितुं परिनियमा-दयो विधीयन्ते संस्कृतविश्वविद्यालयविशेषाधिकारिणा। अस्य कार्यारम्भः १९५७-५८ खिष्टाब्दयोः शिक्षणवर्षे भविष्यतीति संभाव्यते।

प्रबुद्धे स्वतन्त्रे भारते सुमहानेष महः संमंस्यते संस्कृतसमाजस्याभ्यु-न्नतये संस्कृतविश्वविद्यालयस्योद्घाटनदिवसो नाम। तमिममुत्सवक्षणं समुपस्थापयिष्यते उत्तरप्रदेशप्रशासनायानेकान् धन्यवादान् वितरति सुरभारतीसमाजः, विद्यागुरुं विश्वेश्वरं प्रार्थयते च संस्कृतविश्वविद्यालयस्य साफल्याय॥

## हस्तलेखसुरक्षोपक्रमः

उत्तरप्रदेशीयप्रशासनेन १६-६-५६ इति दिनाङ्कितमर्द्धशासकीयं परिपत्रं सर्वेषां मण्डलाधीशानां सविधे प्रेषितम्। तस्यायमाशयः— केन्द्रीयं प्रशासनमुत्तरप्रदेशीयं प्रशासनं च भूर्जपत्रतालपत्रादिषु लिखितानां महर्घाणां हस्तलेखानां द्रुतगत्या संजायमानं प्रणाशमनुशोचति, संभावयति च तेषां सर्वथाऽभावम्। अतस्तेषां सुरक्षायै अचिरेणोपाया विधेयाः। एतदर्थमेकं केन्द्रीयं विद्यासंस्थानं स्थापितं स्याद्यत्र समेषामेषां संग्रहोऽध्ययनं च क्रियेतेति विचाराधीनं वर्तते शासनस्य। समयसाध्यमेतत्। इतः पूर्वं कुत्र कियन्तः कीदृशा हस्तलेखाः सन्तीति परिज्ञानं परमावश्यकम्। इमे हस्तलेखा मठेषु, मन्दिरेषु, पण्डितानां गृहेषु वा भवेयुः। हस्तलेखाना-मेषां सर्वप्रथमं सूचीनिर्माणं परमावश्यकमिति।

अस्माभिरष्टमवर्षस्य चतुर्थेऽङ्के "हस्तलेखानामुपेक्षा" इति शीर्षके सम्पादकीये हस्तलेखानामुपेक्षाऽनुशोचिताऽऽसीत्। अधुना प्रशासनमत्रावदधातीति प्रमोदावसरोऽयमस्माकम्। तत्रोक्तमासीदस्माभिः—"हस्तलेखानां समुद्धारायाऽऽगामिन्यां पाञ्चवर्षिकयोजनायां कापि व्यवस्थाऽवश्यमेव विधेयेति ..." इति। कृता सा व्यवस्था प्रशासनेन। अधुना संस्कृतज्ञानामस्माकं कर्तव्यमपरमवशिष्यते। सर्वप्रथमं ग्रन्थस्वामिषु कृतपदयोरन्धविश्वासमिथ्यामोहयोरपनोदनं विधेयम्। एतच्च कार्यं साम्प्रतमपि भारतीयजनश्रद्धेयानां पण्डितानामेव। आसीद् ग्रन्थभस्मकारिणां तुरुष्काणां स कालः, यदा हस्तलेखानां सुरक्षायै ते ते उपायाः (भित्तिचयनादयः) अवलम्बिताः। नास्ति तेषां साम्प्रतं प्रयोजनम्। अधुना तु ग्रन्थालयसरित्स्वेव समुचितस्तेषां प्रवाहः, ग्रन्थपालगन्धापणिकपाणिष्वेव विक्रेयास्ते, ग्रन्थफलकभित्तिषु च चेतव्याः। समेषां संस्कृतानुरागिणां विशेषतोऽध्ययनाध्यापनव्यापृतानां महदिदं कर्तव्यं यत्ते यत्र क्वचन संस्कृतहस्तलेखान् जानीयुस्तत्सुरक्षायै प्रयतेरन्निति। अस्ति सरस्वतीभवनं नाम संस्कृतग्रन्थानां महान् पुस्तकालय इति ज्ञायत एव भवद्भिः। एषां हस्तलेखानां सूचीं निर्माय प्रेषयन्तु तां सरस्वतीभवनपुस्कालयाध्यक्षसविधे, स्वकीयमण्डलाधीशानां सविधे च। यः कश्चिद् ग्रन्थस्वामी सुरक्षाव्यवस्थाऽसमर्थः स सरस्वतीभवनसदृशाय साधनसंपन्नाय पुस्तकालयाय ग्रन्थान् दद्यात्। उत्तरप्रदेशीयेन प्रशासनेन द्वितीयपाञ्चवर्षिकयोजनायां सरस्वतीभवने हस्तलेखानां संग्रहाय प्रतिवर्षं दशसहस्ररूप्यकाणि निर्धारितानि। उत्कृष्टतमा ग्रन्था अनेन धनराशिना प्रतिवर्षं क्रेतव्या इति प्रचारणीय एष विषयोऽर्थकार्श्यग्रस्तानां ग्रन्थस्वामिनां पुरतः॥

## म०म०पण्डितचिन्नस्वामिशास्त्रिणः

वैदिकवाङ्मयानुशीलनपूतो म०म०प०चिन्नस्वामिशास्त्रिणां भौतिको देहो न पुनरप्यवलोकयितुं पार्येत, न वा सा नैकविधशास्त्राभ्यसनपटीयसी तेषां वाणी पुनरपि श्रोत्रकुहराणि नः पवित्रयिष्यतीति चिन्तयतः कस्य नाम सुरभारतीसमाराधकस्य मानसं प्रकामं न दूयेत। गतः स मनीषी त्रिदिवं श्रावणशुक्लषष्ठ्यां शनिवासरे (११-८-१९५६) कलिकातां नगरीमधिवसन् सप्तषष्टिवर्षे वयसि। अस्य महानुभावस्य जनिः १८९० तमे

ई० वर्षे मद्रासप्रान्तीये मण्डकोलनूरनामके स्थाने श्रीमतामप्पाशास्त्रिणां गृहे समपद्यत। पितुरधीतकृष्णयजुर्वेद एष महानुभावश्चेन्नपुर्यां श्रीकुप्पुस्वामि-शास्त्रि-श्रीवेङ्कटसुब्बाशास्त्रिप्रभृतिभ्यो मीमांसाशास्त्रं सम्यगधिजगे। उत्तर-भारते लुप्ताध्ययनप्रचारं मीमांसाशास्त्रं श्रौतकर्मकाण्डविज्ञानं च प्रचार-यन्नेष महानुभावो वाराणस्यामभिनवकुमारिल इव संमानितः। अधुनापि वाराणस्यां प० सुब्रह्मण्यशास्त्री, कलिकातायां प०पट्टाभिरामशास्त्री च तच्छिष्यवर्यौ तत्प्रज्वालितं मीमांसादीपमध्यापनस्नेहापूरप्रदानेन संजी-वयतः। नैके मीमांसाश्रौतकर्मकाण्डवेदादिविषयका ग्रन्था एभिर्महानुभावैः संपादिता रचिताश्च। उदारचरितस्य वेदगवीसेवानिरतस्यास्य महानु-भावस्य निधनं संस्कृतसमाजस्य महतीं क्षतिमावहति॥

## संस्कृतायोगः

भाषा नाम कस्यापि राष्ट्रस्य मूलभूतायाः संस्कृतेः सभ्यतायाश्च श्रेष्ठतमं संरक्षकं प्रकाशकं प्रचारकं च साधनम्। यदा हि श्रुतिर्भगवती विकारजातं वाचारम्भणमात्रं मनुते, तदा किमु वक्तव्यस्तस्या महिमा। तत्रापि देवभारती पुनः—"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इत्यपि वर्ण्यते। अतो भारतदेशस्य भारतीयसंस्कृत्यभिमानिन्या भारत-सन्ततेश्च कृते भारती भाषा नितान्तमनुसर्तव्या। दैवदुर्विपाकेण परकीय-सत्तानिगडिते भारते बहुकालमेषा भाषा सर्वतः समुपेक्षिता भवतु नाम, परं सौभाग्येन स्वातन्त्र्यप्राप्त्यनन्तरमस्याः पोषणं संवर्धनं च भारतीयानां कृतेऽवश्यकर्तव्यतयाऽऽपतति। अत एव भारतीसेवैकव्रतिभिर्विद्वद्भिः संस्कृतविश्वपरिषदा च मुहुर्मुहुरस्मिन् विषये शासनसूत्रधाराः प्रेरिताः। तस्यैव सुफलं यद्विगतवर्षीये 'अक्टूबरा'ख्यांग्लमासि भारतीयेनाधि-शासनेनैकः 'संस्कृतायोगः' नियुक्तः, अध्येषितं च यदेष आयोगो भारत-गतस्य संस्कृताध्ययनस्य साम्प्रतिकीं समवस्थां सर्वतः परिशील्याधि-शासनस्य पुरतः स्वीयं प्रतिवेदनं प्रस्तूयादिति।

आयोगस्यास्य आध्यक्ष्यं पश्चिमवङ्गविधानपरिषदध्यक्षा भाषाविशेष-ज्ञेषु मौलिरत्नायमानास्तत्रभवन्तो डॉ० सुनीतिकुमारचट्टोपाध्याया अलङ्कुर्वन्ति। साचिव्यं च पुण्यपत्तनविश्वविद्यालयीयसंस्कृतप्राध्यापका डॉ० रामचन्द्रनारायणदाण्डेकरमहोदया बिभ्रति। अन्ये च षट् प्राच्य-पाश्चात्त्यविद्याविभूषिता विपश्चितः सदस्यत्वेन वृताः, येषां नामान्यधो-

लिखितानि वर्तन्ते—(१) 'भारतीय-विद्याभवन'संचालकाः श्रीमन्तो जयन्तकृष्णहरिकृष्णदवेमहोदयाः, (२) यादवपुरविश्वविद्यालयप्राध्यापका डॉ० सुशीलकुमारदेवपादाः, (३) वाराणसेयहिन्दूविश्वविद्यालयस्थाः सयाजीरावगायकवाड़भारतीयसभ्यतासंस्कृतिप्राध्यापका डॉ० ति० रा० वेङ्कटाचलमूर्तिमहोदयाः, (४) मद्रपुरीविश्वविद्यालयस्थाः संस्कृतप्राध्यापकाः कुप्पुस्वामिगवेषणसमितिप्रधानाश्च डॉ० वे० राघवन्महाभागाः, (५) बेङ्गलूरस्थशाङ्करमठास्थानविद्वांसः पण्डितराजा वे० स० रामचन्द्रशास्त्रि-पादाः, (६) होशियारपुरस्थविश्वेश्वरानन्दवैदिकसंशोधनमन्दिरसंचालकाः प्राध्यापकश्रीविश्वबन्धुशास्त्रिमहोदयाश्च । आयोगेनानेन द्विसप्तत्युपधारा-युतत्रयस्त्रिंशद्धारोपेता सानुबन्धा प्रकरणचतुष्टयात्मिका प्रश्नावल्येका प्रकाश्य मासद्वयाभ्यन्तरे (१६-१२-५६, यावत्) उत्तरयितुं भारतीयेष्वखि-लेषु विद्वत्सु संस्थासु च प्रचारिता । एतत्सचिवास्थानं च पुण्यपत्तन एवास्ते । ततः परमयमखिलभारतीयसंस्कृतसेविनां मतान्यवगन्तुं प्रस्थितः। आन्ध्र-केरल-मद्र-वङ्गादिप्रदेशयात्राः परिसमाप्य, उत्तरप्रदेशयात्रायां वाराणसी-प्रयाग-साकेत-लक्ष्मणपुर-हरिद्वारनगरेषु गतश्च सः । तेषु तेषु स्थानेषु गत्वाऽऽयोगसदस्यैस्तत्रस्थविदुषः साक्षात्कृत्य साक्ष्यं संगृहीतम् । यद्यप्यायोगस्य संघटने संस्कृतकेन्द्रभूतस्योत्तरप्रदेशस्य, तत्रापि प्राचीन-परम्परापीठस्थल्या वाराणस्या विदुषां प्रातिनिध्यं सर्वथा समुपेक्षितमधि-शासनेन, तदर्थं भेरीघोषायिते आन्दोलने कृतेऽपि स घोषस्तेषां कर्णयोर्न प्रविष्टस्तथापि सन्तोषस्यास्तीदं स्थानं यत् स्वकीयभारतयात्राप्रसङ्गे आयोगसदस्यैरुत्तरप्रदेशीयानां वाराणसेयानां च विदुषां मतानि सादरं सुबह्ववधानेन श्रुतानि, तत्तद्विषयेऽलं विचारविमर्शश्च कृतः । वाराणस्यां च राजकीयसंस्कृतमहाविद्यालये, हिन्दूविश्वविद्यालये, गोयनकासंस्कृतमहा-विद्यालये, साङ्गवेदविद्यालये, रामानुजविद्यालये, विद्वत्परिषत्प्रभृतिषु च प्रधानविद्यापीठेष्वायोगसदस्यैः प्रमुखतमानां विपश्चितां साक्ष्यं संगृहीतम् । काशीविद्वत्परिषत्समक्षमायोगान्यतमसदस्यैः श्रीरामचन्द्रशास्त्रिभिः स्पष्टमुक्तं यद् वयमान्ध्र-केरल-मद्र-वङ्गप्रदेशेषु संस्कृतस्य साम्प्रतिकीमवस्थां विलोक्य नूनं निराशां गताः । किन्तु संस्कृतविद्याकेन्द्रभूतायामस्यां वाराणस्यां स्फुटं साक्षात्कृतं यदद्याप्यत्र तदेव पाण्डित्यं जागर्ति, यद्धि शङ्करभगवत्पादकाले आसीत् । अद्यापीयमखिलस्य जगतः प्रकाशदानाय सुपर्याप्तं सामर्थ्यं बिभर्ति । काशी हि संस्कृतविद्याया उद्गमस्थली । यावत् संस्कृतविदुषा-मभावतापेन नेयं शुष्यति, तावद्भारतीयैः स्वसंस्कृतिविषये निराशाभिभूतैर्न

भाव्यमिति । अपरैरायोगान्यतमसदस्यैः डॉ० वी० राघवन्महोदयैराशंसितं यद् मुक्तिदाया भागीरथ्या धारेव काशीतो निस्सृता संस्कृतधाराप्यखिलं देशं सेक्ष्यतीति । श्रीविश्वबन्धुशास्त्रिभिरुक्तं यद् विभिन्नप्रदेशेषु भ्रमद्भिरस्माभिः सर्वत्र विदुषां विचारेषु विस्मयकरमैकमत्यं समासादितमिति ।

आयोगप्रचारितायाः प्रश्नावल्याः सर्वे केचन वा प्रश्ना यथासम्भवं समाहिता अखिलभारतीयैर्विपश्चिद्भिः । एवं तत्र तत्र साक्ष्यग्रहणमपि सुसम्पन्नम् । काशिकराजकीयसंस्कृतमहाविद्यालयेऽपि समागत्य तैस्तदीया अनेके विद्वांसोऽधिकारिणश्च साक्षात्कृताः । महाविद्यालयेन च विचारविमर्शेन साकमेव तेभ्यः स्वकीयविद्यापीठ-सरस्वतीभवनपुस्तकालयादिकं दर्शितम्, 'सारस्वती सुषमा' प्रकाशिता हस्तलिखितपुस्तकसूची चोपायनीकृता । पुरैव चानेन महाविद्यालयेन प्रश्नावलीमिमामनुसृत्य (फुलिस्केपाकारा) षोडशपृष्ठात्मिका विस्तृततमा उत्तरावली प्रहिताऽऽसीत् । सर्वस्यास्य प्रश्नजातस्य विमर्शनमत्र सीमितेऽवकाशे दुःशकम् । एवमायोगीयस्य प्रतिवेदनस्य प्रकाशनोत्तरमेवात्र विमर्शनमधिकृतं भवेत् । तथाप्यत्र प्रमुखतमान् कांश्चन प्रश्नानुद्दिश्य समासतः किञ्चिद्विचार्यते । सम्प्रति संस्कृतस्य यादृशी किल दुःस्थितिरस्ति, न सा संस्कृतप्रणयिनां कथमपि तिरोहिता । तां च सुस्थितौ परिणमयितुं य उपायाः श्वोऽनुष्ठेयास्तेऽद्यैव समनुष्ठीयन्तामित्येतादृशी स्थितिरद्य संप्राप्ता । सौभाग्यादुत्तरप्रदेशप्रमुखैरङ्गुलिगण्यैः कतिपयप्रदेशाधिशासनैः स्वीये प्रदेशे द्वितीयपाञ्चवर्षिकयोजनायां यथाशक्ति यथासम्भवं च संस्कृतोन्नयनाय सर्वेषु संस्कृतक्षेत्रेषु प्रयतितमास्ते, तथाप्यखिलभारतीयदृष्ट्या विचार्यमाणे स यत्नो लघीयानेव । प्रादेशिकदृशाऽपि च न स सर्वथा सन्तोषावहः । अतः सर्वप्रथममेते संस्कृतज्ञा विपुलेन धनेन विविधाभिः सुविधाभिश्च प्राणनीयाः । एतदर्थमधिशासनं तु संस्कृतविदुषां छात्राणां च कृते विपुलमनुदानं ददातु, येन साम्प्रतिक्यः संस्कृतसंस्थाः सबला सत्यस्तेषां योगक्षेमं सुखेन परिचालयेयुः । परं नैतावदेव पर्याप्तम्, किन्तु तेषां स्थायिवृत्तिव्यवस्थाऽपि नितरामावश्यकी । तदर्थं च वाराणसेयभाविसंस्कृतविश्वविद्यालयमादर्शीकृत्य प्रतिप्रदेशं संस्कृतविश्वविद्यालयसंघटनं प्राथम्यमर्हत्तमत्वं च भजते । एवं संस्कृतपरीक्षोत्तीर्णस्नातकानामपि निखिलेषु राजकीयव्यवहारपदेष्वाङ्गलपरीक्षोत्तीर्णस्नातकैः साकमविशेषं प्रवेशदानमपि महत्तरं साधनम् । एवं माध्यमिकशिक्षायां संस्कृतस्यानिवार्यतया प्रवेशोऽप्यत्यन्तमावश्यकः । एवं

संस्कृतप्रचारप्रसाराभ्यामावश्यकं निखिलं च साम्प्रतिकं प्रचारसाधनतन्त्रमप्याश्रयणीयम्। विशेषतः संस्कृतवाङ्मयस्य गवेषणम्, सम्पादनम्, राष्ट्रभाषाद्यनुवादमुखेन सर्वजनसुलभीकरणम्, प्राचीनदुर्लभतरहस्तलिखितग्रन्थानां संग्रहः संरक्षणं चैवमादिकमत्र विषये सुमहदुपकारकं भवेत्। तदर्थं चैका केन्द्रीयशासनाधिष्ठिता संस्कृतविदुषां समितिरप्यावश्यकी। संस्कृतपत्रपत्रिकादीनां प्रकाशनमप्यत्र विषये परमं साहाय्यमाचरिष्यति। तथैव संस्कृतशिक्षापद्धतिमपि सर्वाङ्गपूर्णां सामयिकीं व्यवहारक्षमां च विधातुं यत्नो विधेयः। संस्कृताध्ययनस्य प्राचीनतमा पारम्परिकी पद्धतिर्हि नितान्तं पाण्डित्यपूर्णा, अथापि न सा सर्वाङ्गीणा, अपि त्वेकदेशीयैव। साम्प्रतं च मानवीयाः सम्बन्धा विश्वव्यापकीभूताः। अतो वैज्ञानिकैतिहासिकसमीक्षणात्मिकाया नवीनपद्धतेः समाश्रयणमपि कथमपि नोपेक्षणीयम्। उभयोः पद्धत्योः सम्मिश्रणेनाखिले भारते एकरूपा संस्कृतशिक्षा परिचाल्येत चेन्नूनं सा साम्प्रतिकमभीष्टजातं सुसम्पाद्य प्राचीनपाण्डित्यपरिरक्षणेऽपि क्षमा भवेत्। प्राचीनपद्धतावपि सम्प्रत्युपेक्षितानां विविधकलानां ह्रासपथमुपेयुषां वैदिक-तान्त्रिकवाङ्मयानां ज्यौतिषायुर्वेदादिविषये गवेषितसमुन्नतविज्ञानानामन्येषां चावश्यकविषयाणां सपरिकरं प्रायोगिकं च प्रशिक्षणं परिष्कृते नूत्नसंस्कृतशिक्षाक्रमे परमावश्यकम्। विषयस्यास्य विश्वविद्यालयानुसन्धानप्रतिष्ठानपुस्तकालयादीनां च स्वरूपनिर्धारणोपक्रमोऽपि काशिकराजकीयसंस्कृतमहाविद्यालयेन कृत एव। सम्प्रति च सर्वापि संस्कृतज्ञजनता संस्कृतायोगप्रतिवेदनं सोत्कण्ठं प्रतीक्षते, आशास्ते च तत्प्रतिवेदनं सम्पद्यमानसंस्कृतह्रासावरोधोपायान् संस्कृताभ्युत्थानोपायांश्च समक्षमुपस्थाप्य केन्द्राधिशासनं तदनुष्ठानायानुरोध्य च संस्कृतस्य शं विधास्यतीति॥

## संस्कृतविदुषां विचारगोष्ठी

वाराणसेयराजकीयसंस्कृतमहाविद्यालये मार्गशीर्षकृष्णद्वितीयायां शनिवासरे (९-११-५७) उत्तरप्रदेशस्य शिक्षा-गृह-सूचनामन्त्रिणां माननीयश्रीकमलापतित्रिपाठिमहोदयानां साभापत्ये वाराणसेयविदुषामेका विचारगोष्ठी समायोजिता। अत्र श्रीमन्तो गिरिधरशर्मचतुर्वेद-राजेश्वरशास्त्रि-सभापत्युपाध्याय-सत्यनारायणशास्त्रिकविराज-नारायणशास्त्रिखिस्ते-गोपालशास्त्रिदर्शनकेशरि-नागेशोपाध्याय - बदरीनाथशुक्ल - अनन्तशास्त्रि-

फडके-रामबालकशास्त्रिप्रभृतयः पञ्चविंशतिर्विद्वांसः, संयुक्तशिक्षासंचालक-बलवन्तसिंहस्याल-रामरेणुलाहरी-कुबेरनाथसुकुल-नवलकिशोरश्रीवास्तव-रामनरेशमिश्रं-प्रकाशचन्द्रगौडप्रभृतयः शिक्षाधिकारिणश्च समुपस्थिता आसन्। १—संस्कृतशिक्षायाः समस्याः, २—संस्कृतशिक्षायाः प्रचारः, प्रसारः, संवर्द्धनं च, ३—वर्तमानव्यवस्थायामपेक्षितं संशोधनमिति त्रय आसंस्तत्र मुख्या विचारणीया विषयाः।

त्रयाणामप्येषां विषयाणां विशदीकाराय राजकीयसंस्कृत-महाविद्यालयस्य प्रधानाचार्येण श्रीकुबेरनाथशुक्लमहोदयेन समेषां विदुषां सविधे परिपत्रमेकं प्रेषितं सप्तपृष्ठात्मकं निमन्त्रणपत्रेण साकम्। तत्र 'संस्कृतशिक्षायाः समस्याः' इति प्रथमं विषयमधिकृत्य लिखितं तैः—

संस्कृतविद्यालयेषु महाविद्यालयेषु च वेतनस्याल्पीयस्त्वात् सुयोग्या विद्वांसो नोपलभ्यन्ते, अतः कलाशालाध्यापकानामिवात्रत्याध्यापकानामपि वेतनं स्यादित्येतदर्थं शासनेन प्रयतितव्यम्। संस्कृतपाठशालानां भवननिर्माणाय, पुस्तकालयसमुन्नत्यै अन्येषामुपकरणानां संग्रहाय च राज्यानुदानमपेक्षितम्। प्रौढपाण्डित्यस्य रक्षणाय शासनेन शलाकापरीक्षादीनां व्यवस्था विधेया, तत्रोत्तीर्णा विद्वांसोऽन्ये च विशिष्टा विपश्चितो वृत्तिप्रदानादिना सत्कार्याः। संस्कृताध्यापकानां वेतनमानस्य निर्द्धारणम्, निर्वाहनिधेः सेवासुरक्षायाश्च व्यवस्थाऽऽवश्यकी। साम्प्रतं प्राचीन-राजसामन्तव्यवस्थाया उन्मूलनाद्धनिकवर्गस्य च प्रायः संस्कृतशिक्षा-विमुखत्वात् संस्कृतपाठशालानां तत्रत्यच्छात्राणां चार्थिकी व्यवस्था शोचनीयां दशां प्रतिपन्ना, अतो राजकीयसाहाय्येनैषां पोषणमनुवेल-मपेक्ष्यते। जिलापरिषन्नगरपालिकाप्रभृतयः स्थानीयसंस्था मठमन्दिरादीनां निधयश्चापि तामिमां दुरवस्थां परिहर्तुं क्षमन्ते। छात्रवृत्तीनां व्यवस्था संस्कृतस्नातकानां जीविकाक्षेत्रविस्तारश्च विधेय एव। जीविकाक्षेत्र-विस्तारमन्तरा संस्कृतशिक्षां प्रति छात्राणामाकर्षणमतीव दुःशकमिति।

'संस्कृतशिक्षायाः प्रचारः, प्रसारः, संवर्द्धनं च' इति द्वितीयं विषयमधिकृत्य परिपत्रे तस्मिन् राजकीयसंस्कृतविद्यालयानां महा-विद्यालयानां वाराणस्यां कन्याविद्यालयस्य च स्थापना, उत्तरमध्यमा-

शास्त्रिपरीक्षोत्तीर्णानां छात्राणां क्रमशो बी०ए०-एल०एल०बी०परीक्षासु, एम० ए० परीक्षासु च प्रवेशाधिकारः, अखिलभारतीयाधारेण संस्कृतपरीक्षाणां मान्यतास्वीकृतिः, संस्कृतभाषायां सरलस्य सुबोधस्य च सामयिकसाहित्यस्य निर्मितिः, प्राचीनहस्तलिखितग्रन्थानां संग्रहसंरक्षणयोः संपादनप्रकाशनयोश्च व्यवस्था, समाजशास्त्रशिक्षा-शास्त्रप्रभृत्याधुनिकविषयेषु संस्कृतभाषायामुत्कृष्टग्रन्थानां निर्माणम्, संस्कृतविद्यालयेषु सैनिकशिक्षा-क्रीडा व्यायाम-संगीत-हस्तकलानां शिक्षणप्रबन्धः, संस्कृतपत्रपत्रिकादीनां प्रकाशनं चातीवावश्यकमिति साधु विवेचितम्।

'वर्तमानव्यवस्थायामपेक्षितं संशोधनम्' इति तृतीयविषयस्य विशदीकारप्रकारस्तस्मिन् परिपत्र एवं प्रादर्शि—संस्कृतविद्यालयानां प्राथमिकमाध्यमिकादिसंज्ञया वर्गीकरणं मान्यताप्रदानं च सुव्यवस्थायै परमावश्यकम्। विद्यालयेषु पञ्जीकृतसमितीनां व्यवस्था, तासामधि-कारसीमा च निर्धारणीया। संस्कृताध्यापकानां सेवाकालस्थिरतायै नियमविधानं निर्णयकारिणीसमितेः संघटनं च विधेयम्। संस्कृत-विद्यालयेभ्यः समर्पितनिधीनां न्यासनिधीनां च सदुपयोगाय कश्चन विधेयको राजाज्ञा वाऽपेक्षिता। संस्कृतविद्यालयेषु प्राथमिकमाध्यमिक-कलाशालासंचालनं प्रतिरोद्धव्यमिति।

वैदिकमङ्गलाचरणेन साकं गोष्ठीकार्यारम्भः समजायत। प्रथममाग-तेभ्यो विद्वद्भ्यः शिक्षाधिकारिभ्यश्च स्वागतं व्याहरन्तः प्रधानाचार्यमहोदया विचारगोष्ठीपरिधिं तन्महत्त्वं संस्कृतशिक्षायां समुपस्थितानां प्रश्नानां च स्वरूपमुपस्थापितवन्तः। तदनन्तरं तानिमान् विषयानुद्दिश्यानेकैर्विद्वद्भिः स्वकीयानि मतान्युपन्यस्तानि। सर्वे विद्वांसः प्रधानाचार्यसमुपस्था-पितान् विचारान् हार्देन भावेनाभ्यनुज्ञातवन्तः।

विचारगोष्ठ्यां भाषमाणैर्विद्वद्भिः संस्कृतशिक्षाप्रसाराय संस्कृत-भाषाया उन्नत्यै च नैकेऽन्येऽप्युपायाः प्रस्ताविताः। तद्यथा—कलाशालानां पाठशालानां चाध्यापकानां वेतनमानं समानं स्यादित्यत्रावधातव्यम्। संस्कृतपाठशालाध्यापकानां वेतनेषु वैषम्यव्यवहार एव संस्कृतभाषाप्रसारे प्रधानः परिपन्थी। माध्यमिकशिक्षात उच्चशिक्षापर्यन्तं कलाविभागीय-परीक्षासु संस्कृताध्ययनं तत्रोत्तीर्णता चानिवार्ये विधेये। आकाशवाणी-

साहाय्येन सरलतमसंस्कृतपाठानां सरलसंस्कृतशिक्षाप्रणालीनां च प्रसारो विधेयः। संस्कृतभाषायां सुबोधसाहित्यस्य निर्माणं प्रकाशनं चावश्यकम्। भारते राष्ट्रे संस्कृतभाषायाः संमानाय, संरक्षणाय, प्रसाराय, प्रचाराय च आकर्णिकाद् आराज्यपालं सर्वेष्वेव राजकीयपदेषु संस्कृतज्ञाय रूप्यकमेकमधिकं वेतनमन्यापेक्षया दीयेत, संस्कृतस्नातकाश्च जीविकायाः सर्वेषु क्षेत्रेषु निर्बाधं प्रवेशाधिकारं लभेरन्। संस्कृत-भाषायां प्रौढपाण्डित्यस्य संरक्षणाय द्विविधा संस्कृतपाठ्यप्रणाली संचाल्येत—एका नूतनविषयसमावेशवती, अपरा च शुद्धा। प्रथितानां संस्कृतविदुषां गृह एव शास्त्राणामध्ययनाध्यापनयोर्व्यवस्था गुरवे छात्रेभ्यश्च राजकीयवृत्तिप्रदानपुरस्सरं विधेया। भारतीयज्योतिष-शास्त्रस्य, आयुर्वेदस्य, अन्यासां च प्राच्यविद्यानामाधुनिकेन गणित-विज्ञानेन, खगोलविज्ञानेन, चिकित्सापद्धत्याऽन्येन पाश्चात्त्यज्ञानेन च साकं तुलनात्मकं समालोचनात्मकं चाध्ययनमतीवावश्यकमिति।

अधिगतविद्वदभिप्रायाः शिक्षामन्त्रिणः श्रीत्रिपाठिनः समवोचन्—"संस्कृतविश्वविद्यालयविधित्सया उत्तरप्रदेशीयं प्रशासनं संस्कृतोन्नत्यै स्वकीयमनुरागं प्रकटयति। संस्कृतोन्नतिपरिपन्थिनीनां बाधानां स्वरूप-ज्ञानायोत्तरप्रदेशीयानां विदुषामेकं संमेलनमायोज्येतेत्यासीन्मे मनसि। किन्तु समयसाध्यं तत्। अपि च, वाराणसी समस्तोत्तरप्रदेशस्यैव न, अपि तु समस्तस्य भारतवर्षस्य सांस्कृतिकं प्रातिनिध्यं बिभर्ति। "अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इत्याभाणकमनुसरता मया वाराण-सेयानां तत्रभवतां विदुषां विचारवीथिरनुसर्तव्येति निश्चितम्। तन्निश्चय-स्याद्य मधुरेयं परिणतिर्वाराणसेयविद्वज्जनविचारश्रवणफलं परिददाति। भवदीयविचारश्रवणेन ज्ञायते त्रिविधाः साम्प्रतं संस्कृतभाषायाः समक्षं समस्या वर्तन्ते। तासु कासाञ्चित् समाधानमविलम्बमेव भवितुमर्हति। द्वितीयकोटिकाः समस्याः सामान्येन विचारविमर्शेन परिहार्याः। सन्ति काश्चन समस्याः, यासां समाधानं "सहसा विदधीत न क्रियाम्" इति भारविभारतीमनुसरद्भिरस्माभिस्त्वरायां नैव कर्तुं पार्येत। सुदूरभाविनं परिणामं चिन्तयन्तो वयं मूलोन्मूलकानि परिवर्तनानि नैव चिकीर्षामः।

संस्कृतपाठशालाध्यापकानां वेतनमानस्य निर्द्धारणं परमावश्यकम्। आगामिनि वर्षे जूनियरहाईस्कूलपर्यन्ता सार्वजनिकशिक्षा सम्पूर्णे राज्ये

निःशुल्का भविष्यति। उत्तरप्रदेशवर्तिनीनां प्राथमिकसंस्कृतपाठशालानामपि संचालनं राज्यशासनेन क्रियेतेति संभावनाकोटिमवतरेत्। प्रथमं वयं प्रयागे, विन्ध्यक्षेत्रे, अयोध्यायाम्, मथुरायां वृन्दावने वा, हरिद्वारे, कुशीनगरे च राजकीयसंस्कृतमहाविद्यालयस्थापनां चिकीर्षामः। इमे महाविद्यालयाः संस्कृतस्य प्रचारप्रचारयोः संवाहकाः, अथ च भाविनः संस्कृतविश्वविद्यालयस्यापि पोषका भविष्यन्ति" इति।

शिक्षामन्त्रिणां विद्वज्जनविचारश्रवणरूप एष प्रयत्न उत्तरप्रदेशीय-प्रशासनपरम्परानुरूप एव। संस्कृतपाठ्यप्रणालीपरिवर्तनाय संस्कृत-परीक्षास्वेकरूपतास्थापनाय च पूर्वमप्येवंविधाः प्रयत्ना व्यधायिषत। परिणामतो नूतना संस्कृतपाठ्यप्रणाली साम्प्रतं संचाल्यते, अत्रत्यराज-कीयसंस्कृतमहाविद्यालयपरीक्षाभिरितरपरीक्षाणामैकरूप्यं समानमान्यता च शनैः शनैर्बुभूषति। तद्वत् शिक्षामन्त्रिणामेष प्रयत्नोऽपि संस्कृत-शिक्षायाः शुभोदर्काय भवेत्। उत्तरप्रदेशीयसंस्कृतशिक्षापरिषदा कार्तिक-कृष्णनवम्यां गुरुवासरे (१६-१०-५७) स्वकीयेऽधिवेशने षट्सु तीर्थस्थानेषु राजकीयसंस्कृतमहाविद्यालयस्थापनाविषयकः प्रस्तावः स्वीकृतः। अस्यां विचारगोष्ठ्यां सर्वैर्विद्वद्भिः प्रस्ताव एष अभिनन्दितः, शिक्षामन्त्रिमहोदयेन च महाविद्यालयस्थापनामुद्दिश्यैव न, अपि त्वितरप्राथमिकसंस्कृतविद्यालया अपि राजकीयकोषेणाधिकाधिकं साहाय्यं नूनं लभेरन्निति संभावनापि प्रदर्शिता।

संभाव्यते संस्कृतस्नातकानां जीविकाक्षेत्रविस्तारः, प्रतियोगिता-परीक्षाप्रशिक्षणादिषु संस्कृतपरीक्षाणां मान्यता, संस्कृतविद्यालयेभ्यो राजकीयसाहाय्यवृद्धिः, पाठशालीयाध्यापकानां वेतनमानस्थिरीकरणम्, राजकीयसंस्कृतमहाविद्यालयानां स्थापनमित्यादयो विचारगोष्ठीविषया-स्तूर्णं मूर्तं रूप धारयन्तः संस्कृतसमाजसमक्षमवतीर्णाः स्युरिति॥

## त्रिभाषानियमः संस्कृतं च

भारतीयेन प्रशासनेन माध्यमिकशिक्षायामधुना त्रिभाषानियमः प्रवर्तितः। तदनुसारं माध्यमिककक्षास्वधीतिनश्छात्रास्तिस्रो भाषा अनिवार्यरूपेणाध्यापयिष्यन्ते। ताश्च आङ्गलभाषा, हिन्दी, प्रान्तीया च काचन भाषेति। अत्र संस्कृतभाषाऽत्यन्तमुपेक्षिता, आङ्गलभाषा च

व्यतीतेष्वपि विधाननिर्माणानन्तरं पञ्चदशवर्षेषु पूर्वतोऽप्यधिकतरं प्राधान्यं भजते। भारते देशे विभिन्नेषु प्रान्तेषु च परस्परं हिन्दीभाषया तत्तत्प्रान्तीयभाषाभिश्च सर्वो व्यवहारः प्रचलिष्यतीति निश्चये सत्यपि कृते नाद्यापि विदेशीया आङ्गलभाषा जहाति चेतांसि प्रशासनाधिकृतानाम्। भारतीयताया उन्मूलनकरी भाषा रक्ष्यते, संरक्षिका च संस्कृतभाषा तिरस्क्रियत इत्यहो विधिविडम्बनम्!

भारतीयसंघशासनस्य संविधानेऽष्टम्यामनुसूच्याम्—आसामी, उड़िया, उर्दू, कन्नड, काश्मीरी, गुजराती, तमिल, तेलुगु, पंजाबी, बंगला, मराठी, मलयालम, संस्कृत, हिन्दी—इत्येताश्चतुर्दशभाषा राष्ट्रभाषात्वे-नाङ्गीकृताः, यासु संस्कृतभाषाऽन्यतमा। अन्ताराष्ट्रियव्यवहारेष्वाङ्गल-भाषायाः, अन्तःप्रान्तीयव्यवहारेषु हिन्दीभाषायाः, प्रान्तीयव्यवहारेषु च तत्तत्प्रान्तीयभाषाणामुपयोगो भविष्यति। अस्यां स्थितौ व्यवहारे कुत्राप्यु-पयोगमलभमानायाः प्राचीनायाः संस्कृतभाषायास्तत्र समावेशे किं प्रयोजनम्?

संविधाने चतुर्दशभाषासु हिन्दीभाषा मुख्यतमाऽङ्गीकृता। सा शनैः शनैराङ्गलभाषायाः स्थानं गृह्णीयादित्येतदर्थं तस्याः शब्दभाण्डाराय मुख्यतया संस्कृताद् गौणतया चान्यभाषाभ्यः शब्दग्रहणेन तस्याः समृद्धि-सम्पादनं संघस्य कर्तव्येषु परिगणितं संविधानस्य ३५१ तमेऽनुच्छेदे। न केवलं हिन्दीभाषायाः, अपि तु सर्वासामप्येतासां भाषाणां समृद्धिः संस्कृता-यत्तेति निश्चप्रचं जानाति सर्वो लोकः। भारतस्य सांस्कृतिकं धार्मिक-मैतिहासिकं च निधानं संस्कृतभाषायामेव सर्वात्मना सुरक्षितं तिष्ठति। सर्वेषां राज्यानां तत्रत्याया जनताया भाषाणां चैकतास्रोतस्तत एव प्रवहद् दृश्यते। दक्षिणभारते हिन्दीभाषाया विरोधो दृश्यते, न तु संस्कृतस्य। जननप्रभृतिमरणपर्यन्तं सम्पाद्यमानेषु संस्कारेषु, व्रतोपवासा-दिषु, सांस्कृतिकेषु धार्मिकेषु च पर्वोत्सवादिषु भारतीयजनताया जीवनं संस्कृतभाषया सर्वात्मना ओतं च प्रोतं च दृश्यते। रामायणमहाभारतयोः पुराणादीनां च कथाभिर्भारतीय आत्मा साहित्यं चानुप्राणितम्। न केवलं भारतवर्षम्, अपि तु भारत-यूरोपीयभाषापरिवारदेशाः, दक्षिणपूर्व-एशियास्था देशाश्चास्या एव भाषाया महिम्ना कामप्यात्मीयतामनु-भवन्ति भारतेन सह। प्राचीनाया अपि संस्कृतभाषाया एतद्वैशिष्ट्यमेव तस्या राष्ट्रभाषात्वप्रयोजकमङ्गीकृतं संविधाननिर्मातृभिः।

अस्याः संस्कृतभाषाया उन्नत्यै प्रशासनेन संस्कृतायोगः संघटितं आसीत् । तत्परामर्शमनुसृत्य तस्या भाषायाः प्रचाराय प्रसाराय चानेकानि कार्याण्यधुनापि सम्पाद्यन्ते । किन्तु तानि परम्परागतसंस्कृतशिक्षणसंस्थाः, विश्वविद्यालयगतसंस्कृतविभागांश्च केवलमभिव्याप्नुवन्ति । माध्यमिक-शिक्षागृहीतृभ्यः संस्कृतशिक्षाऽनिवार्यरूपेण प्रदेयेति संस्कृतायोगस्य प्रस्तावो नाद्यापि कार्यरूपेण परिणतिं भजते । प्रशासनेन प्रवर्तितो नूतनस्त्रिभाषानियमस्तु तस्य प्रस्तावस्य विनाशक एव ।

आङ्ग्लानां शासनकाले संस्कृतभाषा आरब्यभाषा चैकस्यामेव कोटौ परिगण्येते स्म । तादृश एव व्यवहारो धर्मनिरपेक्षस्य भारतीयसंघस्य संचालकै राजपुरुषैरद्यापि क्रियते । इस्लामख्रीष्टसिखधर्मानुयायिनः किमर्थं संस्कृतं पठेयुरिति प्रश्नो जागर्तितरां तेषां समक्षम् । वयमत्र ब्रूमः—साम्प्रतं विभिन्नधर्मानुयायिनामेषां जनानां पूर्वे पुरुषाः परिस्थिति-विशेषेषु विभिन्नानेतान् सम्प्रदायानङ्गीचक्रुः । तेषां चास्माकं च पितरः समानधर्मानुयायिन एवाऽऽसन् पूर्वम् । विदेशीयेन शासनेन साम्प्रदायिकं विद्वेषमुद्भाव्यते स्म स्वार्थसाधनाय । धर्मनिरपेक्षे राज्ये स्वस्वसम्प्रदाया-नुसारं धार्मिकाणि कृत्यानि सम्पादयन्तु नाम सर्वे जनाः, किन्तु भारतस्य प्राचीनेतिहाससाहित्यनिर्माणे सर्वेषामस्माकं पूर्वपुरुषाणां समानमेव रिक्थमासीदित्यभिमानस्य स्फूर्तिर्यथा सर्वेषु भारतीयेषु संजायेत, तया च स्फूर्त्या सांस्कृतिकमैक्यं निर्मीयेत, तेन च सांस्कृतिकेनैक्येन धर्मनिरपेक्षस्य राज्यस्य दार्ढ्यं सम्पाद्येत, तथा प्रयतनीयमेव शासनेन । एतच्च कार्यं संस्कृत-भाषाया अनिवार्येणाध्ययनेन यथा सुशकं स्यात् तथा नान्येन केनचिदु-पायान्तरेण ।

संस्कृतभाषा नाम सम्पूर्णाया भारतीयजनतायाः पूर्वपुरुषाणां श्रद्धास्पदं भाषा । "उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यादीनि सहिष्णुतायाः पोषकाणि सुभाषितानि तत्रैव दृश्यन्ते । यहूदिनः पारसी-काश्च विधर्मिभिर्वित्रासिता भारतं शरणस्थानममन्यन्त पूर्वस्मिन् काले । साम्प्रतमपि नृशंसेन चीनशासनेनाक्रान्ता भोटदेशीया जना अत्र शरण-मलभन्त । विचारस्वातन्त्र्यम्, धार्मिकी सहिष्णुता, शरणागतवत्सलता च भारतस्य स्वाभाविकं रिक्थम् । एते गुणा भारतीयेषु सर्वधर्मानुयायिषु जनेषु यथा नाम दार्ढ्येनाहिताः स्युस्तदर्थमध्येयं संस्कृतम् । सत्यमेतत्

सत्वरमेव प्रत्यक्षीक्रियतां भारतीयशासनाधिकृतैः। सर्वप्रकारिकाया एकतायाः कियन्मूल्यमिति प्रचलितेऽस्मिन् चीन-पाकिस्तान-भारतसमर-प्रसङ्गेऽनुभूतमेव नूनम्।

त्रिभाषानियमेन संस्कृतमुन्मूलितं स्यादित्यत्र विषये सर्वप्रथमं राजस्थानराज्यपालेन महामान्येन डॉ० सम्पूर्णानन्दमहोदयेन जनता प्रशासनं च प्रतिबोधितम्। तदर्थं धन्यवादार्हास्ते। वाराणस्यां वाराणसेय-संस्कृतविश्वविद्यालयोपकुलपतिभिः श्रीसुरतिनारायणमणित्रिपाठिमहोदयै-रन्यैश्च संस्कृतार्पितजीवनैर्विद्वद्भिः सम्भूय संस्कृतभाषायाः परिरक्षणाय इमे विकल्पाः परिकल्पिताः—त्रिभाषानियमस्य स्थाने चतुर्भाषानियमः करणीयः, अथवा आङ्ग्लभाषया सह संस्कृतभाषाऽध्याप्येत, अथवा क्षेत्रीयभाषाभिः सह संस्कृतमध्याप्येत, अथवा कोऽप्यन्यः प्रकारः संस्कृत-भाषाध्ययनाय यथासौविध्यं प्रशासनेनैव स्थिरीकरणीय इति।

अत्र प्रशासनेन नूनमवधातव्यम्॥

## संस्कृतविश्वपरिषदोऽष्टममधिवेशनम्

मईमासस्य २७-२८-२९ दिनाङ्केषु बंगलोरनगरे संस्कृतविश्वपरिषदो-ऽष्टममधिवेशनं श्रीमतां महामान्यानां डॉ०सर्वपल्लीराधाकृष्णन्महोदयाना-माध्यक्ष्ये संपन्नम्। विगते वर्षे सितम्बरमासे आयोजितमिदमधिवेशनं भारते पाकिस्तानकृतेनाक्रमणेन हेतुना स्थगितमासीत्।

२७ दिनाङ्के सायं ५–३० वादनसमये सुप्रसिद्धे सुन्दरे च राजकीये लालबागनामक उपवनेऽधिवेशनस्य कार्यारम्भः संजातः। मैसूरमुख्य-मन्त्रिणां स्वागतभाषणमनु मैसूरराज्यपालश्रीगिरिमहोदयानाम्, आन्ध्र-राज्यपालश्रीपट्टणथानुपिल्लैमहोदयानां चाभिभाषणे संवृत्ते। परिषदः कार्याध्यक्षैः श्रीक०मा०मुंशीमहोदयैः प्रार्थिता महामान्या राष्ट्रपति-महोदया उद्घाटनभाषणमकुर्वन्। तत्रोक्तं तैः—

"अस्यां परिषदि मम स्थानं न राष्ट्रपतित्वेन ग्राह्यम्। संस्कृतस्य महत्त्वं जानन्नेवाहमत्रोपस्थितोऽस्मि। मानवजीवनस्य समुचितव्याख्या-ज्ञानाय तथा तस्य मूल्यनिर्धारणाय संस्कृताध्ययनं देशे परमावश्यकम्। संस्कृतसाहित्यं चिरप्राचीनं सदपि चिरनवीनं विद्यते। भारते सर्वासां

संस्कृतीनामुत्तमांशः, श्रेष्ठः सारः संस्कृतद्वारैवात्मसात्कृतो विद्यते। अत्र म्लेच्छा अपि ऋषिवत् पूज्या अभवन् यदि तैः सत्यं किमपि तत्त्वं प्रतिपादितम्। संस्कृतस्य प्रसारेणैव भारतं प्रभावि तिष्ठेदिति मे दृढो विश्वासः" इति।

द्वितीये दिवसे (२८-५-६६) प्रातः संस्कृतविश्वपरिषदः कार्यकारिसमितेरधिवेशनं संपन्नम्, समागतैः प्रतिनिधिभिर्निबन्धानां कवितानां पाठो विचारविनिमयश्च विहितः। अपराह्णवेलायां संस्कृतभाषासमस्या अन्यांश्च विषयानवलम्ब्य प्रस्तावाः पुरस्कृताः समर्थिताः पारिताश्च।

तृतीये दिवसे (२९-५-६६) प्रातः प्रतिनिधीनां भाषणानि तेषु तेषु प्रदेशेषु संस्कृतविषयिणीं प्रगतिमुद्दिश्य संपन्नानि। एकादशवादनवेलायां च मुंशीमहोदयानामाध्यक्ष्ये पत्रकारपरिषदोऽस्मिन्नेवाधिवेशने विशेषतः समायोजितायाः संमेलनमभवत्। श्री र० र० दिवाकरमहोदयैः साकं कतिपयपत्रकाराणामुपसमितिरेका स्थापिता, संस्कृतपत्रिकाभ्यः समुचितं साहाय्यं संरक्षणं चोपलब्धुम्। ततोऽपराह्णे प्रस्तावादिकं विविधेषु विषयेषु शास्त्रार्थश्चाभवन्।

१९५१ तमे ईशवीये वर्षे पावने सोमनाथक्षेत्रे संस्कृतविश्वपरिषदः स्थापना समजनि। ततः प्रभृति श्रीमतां क०मा० मुंशीमहोदयानां समुद्यमेन संस्कृतभाषायाः संस्कृतसेविनां च कल्याणाय योग्यं पदक्रमं विदधती सेयं संस्कृतविश्वपरिषदनवरतं सुस्थिरसंकल्पा प्रवर्तते। इदमेवास्याः परिषदो वैशिष्ट्यं यदत्र प्राचीनाध्ययनप्रणालीमनुसरन्तः पण्डिताः, नूतनामालोचनात्मिकां सरणिं क्षुन्दन्तः प्राध्यापकाः,संस्कृतप्रियाः शासकाश्च समवेत्य देववाण्याः समुन्नत्यर्थं प्रयतन्ते। मुंशीमहोदयानां समुद्यमेनास्या अधिवेशनेषु केन्द्रीयप्रशासनाधिकारिणस्तत्तत्प्रान्तीयशासनाधिकारिणश्च विशेषतो दत्तावधाना भवन्ति। फलतः संस्कृतविषयिणी का नाम मान्यता वर्तते भविष्यति वा शासनस्येति तत्र स्फुटं प्रतीयते। केन्द्रीयप्रशासनेन निर्धारिते त्रिभाषासूत्रे संस्कृतभाषायै न कोऽप्यादरः प्रदर्शितः। केन्द्रीयप्रशासनेन स्थापितस्य शिक्षायोगस्याधुना प्रकाशिते बृहत्कायप्रतिवेदनेऽपि भारतीयशिक्षाक्षेत्रे संस्कृतभाषाया बहिष्कार एवाचरितः। अत्र विषये परिषदा दत्तावधानया भाव्यम्। केन्द्रीयशिक्षामन्त्रिणः श्रीछागलामहोदयाः संस्कृतभाषाया महिमानं गायन्तो न तृप्यन्ति। एवं सत्यपि नैव

त्रिभाषासूत्रे नापि च शिक्षायोगस्य प्रतिवेदने संस्कृतं योग्यं स्थानमलभतेति चिन्तनीयेयमवस्था। प्रवर्तमानया केन्द्रीयप्रशासनस्य शिक्षणनीत्या संस्कृतभाषाया लोपप्रसङ्ग एव प्राप्तः। भयावहेयमवस्था सत्वरमेवापाकरणीया। अत्र संस्कृतविश्वपरिषदेव विशेषतः प्रभवति। सुस्पष्टया सुदृढया च भाषया प्रस्तावोपस्थापनेनैव न किमपि सेत्स्यति, किन्तु त्रिभाषासूत्रे संस्कृतभाषाया अन्तर्भावः स्वतन्त्ररूपेण, विदेशीयभाषया राष्ट्रभाषया प्रदेशीयभाषया सह वा नूनं यथा स्यात् तथा भागीरथेन प्रयत्नेन भाव्यम्। भारतीयशिक्षाविधौ संस्कृतभाषायाः समावेशोऽपरिहार्यरूपेण स्यादिति महामान्यानां राष्ट्रपतीनामप्यभिप्रायः प्रतीयते। नातिविलम्बमस्याभिप्रायस्य पूर्तावेव परिषदा सर्वाः स्वकीया इतिकर्तव्यता यदि विनियोज्यन्ते, तदैव तया सदृशं कृतं स्यात्॥

## स्वर्गीया म० म० गिरिधरशर्मचतुर्वेदमहोदयाः

वाराणसेयसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापका म० म० पण्डितगिरिधरशर्मचतुर्वेदमहोदया आषाढकृष्णसप्तम्यां शुक्रवासरे (१०-६-१९६६) षडशीतिवर्षे वयसि वैकुण्ठवासमलभन्तेति निवेदयतामस्माकं नितान्तं चेखिद्यते चेतः। २-२-६६ दिनाङ्के वाराणसेया विद्वांसः श्रीमतां चतुर्वेदमहोदयानां ८५ तमं वर्धापनदिवसं सोत्साहमायोजितवन्तः। तदा को नाम जानाति स्म दैवदुर्विलसितमेतत्।

व्याख्यानवाचस्पतयश्चतुर्वेदमहोदया वेदानां धर्मशास्त्राणां दर्शनानां संस्कृतसाहित्यस्य सम्यग् व्याख्यातारः परमविद्वांसश्चासन्। एते हि पञ्जाबराजकीयसंस्कृतमहाविद्यालयस्य, जयपुरनगरस्थ-महाराजसंस्कृतमहाविद्यालयस्य चाध्यक्षा आसन्। ततोऽवकाशं लब्ध्वा भवन्तः काशीवासधिया वाराणसीमागच्छन्। हिन्दूविश्वविद्यालयाधिकारिणामनुरोधेन च तत्र संस्कृतमहाविद्यालयेऽनुसन्धाननिर्देशकत्वमङ्गीकृतवन्तः। एतेषां महानुभावानां वैदुषी विदेशीयेन प्रशासनेन महामहोपाध्यायपदवीप्रदानेन राष्ट्रियेण शासनेन च संस्कृतविदुषो राष्ट्रपतिप्रदत्तेन संमाननेन समानं सत्कृता। १९६२ ईशवीये वर्षे 'साहित्य-अकादमी'-संस्थया भवदीयः 'वैदिक-विज्ञान तथा भारतीयसंस्कृति' इत्याख्यो ग्रन्थः पञ्चसहस्रमुद्राणां पारितोषिकेण पुरस्कृतः। संस्कृतविश्वविद्यालयस्थापनानुकालं भवन्तस्तत्रत्यैरधिकारिभिराजीवनं संमानितप्राध्यापकरूपेण प्रतिष्ठापिताः।

श्रद्धास्पदैश्चतुर्वेदमहोदयैः संस्कृतभाषायां हिन्दीभाषायां च विंशत्यधिका ग्रन्था विरचिताः सम्पादिताश्च, परश्शतं निबन्धाश्च निबद्धाः। शाङ्करभाष्यतो गीतारहस्यपर्यन्तं विंशत्यधिका व्याख्याः परिशील्य भवद्भिर्गीताप्रवचनं विरचितम्। प्रमेयपारिजाते भवद्भिर्भारतीयानामास्तिकनास्तिकानां द्वादशदर्शनानामात्मसंबन्धी विचारः समीक्षितः। पञ्चसु खण्डेषु पुराणपारिजातनाम्ना पुराणपरिशीलनं कृतम्। वाराणसेयसंस्कृतविश्वविद्यालयस्य गङ्गानाथझाप्रवचनमालायाः प्रथमपुष्पत्वेन प्रकाशिते 'वेदविज्ञानबिन्दुः' इत्याख्ये ग्रन्थे स्वर्गीयैर्जयपुरनगरवास्तव्यैः स्वकीयैर्गुरुभिः श्रीमधुसूदन-ओझामहोदयैः प्रवर्तितस्य वेदविज्ञानविषयस्य महत्त्वपूर्णा विषया विवेचिताः।

संस्कृतविदुषां सर्वप्रथमाऽखिलभारतीया संस्था संस्कृतसम्मेलनं तस्य मुखपत्रं संस्कृतरत्नाकरश्च भवतैव महताऽऽयासेन स्थापिते प्रवर्धिते चेत्याधुनिकं सम्पूर्णं संस्कृतजगच्चतुर्वेदमहोदयस्याधमर्णतां बिभर्ति। जीवनसन्ध्याया अन्तिमेषु द्वित्रेषु वर्षेषु यद्यपि चतुर्वेदमहोदया वृद्धावस्थाप्रयुक्तेन शारीरेण व्याधिना ग्रस्ता आसन्, तथापि तेषां मानसिकी आध्यात्मिकी चावस्थोत्तरोत्तरं विशिष्टां पुष्टिं प्रतिपेदे। तया च पुष्ट्या परिपुष्टा परश्शतं जिज्ञासवः शिष्याश्चान्तिमेषु दिवसेष्वपि कामपि तुष्टिमलभन्त।

भौतिकेन स्वरूपेण ब्रह्मणि विलीना अपि चतुर्वेदमहोदयाः स्वकीयेन यशश्शरीरेणात्र चिरं स्थास्यन्ति, ग्रन्थेषु निबन्धेषु च विद्यमानास्तेषामुपदेशा अस्मान् सत्पथे प्रेरयिष्यन्ति। दैवदुर्विपाकात् समागतेऽस्मिन् दारुणे प्रसङ्गे वैकुण्ठधामा भगवान् जनार्दनः स्मर्यते, श्रद्धावनतैरयं वाक्प्रसूनाञ्जलिश्च चरणयोस्तेषां समर्प्यते॥

## महाभारतस्य भाण्डारकरसंस्करणम्

२२-९-६६ दिनाङ्के महामान्या राष्ट्रपतयो डॉ० सर्वपल्लीराधाकृष्णन्-महोदयाः पुण्यपत्तने भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरे महाभारतमूलचिकित्सात्मकावृत्तिप्रकाशनस्य द्वाविंशतिखण्डात्मकस्य समाप्तिमघोषयन्। अस्य प्रकाशनकार्यस्य शुभारम्भः स्व०डॉ०रामकृष्णगोपालभाण्डारकरमहोदयैरितः प्रायः पञ्चाशद्वर्षेभ्यः पूर्वं कृतः। तदनु विश्वविख्यातपण्डितसंशोधकैः स्व० डॉ० वी० एस० सुकथनकर–डॉ० एल० के० वेलवलकर-डॉ०पी०यल०वैद्य–डॉ०आर०एन०दाण्डेकरसदृशैरग्रे एतत्कार्यं प्रचाल्य समाप्तिं प्रापितम्।

अस्य प्रकाशनकार्यस्य गौरवमेतेनैव प्रतीयेत, यदत्र १२९८५ पृष्ठानि सन्ति। भारते तद्बहिश्चोपलब्धाः १२५९ संख्याका हस्तलेखाः परीक्षिताः, तेषु ७३४ संख्याकाश्च हस्तलेखाः संस्करणेऽत्र विनियुक्ताः। विनियुक्ता हस्तलेखाः शारदा( काश्मीरस्था प्राचीना नव्या च )-नेवारी-मैथिली-बंगाली-आसामी-उड़िया-देवनागरी-तेलुगु-(नन्दिनागरी)-ग्रन्थ ( तमिल )-मलयालमलिपिमया आसन्। पाठसन्तुलनपत्रसंख्या ४९,२०,००० परिमिता, पूर्णो व्ययश्चात्र १५,४३,०४७ रूप्यकाणां संजातः।,

हरिवंशस्य मूलचिकित्सात्मकावृत्तिकार्यं महाभारतश्लोकपादानुक्रमणीकार्यं च प्रचाल्यमानं वर्तते। १९७२ ई० पर्यन्तमेतत् कार्यद्वयमपि समाप्तिमियादिति वर्तते विश्वासः।

बह्वायाससाध्यस्यास्य महतो विस्तीर्णस्य कार्यस्य समापनेन भाण्डारकरशोधसंस्थानं तत्रत्या मनीषिणश्च पुण्येन यशसा च समलङ्कृता गौरवान्विताश्च सन्तः सुरभारतीसमाराधने किमपि वैशिष्ट्यमलभन्तेत्यभिनन्दामस्तान्। महाभारतसम्पादनपद्धतिमनुसृत्यैव गायकवाड़-शोधसंस्थाने वाल्मीकिरामायणस्य, काशीराजन्याससंस्थाने च पुराणानां सम्पादनकार्यं प्रचलदस्ति। एवमेव संस्कृतवाङ्मयस्य विशिष्टानां ग्रन्थानामीदृशमेव सम्पादनकार्यं विभिन्नाभिर्विशिष्टाभिः संस्कृतसंस्थाभिः प्रामाणिकरूपेण प्रचाल्येत चेत् , संस्कृतभाषायाः प्राचीनं स्वरूपं वैशिष्ट्यं च जगति याथार्थ्येन प्रवर्तेत ॥

## स्वर्गीया डॉ०वासुदेवशरण-अग्रवालमहोदयाः

काशिकहिन्दूविश्वविद्यालयस्थभारतीमहाविद्यालयस्य कला(आर्ट एण्ड आर्किटेक्चर)विभागाध्यक्षाः सुगृहीतनामधेया डॉ० वासुदेवशरण-अग्रवालमहोदया अधिकश्रावणशुक्लदशम्यां बुधवासरे (२६-७-६६) शिवसायुज्यमवापुरित्याकर्ण्य कस्य नाम विदुषश्चेतो न विषादभराक्रान्तं स्यात्। एते हि महानुभावा भारतीयसंस्कृतौ परमानुरक्ताः, संस्कृतभाषाया वैदिकवाङ्मयस्य च निष्णाता मनीषिण आसन्। पुराणानामेभिर्विशिष्टमनुशीलनमाचरितम्। अष्टादशपुराणानां सांस्कृतिकव्याख्यालेखनमेभिः संकल्पितमासीत्। परं हन्त! कालदुर्विपाकात् ते पुराणचतुष्टयस्यैव व्याख्यालेखने क्षमा अभवन्। महाभारतस्य सांस्कृतिकी व्याख्या 'भारत सावित्री'-नाम्ना राष्ट्रभाषायां व्यलेखि महानुभावैरेतैः। 'पाणिनिकालीन भारतवर्ष', 'हर्षचरित—एक सांस्कृतिक अध्ययन' इतीमे प्रथिततमे एषां कृती कस्य नाम विदुषो मनस्तोषाय न भवेताम्। प्राचीनभारतस्य भूगोलविषये

महानुभावस्यास्य विस्तृतो निबन्धः "अत्र ते वर्णयिष्यामि वर्षं भारत भारतम्" इति शीर्षकेण सारस्वत्यां सुषमायां मुद्रितः। जीवनस्यान्तिमेषु कतिपयेषु वर्षेषु तैर्वैदिकवाङ्मयस्यानुशीलनं समाचरितम्। सर्वप्रथमं तैर्दीर्घतमस ऋषेरस्यवामीयसूक्तं व्याख्यातम्। ततः परमन्येऽपि षड् ग्रन्था विषयेऽस्मिन्निर्मिताः। वेदविद्यैव सनातनी योगविद्या प्राणविद्या चेति तेषां द्रढीयान् विश्वास आसीत्।

महानुभावस्यास्य ६१ तमे वर्षे वयस्येव निधनेन हन्त! संस्कृतवाङ्मय-मग्रवालमहोदयानां प्रतिभाप्रसूनानामन्येषां ग्रन्थरत्नानां संग्रहेण वञ्चितमिति विषादाकुलैरस्माभिर्गतात्मनः शान्त्यै परिवारस्य सान्त्वनायै च भगवान् विश्वनाथः प्राथ्यंते ॥

### स्वर्गीया म० म० पण्डितमथुराप्रसाददीक्षिताः

वाराणसेयसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापका म० म० पण्डितमथुराप्रसाददीक्षितमहोदया भाद्रपदशुक्लैकादश्यां रविवासरे (२५-९-१९६६) नवतिप्राये वयसि शिवसायुज्यमवापुरिति निवेदयता-मस्माकं नितान्तं चेखिद्यते चेतः। दीक्षितमहोदया 'अभिधानराजेन्द्र' इत्याख्यस्य प्राकृतभाषाकोशस्य प्रथमे सङ्कलयितारः, 'पृथ्वीराज रासो' इत्यपभ्रंशभाषामयस्य महाकाव्यस्य संपादकाः समीक्षकाश्चासन्। सोलनराजगुरुपदवीमलङ्कृत्य महानुभावैरेतैः संस्कृतविश्वकोशस्य कार्यारम्भो व्यधायि, तस्य परिणतिश्च वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाशिते अत्रिशब्दविवरणात्मके अत्रिनिर्वचनाख्ये ग्रन्थे समजायत। दीक्षितमहोदया देशभक्तिप्रवर्तकानां पृथ्वीराजनाटक-भारतविजय-शङ्करविजय-वीरप्रतापविजयप्रभृतीनां नाटकानां प्रणेतृत्वेन लब्धयशस्का अभवन्निति के नाम संस्कृतज्ञा न जानन्ति। नाटकानामेतेषां भाषासौष्ठव-मालङ्कारिकत्वं लक्षणानुवर्तित्वं च कस्य नाम सहृदयस्य मनोमोदकरं न भवेत्। महानुभावैरेतैर्न केवलं नाटकान्येव, अपि तु केलिकुतूहलसदृशाः कामशास्त्रग्रन्थाः, गौरीव्याकरण-पालिप्राकृतव्याकरणप्रभृतयो व्याकरण-ग्रन्थाः, मृत्युविज्ञानादयो ग्रन्थाश्च व्यरच्यन्त। प्रायश्चत्वारिंशत्संख्याकानां संस्कृतहिन्दीभाषाग्रन्थानां नैकेषां निबन्धानां कवितानामाख्यायिकादीनां च निर्मातृत्वेन लब्धयशसामेतेषां महानुभावानामुत्तरप्रदेशीयेन प्रशासने-नैषम एव पञ्चसहस्रमुद्रापुरस्कारप्रदानेन सम्माननं व्यधायि। वयमपि विद्यावयोवृद्धाना दिवङ्गतानामेतेषां महानुभावानामेभिरेव शब्दप्रसूनैः श्रद्धाञ्जलिमातनुमः ॥

## किमर्थमध्येयं संस्कृतम् ?

रक्षोहागमलघ्वसन्देहाः प्रयोजनम् ।

रक्षार्थं भारतीयसंस्कृतेरध्येयं संस्कृतम् । वेदागमस्मृतिपुराणेतिहासज्ञो हि सम्यग् भारतीयां संस्कृतिं परिपालयिष्यति ।

ऊहः खल्वपि । प्रवर्तन्ते नाम साम्प्रतं नानाशाखा ज्ञानविज्ञान-क्षेत्रयोः । किमत्र ग्राह्यं किञ्च त्याज्यमित्यस्य निर्णयं भावयिष्यति । "सारं ततो ग्राह्यमपास्य फल्गु" इति ह स्माह कश्चित् । नासंस्कृतज्ञः कर्तुमेतत् प्रभवति ।

आगमः खल्वपि । अपास्य फल्गु गृहीत्वा च सारमागमग्रन्थान् नूतन-ज्ञानविज्ञानप्रतिपादकान् निर्मास्यति । येन हि भवति सामञ्जस्यं भौतिकाध्यात्मिकवादयोः ।

लघ्वर्थं चाध्येयं संस्कृतम् । "एकमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इति हि समयः पाल्यते संस्कृतज्ञेन । स हि सूत्रवृत्त्यादि-पद्धत्या लघुना सरलेन पथा सर्वं प्रतिपादयितुं क्रमते ।

असन्देहार्थं चाध्येयं संस्कृतम् । समुत्पन्नायां कर्मविचिकित्सायां वृत्तविचिकित्सायां वा संस्कृतं भवति मङ्गलतमं शरणम् ।

इमानि च भूयः संस्कृताध्ययनस्य प्रयोजनानि—सत्यनिष्ठा, न्याय-निष्ठा, अलोलुपता, विनीतता, गुरुजनादरः, संस्कृतिप्रेम, विश्वबन्धुता ।

बीजरक्षेत्येके ।

अध्यात्मप्रवणतेत्यपरे ।

ननु च भोः ! दृश्यन्ते पारङ्गता अपि श्रद्धालवोऽपि संस्कृतज्ञा अनृत-भाषिणः, न्यायमूर्तयोऽप्यन्यायपरायणाः, त्यागिनोऽप्यर्थलोलुपाः, विप-श्चितोऽपि स्वाभिमानशून्या मिथ्याभिमानिनः, संस्कृतच्छात्रा अपि गुरुजनतिरस्कारिणो वेशभूषादिष्वपि भारतीयसंस्कृतिप्रेमशून्याः, विद्वांसोऽपि धर्म-भाषा-जातिगतविद्वेषकूपपतिताः ।

कालविलसितमेतदिति सम्प्रदायविदः । "जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः । ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥" इति ह स्माह कुसुमाञ्जलिकारिकाकार उदयनः । बीजं तु तत्र सन्निहितं

तिष्ठति समेषामेषां गुणानाम् । तेन किल बीजरक्षा यथा स्यादित्यध्येयं संस्कृतम् ।

सदोषेयं दृष्टिरित्याधुनिकाः । प्रवर्तते साम्प्रतिकेषु भारतीयेषु विश्वविद्यालयेषु राजनीतिशब्दो वित्तलौल्यसंकीर्णतादीनां प्रतिनिधिभूतः, येन किल प्रकाममाक्रान्ता संस्कृतशिक्षा साम्प्रतिकी । कथं नाम कालविलासोऽयं न मोहयति पाश्चात्त्यान् विदुषः ? कथं नु खलु दृश्यन्ते ते स्वप्रातिभप्रसूनसुरभीन् सर्वतो विकिरन्तो भूम्ना समस्तैरेभिर्गुणगणैरुपेताः ? तैराविष्कृतो विकासवादः, सद्वाऽसद्वेत्यन्यदेतत्, प्रेरयति तानेतदर्थम् । आस्माकीनो ह्रासवादश्च मोहयत्यस्मान् । अतो हि प्रथमं विकासवादह्रासवादयोर्विवेच्यौ सम्यग् गुणदोषौ, येन खलु पुरुषकारसाहाय्येन दोषपरिहारिणी गुणाधायिनी च संस्कृतशिक्षाऽध्यात्मप्रवणा प्रवर्तेत । तदनु सर्वा भारतीया शिक्षाप्रणाली यथा स्यादध्यात्मप्रवणेत्यध्येयं संस्कृतम् ।

पुरा किल अष्टादशविद्यानामध्ययनं संस्कृतभाषयैव भवति स्म । तदद्यत्वे न तथा । आंग्लभाषामधीत्य त्वरिता वक्तारो भवन्ति "सिद्धं नः समीहितम्, अनर्थकं संस्कृतम्" इति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्यः सुहृत्संमिततयोच्यते—इमानि प्रयोजनानि, अध्येयं संस्कृतमिति ॥

---

# पथिक० प्रस्तावना

अथेयं समुपस्थाप्यतेऽप्रकाशितचराऽश्रुतपूर्वा च यात्रावर्णनपरा 'पथिकजनपातकचिन्तनस्मृतिः" सटिप्पणा। अस्यां हि सर्वसामान्यानुभूतानां यात्राकष्टसंघानां विशेषतः स्वतोऽनुभूतानां च विशदं वर्णनमस्ति। कर्ता चास्याः सटिप्पणायाः श्रीमहेश्वरभट्टः। ग्रन्थकर्त्रा संक्षेपेण स्वकीयः परिचयो ग्रन्थान्ते स्वयमेव वर्णितः, तेन ज्ञायते नादिरशाहकृतदिल्लीविजयसमये ग्रन्थकारस्तत्रैवासीत्, तत्रैव च तेनैष ग्रन्थो विरचित इति। एवं च विक्रमाष्टादशशताब्द्यां तीर्थयात्रिणां समक्षं समापद्यमानानां विषमाणां विभीषिकाणां वर्णनमत्र समुपलभ्यते। तदानीन्तनानां कतिपययुद्धानामप्यत्र दिग्दर्शनं भवति।

यद्यप्यत्र साहसिकयात्रावर्णनं विद्यते, ग्रन्थारम्भे च ग्रन्थकर्तुरुद्देश्यम्—

> अतो ग्रन्थं विचार्यैनं कृता यात्रा सुखप्रदा।
> विदेशे सावधानत्वं भविष्यति न संशयः॥

इति दिशा यात्रां विधित्सूनां यात्रिणां सावहितीकरणमेव, तथापि ग्रन्थान्ते पञ्चदशभिश्लोकैस्तेन यात्रातो विरक्त्युत्पादनमेवाचरितम्। विदेशयात्राया मुख्यमुद्देश्यं तदा धनार्जनमेवासीदिति ग्रन्थावलोकनतः स्फुटं प्रतीयते। मराठीसाहित्ये 'माझा प्रवास'-नामकमेकं यात्रापुस्तकं विद्यते, यत्र हि ग्रन्थकर्त्रा दाक्षिणात्येन विष्णुशास्त्रिगोडसेमहाशयेन १८५७ ई० विद्रोहसमये 'झांसी-गवालियर'-आदिस्थानेषु संजातानां वृत्तान्तानां सुविशदं वर्णनं कृतमस्ति। तत्रापि यात्राया उद्देश्यं धनार्जनमेव। तेन वक्तुं शक्यते तस्मिन् पराधीनताकाले भारते साहसिकयात्राणां प्रायोऽभाव एवासीदिति। एवं च संस्कृतसाहित्ये किमुत भारतीयसाहित्येऽपि यात्रावर्णनपराणां ग्रन्थानामभाव एव प्रायो दृश्यते। बौद्धभिक्षुकैर्भारतीयसंस्कृतेः प्रचाराय दक्षिणभारतीयनृपतिभिश्च जावासुमात्रादिद्वीपेषु स्वसाम्राज्यस्थापनाय कृतानां यात्राणां विवरणमपि भारतीयसाहित्ये प्रायो नैव समुपलभ्यते। अस्यामवस्थायां लघुतमस्याप्यस्य यात्रावर्णनपरस्य ग्रन्थस्य महत्त्वं स्वाभाविकम्।

अत्र सर्वप्रथममिष्टदेवनास्मरणानन्तरं निर्धनानां धनाढ्यानामपि च विदेशे कष्टमेव भवति, अतस्तेषां यात्रा सुखप्रदा कथं स्यादिति विषये सावहितीकरणमेव ग्रन्थारम्भस्य प्रयोजनमुक्तम्। ततः क्रमेण ग्रीष्मवर्षाशीत-कालिकानां पथिककष्टानाम्, द्वादशसु मासेषु सामान्यरूपेण समापतन्तीनां विषमावस्थानाम्, नद्युत्तारे समापतन्तीनां बाधानाम्, कूर्माचलकेदारनाथ-बदरीनाथादिहिमाक्रान्तपर्वतमार्गेषु हिंस्रपशुव्याप्तेषु पथिकजनमनसि भयोद्वेगं प्रजनयन्तीनां घटनानाम्, कूर्माचलमार्गे जयनगरपुष्करमार्गे हरिद्वारयात्रायामन्यत्र च स्वानुभूतानामपि च कष्टविशेषाणां स्वाभाविकं सुसंगतं वर्णनं कृतमस्ति। ततश्च कविः सादतखांन-मनसूरअलीखांन-सेनायां दैवज्ञरूपेण प्रविश्य पकरी-पाछापुरग्रामादिषु युद्धं विदधाति। सादतखांनसेनया सहैव महाराष्ट्रैर्युद्धार्थं वृन्दावनदिल्लीप्रभृतिस्थानेषु गच्छति, धनसंमानौ च प्राप्नोति। दिल्लीनगर एव स्थितस्य तस्य नादिरशाहाभियानसमये सर्वं धनादिकं नश्यति। अन्ते च तद्दुःखदुःखितः कविर्विदेशगमनं भूरिशो निन्दति स्वदेशमेव चाभिनन्दति। ग्रन्थान्ते ग्रन्थलेखनकाल उट्टङ्कितः, टिप्पण्यां च तेन स्वकीयः संक्षिप्तः परिचयो दत्तः। मुखपृष्ठे च ग्रन्थकर्त्रा परिशिष्टरूपेण नादिरशाहकृतदिल्लीविजयस्य विवरणं दत्तमस्ति। इत्थमनुष्टुप्छन्दसा निबद्धं सपादशतश्लोकात्मकमेत-ल्लघुपुस्तकं मनोनुरञ्जिकां सामग्रीं प्रस्तौति। अत्र परिशिष्टस्य रचना च न श्लोकात्मिका, अपि तु गद्यमयी।

अत्र "नादशाहि समायाते" इति वचनात्, परिशिष्टरूपेण नादिरशाह-कृतदिल्लीविजयविवरणाच्च स्पष्टं प्रतीयते यदयं महानुभावस्तदा दिल्ली-नगरे स्वयं वर्तमान आसीत्। अनेन "संवत् १७९५ शके १६६० फागुण-शुद्धैकादश्यां दिल्लीमध्यकोटे समागतः" इत्येवं नादिरशाहस्य दिल्ली-प्रवेशतिथिर्दत्ता। एषा च तिथिर्ज्यौतिषगणनया[1] १७३९ ईशवीये मार्चमासे दशमदिवसे विद्यते। नादिरशाहकृतसर्वसंहारस्य (कत्ले आम)

---

१. 'इण्डियन एफिमेरीज' नामकं तिथितालिकाप्रदर्शकं पुस्तकं द्रष्टव्यम्। 'विलियम इरविन'-लिखिते 'सरयदुनाथसरकार' संपादिते 'लेटर मुगल्स'-नामके पुस्तके तु ९ मार्च तस्य दिल्लीप्रवेशतिथिर्दत्ता; द्रष्टव्यम्—भा० २, पृ० ३६३। आशीर्वादीलालश्रीवास्तवरचिते 'फर्स्ट टु नवाब्स आफ अवध'-नामके ग्रन्थे च सा तिथिः १७ मार्च विद्यते। पश्यतु—पृ० ७२।

अपि विवरणं[1] तेन दत्तम्। मारितमनुष्याणां[2] संख्या कति दिनानि नादिरशाहस्तत्र [3]स्थितः, कदा च स दिल्लीतो निर्गतः[4] इत्यादिविवरणमपि ग्रन्थकारो दातुकाम आसीत्, किन्त्वज्ञातकारणवशात् तेषां स्थानानि तेन रिक्तान्येव स्थापितानि। तथैव ग्रन्थकारः सादतखांनसेनायां दैवज्ञरूपेण वर्तमान आसीदिति स्वयमेव तेन स्वीकृतम्। एवमेव ग्रन्थान्ते—

शके चन्द्रर्षिरसभूमिते ज्येष्ठे सिते दले।
ग्रन्थः संपूर्णतां प्राप्तः पञ्चम्यां बुधपुष्ययोः॥

इत्येवं ग्रन्थसमाप्तिकालो दत्तः। अर्थात् १६७१ तमे शके (१८०६ वि०) ज्येष्ठशुक्लपञ्चम्यां बुधे पुष्यनक्षत्रे ग्रन्थः समाप्तिमगादिति। एवमेव—"एतस्याग्रेऽपि पृथिवीपतिसहवासस्तज्जयादिकं च तदन्यत्र काव्यं कृतमस्ति" इति टिप्पणीत उपर्युक्ततिथ्यनन्तरमपि तस्यावस्थितिरासीदेव। निर्भ्रान्तैरेभिः प्रमाणैर्विक्रमाष्टादशशताब्द्या उत्तरार्द्धे ऊनविंशशताब्द्याः पूर्वार्द्धे च ग्रन्थकर्तुरवस्थितिरासीदिति बाढं सिद्ध्यति।

अस्य महानुभावस्य मुख्यं निवासस्थानं विश्वेश्वरपुरी काशी आसीत्। किञ्चित्कालं धनोपार्जनार्थं च तेन इन्द्रप्रस्थे (दिल्ली) स्थितम्। तत्रैव च तेनास्य ग्रन्थस्य रचना कृतेति—

---

१. "ततो द्वितीयेऽहनि द्वादश्यां प्रातःकालमारभ्य यामत्रयं यावत् तद्भटैस्तदाज्ञया मनुष्यपश्वादयः सर्वेऽपि खड्गभुशुण्ड्यादिभिर्मारिताः" इति। 'लेटर मुगल्स'-ग्रन्थे त्वस्मिन् दिने त्रयोदशी तिथिरासीदित्युक्तम्—भा० २, पृ० ३६५; आंग्लतिथिश्च ११ मार्च १७३९ दत्ता। 'इण्डियन एफिमेरीज'-गणनया त्वेतस्यामांग्लतिथौ द्वादशी तिथिरेवायाति।

'लेटर मुगल्स'-ग्रन्थे नरसंहारसमयः प्रातः ९ वादनतो मध्याह्ने २ वादनं यावत् प्रदर्शितः—भा० २, पृ० ३६८।

२. अस्मिन् विषये 'लेटर मुगल्स'-संपादकेन बहूनामितिहासलेखकानां विभिन्नानि मतानि समुट्टङ्कितानि—भा० २, पृ० ३६८-३६९।

३. ५७ दिनानि यावत् स दिल्लीमध्ये स्थित इति 'लेटर मुगल्स'-संपादकमतम्—भा० २, पृ० ३७५।

४. ५ मई १७३९ ईशवीये स दिल्लीतो निर्गतः। द्रष्टव्यम्—'लेटर मुगल्स' भा० २, पृ० ३७५; 'फाल आफ दी मुगल एम्पायर' भा० १, पृ० ३।

श्रीमहेश्वरभट्टेन काशीमुख्यनिवासिना ।
इन्द्रप्रस्थस्थितेनैव कृतं कौतुकमादरात् ॥

इति ग्रन्थान्तश्लोकतो ज्ञायते । पृथिवीपतिजयवर्णनपरमन्यदपि किमपि काव्यं तेन कृतमिति पूर्वोद्धृतटिप्पण्या ज्ञायते । एष च पृथिवीपतिर्दिल्लीपतिर्मुहम्मदशाह एव भवितुमर्हति । तेन च नादिरशाहात् स्वकीयं राज्यं पुनर्लब्ध्वा ये विजयाः कृतास्तेषामेव विजयानां वर्णनं श्रीमहेश्वरभट्टेन स्वकीये काव्ये कृतं भवेत् । किन्तु किंनामकं तत्काव्यमासीदिति नाद्याप्यस्माभिर्ज्ञायते ।

वंशपरिचयश्च ग्रन्थकारेण "श्रीमहेश्वरभट्टेन" इति श्लोकटिप्पण्यामित्थं दत्तः—"काश्यां नागरज्ञातीया मन्त्रशास्त्रिणो रामकृष्णभट्टाः प्रसिद्धास्तदात्मजा देवकृष्णभट्टस्तत्सुतो हरिकृष्णभट्टस्तत्सुतो महेश्वर इति" इति । अनेन महेश्वरो नागरज्ञातीयो हरिकृष्णभट्टस्य पुत्रो देवकृष्णभट्टस्य पौत्रो मन्त्रशास्त्रिणः श्रीरामकृष्णभट्टस्य प्रपौत्रश्चेति विज्ञायते । आगमकौमुदी-आगमचन्द्रिका-पीठचिन्तामणिनामकानां तान्त्रिकग्रन्थानां रचयितुः श्रीरामकृष्णभट्टस्योल्लेख आफ्रेक्टबृहत्सूच्यामुपलभ्यते । तत्रास्य ग्रन्थस्य रचनाकाल एकत्र १७२६ अन्यत्र च १७२२ दत्तः । तन्न साधु, श्रीराजेन्द्रलालमित्रसूचीपत्रे, यदाधारेण ह्यत्र तिथिर्दत्ता, मुनिवेदनृप(१६४७)मिते शके पुस्तकं लिखितमिति स्पष्टतया प्रतिपादितत्वात् । तथा च १७२६ वर्ष एव ग्रन्थसमाप्तेः शुद्धा तिथिः । १७२२ वर्षसमयस्तु प्रामादिक एव । एवं चैष रामकृष्णभट्टः प्रायो महेश्वरभट्टसमकालिक एव सिद्ध्यति । एष एव तत्प्रपितामह इति तु न वयं सुदृढं कथयितुं पारयामः । देवकृष्णभट्टहरिकृष्णभट्टयोस्तु किञ्चिदपीतिवृत्तमाफ्रेक्टसूच्यां नोपलभ्यते । सरस्वतीभवनस्थे महीधरसंग्रहे ३५७ संख्याङ्कितपुस्तकपुष्पिका—"संवत् १७७७ श० १६४२ प्र० माघकृष्ण १४ रवौ पंड्याहरिकृष्णेनात्मपठनार्थं परोपकार्थं लिखितम्" इत्थं वर्तते । एष च पंड्याहरिकृष्णो महेश्वरस्य पितैव भवेदिति समयसाम्यतोऽनुपदमेवोट्टङ्कितप्रमाणान्तरतश्चानुमीयते ।

अत्र ग्रन्थारम्भे—"नत्वा गणेशमीशानं भैरवं पार्वतीं गुरुम्" इति, ग्रन्थावसाने च—"श्रीनृसिंहो महादेवो गणेशः कालभैरवः" इत्येवं गणेशकालभैरवादीनां स्मरणात्, "काश्यां नागरज्ञातीया मन्त्रशास्त्रिणः" इति टिप्पणीवाक्यतश्च मन्त्रमहोदध्यादितान्त्रिकग्रन्थानां कर्त्रा शुक्लयजु-

वेदभाष्यकारेण महीधरेण साकमस्य ग्रन्थकारस्य कोऽपि सम्बन्धो भवेदिति कल्पना समुन्मिषति। महीधरः पिशुनहरनागरज्ञातीयो मन्त्रमहोदधि-प्रभृतीनां तान्त्रिकग्रन्थानां रचयिता काश्यां प्रसिद्धस्तान्त्रिक आसीदिति 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के 'महीधरसंग्रहः' नामके लेखेऽत्रापि संगृहीतेऽस्माभिः सप्रमाणमुपस्थापितम्। तत्र महीधरविरचितानां लिखितानां च ग्रन्थनाम्नां ग्रन्थारम्भसमाप्तिस्थानां श्लोकानामपि संग्रहः कृतो विद्यते। तैः श्लोकैस्तुलनयाऽत्रत्यानां ग्रन्थारम्भसमाप्तिश्लोकानामतीव साम्यं दृश्यते। एवं चैषा कल्पना बद्धमूला भवति—अस्ति कोऽपि सम्बन्धो ग्रन्थकारस्य महीधरेणेति। अस्मिन्नेव संग्रहे पंड्याहरिकृष्णलिखितस्य पुस्तकस्यैकस्योपलब्धिरिमां कल्पनां पूर्वोक्तानुमानं च नूनं द्रढयति।

विक्रमोनविंशशताब्द्या आरम्भेऽस्य ग्रन्थस्य रचना जाता। तदाऽत्रत्ये समाजे बहूनां नूतनानां शब्दानां प्रचारोऽभूद् येषां पर्यायाः संस्कृतभाषायां नासन्। ईदृशा बहवः शब्दा अत्र मूलरूपेणैवोट्टङ्किताः। बबूलादिदेशी-शब्दानामप्यत्र प्रयोगो दृश्यते। कुत्रचन शब्दानुकरणमप्याचरितम्। यथा—बबूल, बाहू डोलावनम्, घूघुरन...., डांडि, झंपाणम्, कण्डिकम्, क्रोटपालः, शेटकः, सूवाकस्य, दोनाः, विलाइत, टोपोवाला, ईरानी, मोगल इति। एषां सर्वेषां व्याख्यानं मूलग्रन्थटिप्पण्यामेव द्रष्टव्यम्।

ग्रन्थकारो यद्यपि धनोपार्जनार्थमेव स्वकीयां यात्रां विहितवान्, तथापि स स्वाभिमानी निर्भीकः शूरश्चासीत्। "बह्वायासैः सुसंपन्ने शास्त्रे देशान्तरे पुनः। दुर्गापाठः परार्थम्" इत्येवं परनिमित्तं दुर्गापाठं सोऽनुशोचति। "इत्यादिभिः कष्टसंचैर्धनमुत्पादितं बहु। म्लेच्छाधमानां संगत्या" अत्र कवेः स्वाभिमानं पुनरपि समुज्जृम्भते। 'माझा प्रवास'-नामकस्य मराठीग्रन्थस्य लेखकः १८५७ ईशवीये वर्षे संजातस्य विप्लवस्य विस्तृतं विवरणं समर्पयति। किन्तु स स्वात्मानं भिक्षुकरूपेणैव प्रख्यापयति, यात्रा-समये च धार्मिककारणवशादेव दानादिकं न गृह्णाति, परार्थं यज्ञयागादि-कार्यसंपादनमेव च तस्य धनार्जनसाधनमस्ति। महेश्वरः "आगत्य पतितं चौरैः....पातिते चौरवर्ये", "भिल्लैरुक्तं मध्यवने वस्त्रं देयं त्वया नर। वाक्यं श्रुत्वा कृतं युद्धम्" इत्येवंप्रकारेण स्वमार्गपतितैश्चौरादिभिर्युद्धं विदधाति। माझाप्रवासकारस्तु एकाधिकवारं स्वार्जितं धनमेभ्यः प्रदाय स्वकीयं जीवनं यथाकथञ्चिदपि रिरक्षिषति। झांसीराज्ञ्या लक्ष्मीबाईदेव्याः पराजयानन्तरमांग्लसाम्राज्यसैनिका यदा नगरं प्रविश्य तद्विध्वंसयन्ति, तदा माझाप्रवासकारो गृहस्यैकस्यान्धतमसावृतायां गुहायां निलीनो भयो-

द्विगनश्च षोडश्याः स्पर्शसुखमपि नान्वभवत्, तत्रैवास्माकं कविः पाछापुर-दुर्गारोहणकाले कोटस्थैर्भटैः पातितेनाग्निना दग्धः परिखायां निपतति, पकरीग्रामयुद्धे चिबुकान्तःप्रदेशे शरेण विक्षतो भवति, नेवादाग्रामे शस्त्रक्षते संजातेऽपि जलच्छायाविहीने पथि क्रोशचतुष्टयपर्यन्तमश्वेन गच्छति, सादतखांनमनसूरअलीखांनसेनायां दैवज्ञरूपेण प्रविश्य स्वरोदयज्ञानेन तेषां जयादिदानार्थं मथुरानिकटस्थगोवर्द्धनपर्वतसमीपस्थाद् राधाकुण्डाद् दिल्लीमध्यस्थायां कालिकायां महाराष्ट्रैर्युद्धार्थं गच्छति ।

तस्करा लुण्टाकाश्च पथिकान् नानाव्याजवशेन यथा तदा मुष्णन्ति स्म तत्साम्प्रतमपि नादृष्टचरम् । दुष्टानां करग्राहकाणामपि तदा बिभीषिका आसीत् । नद्युत्तारावसरे समापतन्तीनां बिभीषिकाणां रोमाञ्चकं वर्णनं कृतमस्ति । पथिकजनसंरक्षणाय धृतो ग्रामकोष्ठपालः (चौकीदार) "अयं किं मारितः साधुः" इत्येवं चौरं साधुरित्युद्घोषयन् पथिकानां दुःखद एव संजायते स्म । इत्येवं लेखकस्तदानीन्तनीनां सर्वविधपरिस्थितीनां चित्रणं कुर्वन् ग्रन्थारम्भे कृतां स्वां प्रतिज्ञाम्—"विदेशे सावधानत्वं भविष्यति" इत्येवंरूपामक्षरशः पालयति । विविधानां व्यक्तीनां स्थानानां च निर्देशो ग्रन्थकारेण तत्र तत्र कृतः । तेषां विवेचनं च तत्रैव टिप्पण्यां द्रष्टव्यम् ।

अस्य पुस्तकस्य प्रकाशने सहायकं सरस्वतीभवनस्थितमेकमेवादर्श-पुस्तकम् । तस्य संख्या च न० ७७७० विद्यते । पुस्तकं सम्पूर्णं शोभनाक्षरं शुद्धतरं च । तत्र सम्पूर्णे पुस्तके नव पत्राणि, प्रतिपृष्ठं सप्त अष्टौ नव वा पङ्क्तयः, एवं च सम्पूर्णे पुस्तके १२८ पङ्क्तयः सन्ति । प्रतिपङ्क्ति प्रायो द्वात्रिंशदक्षराणि । सम्पूर्णे ग्रन्थे १२६ श्लोकाः सन्ति । ग्रन्थस्याकारः ४.४"×९.२" परिमितो विद्यते । एष च ग्रन्थो ग्रन्थकारस्य केनचिच्छिष्येण लिखित इति "श्रीशुभमस्तु ग्रन्थकर्तुः श्रीगुरोः" इत्यनेनान्तिमेन पुष्पिकावाक्येन स्फुटं प्रतीयते । लिपिकालश्च ग्रन्थसमाप्तिकालसमान एव मन्तव्यः, पत्राणां रिक्तभागेषु स्वयं ग्रन्थकर्त्रा लघ्वक्षरैष्टिप्पणस्य कृतत्वात् । "दांनतरायो मत्पितुः शिष्यः""मदाज्ञाकारी च" इति टिप्पणलेखात् स्पष्टमेव प्रतीयते यदस्य कर्ता स्वयं ग्रन्थकार एवेति । मुखपृष्ठे च यद् नादिरशाहकृतदिल्लीविजयध्वंसवर्णनं विद्यते तत्स्त्रयं ग्रन्थकारेणैत्र लिखितम् । तत्र अष्टादशपङ्क्तयः, २९२ संख्याकान्यक्षराणि च विद्यन्त इति शम् ॥

चैत्रपूर्णिमा, २००९ वि० व्रजवल्लभद्विवेदः

---

# पथिकजनपातकचिन्तनस्मृतिः

सटिप्पणा

श्रीमहेश्वरभट्टविरचिता

[1]नात्वा गणेशमीशानं भैरवं पार्वतीं गुरुम् ।
सामान्यां स्वानुभूतां[1] च पातकस्मृतिमारभे ॥ १ ॥

धनाढ्यानां निर्धनानां विदेशे कष्टमेव हि ।
स्तोकं वा बहुलं वापि जायते स्वानुरूपतः ॥ २ ॥

अतो ग्रन्थं विचार्यैनं कृता यात्रा सुखप्रदा ।
विदेशे सावधानत्वं भविष्यति न संशयः ॥ ३ ॥

विदेशजं कष्टसंघं केन वक्तुं प्रशक्यते ।
तथापि किञ्चिल्लोकार्थं क्रमतो वर्ण्यते मया ॥ ४ ॥

**तत्रादौ सर्वसामान्यं स्वानुभूतं च उष्णकालवर्णनमाह—**

धरणी तप्तलोहाभा मार्तण्डस्त्वतिचण्डरुक् ।
जलं नैवाप्यते क्वापि पातकं किमतः परम् ॥ ५ ॥

जलप्राप्तास्तु ये जीवास्ते हताश्चोष्णवायुना ।
परिश्रमहताश्चान्ये पातकं किमतः परम् ॥ ६ ॥

वातः संमुखगो रौद्रः सूर्यस्तपति दुःसहः ।
गगनं धूलिसंवीतं पातकं किमतः परम् ॥ ७ ॥

मध्यंदिने वायुवेगश्चण्डसूर्यश्च सर्वतः ।
नेत्रयोश्च रजोयोगः पातकं किमतः परम् ॥ ८ ॥

**बुन्देलखण्डादिषु—**

मध्यंदिने वायुनाशो घर्मदाहः सुदुःसहः ।
नगस्था दृषदस्तप्ताः पातकं किमतः परम् ॥ ९ ॥

---

१. विदेशे इति शेषः ।

1. आदर्शपुस्तकारम्भः—"श्रीगणेशाय नमः । श्रीगुरुचरणारविन्दाभ्यां नमः । श्रीसरस्वत्यै नमः ॥" इत्थं भवति ।

नास्ति मध्ये जलं क्वापि ग्रामकूपे तु मृज्जलम् ।
छाया बबूलजा[1] क्वापि पातकं किमतः परम् ॥ १० ॥

[2]बक्री मृज्जा जलेनाक्ता निकटे यस्य संस्थिता ।
तेन किञ्चिज्जलं पीतं पातकं किमतः परम् ॥ ११ ॥

[3]सार्द्धगव्यूतितुल्यं तु क्रोशमानं प्रकीर्तितम् ।
[1]क्षुत्तृषार्ता जनाः सर्वे पातकं किमतः परम् ॥ १२ ॥

अथ सामान्यं स्वानुभूतमपि वर्षाकालवर्णनमाह—

पर्जन्यभीत्या त्वरया नीतो मार्गः सुदुःखदः ।
भोजने चागता वृष्टिः पातकं किमतः परम् ॥ १३ ॥

वृष्टिवायुसमायोगात् प्लावितो वस्त्रसंचयः ।
स्वापो निरशनो [2]जातः पातकं किमतः परम् ॥ १४ ॥

---

१. तत्रेति शेषः । २. वृत्त इत्यर्थः ।

1. 'बबूल' इति देशीशब्दः । तस्य वर्बुरः, किङ्किराल इत्यादयः संस्कृतपर्याया निघण्ट्वादिषु द्रष्टव्याः ।

2. 'बक्ली' नाम 'सुराही' इति भाषायां प्रसिद्धं पात्रं भवेत् । तद्धि मृदा जातं निर्मितमथ च जलेनाक्तं पूर्णं भवति । अद्यत्वेऽपि ग्रीष्मकालिकयात्रासु यस्योपयोगः प्राचुर्येण दृश्यते । तादृशमेव किमपि लघुपात्रं जलपूरितं ग्रीष्मकालिकयात्रासु यात्रिभिः पिपासानिवृत्त्यर्थं नीयमानं भवेत् । तथा च यस्य निकटे तत्पात्रं स्थितं तेन पुरुषेण जलबाहुल्याभावात् तत्समाप्तिभयेन किञ्चिदेव जलं पीतमिति श्लोकस्यार्थः । 'आप्टे'-रचिते संस्कृतांग्लशब्दकोशे वक्त्रशब्दस्य पात्रविशेषस्य मुखमप्यर्थो निर्दिष्टः । तेन विशेषप्रकारकमुखानां लघुपात्राणां कृते वक्त्रीशब्दस्य प्रयोगः संभवी । अनेनैव शब्देन विकसितः 'बक्ली' इति कश्चिद् देशीशब्दः स्यात् । एवमपि पूर्वोक्त एवार्थः स्फुटीभवति । वास्तविकशब्दार्थगवेषणायां भूरि परिश्रान्तम्, किन्तु तत्र साफल्यं नाप्तमिति सूरिभिस्तत्र यतनीयम् ।

3. अर्द्धेन सहिता गव्यूतिः सार्द्धगव्यूतिः, अर्द्धगव्यूतिरिति यावत् । तया तुल्य क्रोशमानम्, "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरवचनाद् गव्यूतेः क्रोशद्वयात्मकत्वात्, "धन्वन्तरसहस्रं तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्री तु गव्यूतिः" इति वाचस्पतिवचनाच्च ।

[1]बाहू डोलावनं देहीत्यादिग्रामीणवाक्यतः ।
[1]त्यक्तमाच्छादनं पात्रं पातकं किमतः परम् ॥ १५ ॥

चातुर्मास्ये नदी पूर्णा सार्थे कोलाहलो महान् ।
प्रबलैर्गृह्यते नौका पातकं किमतः परम् ॥ १६ ॥

निर्बलैः संस्थितं तीरे यष्टिताडनभीतितः ।
सार्थः शीघ्रं चाग्रगतः पातकं किमतः परम् ॥ १७ ॥

पश्चात् स्थितेभ्यो द्रव्यं तु गृह्यते कर्णधारकैः ।
यथेष्टं निर्भयाद् दुष्टैः पातकं किमतः परम् ॥ १८ ॥

महापर्जन्यवशतः सर्वमार्द्रं बभूव ह ।
सूर्यस्य दर्शनं नास्ति पातकं किमतः परम् ॥ १९ ॥

भूमिस्तु पिच्छिला सर्वा निपतन्त्युष्ट्रकादयः ।
केषाञ्चित् त्रुटिताः पादाः पातकं किमतः परम् ॥ २० ॥

मार्गे वारिदसंत्रासान्न भुक्तं क्वापि चर्वणम् ।
[2]स्थितौ पाकस्थलं नाऽसं पातकं किमतः परम् ॥ २१ ॥

अथ सर्वसामान्यं स्वानुभूतं च शीतकालवर्णनमाह—

माघे [2]मार्गभयात् [3]त्यक्तमाच्छादनपटादिकम् ।
मार्गे मेघसमायोगः पातकं किमतः परम् ॥ २२ ॥

काष्ठेनार्द्रतरेणैव धूमव्याप्ते तु लोचने ।
सायं शीतबलं जातं पातकं किमतः परम् ॥ २३ ॥

अङ्गुल्यो वक्रतां प्राप्ताः पादौ हिमगताविव ।
शिरः शीतसमाक्रान्तं पातकं किमतः परम् ॥ २४ ॥

१. गृहे इति शेषः । २. भारेति पाठः । ३. गृहे इति शेषः ।

1. बाहू हस्तौ धुन्वानेन त्वया गन्तव्यम् (हाथ झुलाते चलो, छुट्टे छरीले चलो) इति ग्रामीणवाक्याद् गृहे वस्त्रपात्रादिकं त्यक्तम् । यदि हि हस्तयोर्वस्त्रपात्रादिकं स्यात् तर्हि हस्तधूननमसंभवि, रिक्तपाणीनामेव तथाविधक्रियादर्शनादिति भावः ।

2. सायं रात्रिव्यतिपाताय यत्रावासः परिगृहीतः ।

[1]तूलिकाद्यं गृहे त्यक्तं [1]तृणमङ्गीकृतं निशि ।
वायुः शीतः समायाति पातकं किमतः परम् ॥ २५ ॥

पार्श्वपादौ प्रस्फुटितौ धूलिरन्तर्विशत्यपि ।
भूमौ दत्ते व्यथाधिक्यं पातकं किमतः परम् ॥ २६ ॥

उषस्युत्थानकाले तु घ्राणं स्रवति शीततः ।
संमुखः शीतगो वायुः पातकं किमतः परम् ॥ २७ ॥

**अथ सर्वसामान्यं स्वानुभूतं च द्वादशसु मासेष्वाह—**

उपानहौ धृते पूर्वं पादत्वङ् नावशिष्यते ।
अधृते कण्टकैर्वेधः पातकं किमतः परम् ॥ २८ ॥

मुक्त्वा स्नानादिकं सर्वमस्तान्तं भ्रमणं कृतम् ।
शून्यग्रामे स्थितिर्लब्धा पातकं किमतः परम् ॥ २९ ॥

दुष्टैः [2]करग्राहकैस्तु गन्तुं नाज्ञैव दीयते ।
सार्थे गते सर्वहराः पातकं किमतः परम् ॥ ३० ॥

तस्करैर्लुण्ठिताः केचिच्छस्त्रैः संताडिताः परे ।
पलायनपराश्चान्ये पातकं किमतः परम् ॥ ३१ ॥

अन्नसंग्रहकाले तु चूर्णं कनकसंभवम् ।
तस्करैः पात्यते पिष्टे पातकं किमतः परम् ॥ ३२ ॥

वैष्णवं रूपमाकल्प्य तस्कराः पथिकान् बहून् ।
लुण्ठन्ति दत्त्वा नैवेद्यं पातकं किमतः परम् ॥ ३३ ॥

---

१. [आस्तरणार्थमिति शेषः ।

1. तूलः कार्पासः । तूलिका कार्पासनिर्मितो हिमानिलनिवारणसाधनो नीशारः । "नीशारः स्यात् प्रावरणे हिमानिलनिवारणे" इत्यमरः । 'तुराई, रजाई' इति भाषायाम् । 'तुराई-'शब्दस्य प्रयोगो यथा गोस्वामितुलसीदासविरचिते रामचरितमानसे—"नींद बहुत प्रिय सेज तुराई" इति ।

2. एते करग्राहका मुस्लिमशासकैर्हिन्दूयात्रिणां कृते स्थापितस्य 'जजिया'-नामकस्य करस्य ग्राहकाः राजकर्मचारिणः स्युः ।

[1]उत्काः संस्कृतमासाद्य पथिकं मोहयन्ति च ।
लुण्ठन्ति सङ्गिनं प्राप्य पातकं किमतः परम् ॥ ३४ ॥

यत्र त्वया गम्यते च मया तत्रैव गम्यते ।
[2]मार्गे हरति सर्वस्वं पातकं किमतः परम् ॥ ३५ ॥

श्राद्धमस्ति पितुर्मेऽद्य दैवात् प्राप्तो भवादृशः ।
हिनस्ति दत्त्वैतल्लोभं पातकं किमतः परम् ॥ ३६ ॥

नानारूपधराश्चौरा नानाव्याजवशेन हि ।
मारयन्ति जनान्मार्गे पातकं किमतः परम् ॥ ३७ ॥

एकाकिनो निर्धनस्य स्कन्धे भारधरस्य च ।
नास्ति कष्टं विदेशाच्च पातकं किमतः परम् ॥ ३८ ॥

ऋते विदेशं नो लाभो गृहे निर्धनता सदा ।
शरीरं तु जराक्रान्तं पातकं किमतः परम् ॥ ३९ ॥

## अथ नद्युत्तारे—

शकटाद्यं पारगतं [२]स्वयं तत्रैव संस्थितम् ।
बद्धा नौका वायुवेगात् पातकं किमतः परम् ॥ ४० ॥

नावि स्थिते[३]भारवाहः[४]पार्श्वतो[५]लापितो जले ।
जलवेगाद् गतो[६] हस्तात् पातकं किमतः परम् ॥ ४१ ॥

शकटं स्थापितं नावि[७]पार्श्वतोऽम्बुनि [८]सद्वृषौ ।
प्रवाहगौ वृषौ[९] वेगात्[१०] पातकं किमतः परम् ॥ ४२ ॥

नौकातिलोकैराक्रान्ता उष्ट्राघातस्तु पादजः[११] ।
निमग्ना[१२] मध्यनद्यां तु पातकं किमतः परम् ॥ ४३ ॥

१. उत्क इति शेषः । २. अव्ययम् । ३. मयोति शेषः । ४. टट्टू (अश्वजातिविशेषः) । ५. नौकायाः । ६. भारवाहः । ७. उभयत्र । ८. लापितौ इति शेषः । ९. उतावेव । १०. जलस्येति शेषः । ११. जात इति शेषः । १२. तेनेति शेषः ।

1. 'उत्क'-शब्दस्यात्र प्रयोगः 'उचक्का' इति भाषायां प्रसिद्धेऽर्थे कृतः । शब्दानुशासनेषु तस्योत्कण्ठितर्थावोधकत्वं दृश्यते ।

वृषपुच्छसहायेन स्वबाहुबलतोऽपि च।
केचिल्लग्नाः पारदेशं पातकं किमतः परम् ॥ ४४ ॥

केचिन्मध्ये निमग्नाश्च मनोरथसमाकुलाः।
त्यक्तपुत्रादिकाश्चान्ये पातकं किमतः परम् ॥ ४५ ॥

वृद्धः पिता पारगतः पुत्रस्तु [1]सूर्यंजातिथिः।
द्रव्यादिकं जले मग्नं पातकं किमतः परम् ॥ ४६ ॥

पठिते च वरे शास्त्रे व्युत्पन्नेष्वात्मजादिषु।
विदेशवासो वार्धक्ये पातकं किमतः परम् ॥ ४७ ॥

बह्वायासैः सुसंपन्ने शास्त्रे देशान्तरे पुनः।
दुर्गापाठः परार्थं तु पातकं किमतः परम् ॥ ४८ ॥

धिक् पाण्डित्यं समर्थत्वं यत्पुनर्वार्धकेऽध्वनः।
सेवनं सर्वदा चैव पातकं किमतः परम् ॥ ४९ ॥

[2]कूर्माचलादिकेदारनाथबदरीनाथादिहिमाक्रान्तपर्वतमार्गेषु—

अत्युच्चाः पर्वता दृष्टा नद्यो घूघुरवान्विताः।
तरवो व्याघ्रसंवीताः पातकं किमतः परम् ॥ ५० ॥

नगानामुपरि स्थित्वा दृष्टं चेत्सर्वतो वनम्।
दृश्यतेऽतीव भयदं पातकं किमतः परम् ॥ ५१ ॥

क्वचिच्छ्रुतो व्याघ्रशब्दो गजागमनमप्युत।
शूकरास्त्वपरंपाराः पातकं किमतः परम् ॥ ५२ ॥

भिल्ला बाणं समाकृष्य मारणार्थमुपस्थिताः।
द्रव्यानुमानतः पापाः पातकं किमतः परम् ॥ ५३ ॥

इतस्ततो दृषद्व्याघ्रतरवः सन्ति केवलम्।
नराश्चौरविशेषाश्च पातकं किमतः परम् ॥ ५४ ॥

---

1. सूर्यंजा यमुना, "कालिन्दी सूर्यतनया यमुना" इत्यमरः। तस्या अतिथि-र्नाम यमुनायां निमग्न इति भावः। अथवा सूर्यजस्य यमस्यातिथिः।

2. कूर्माचल आधुनिकः 'कुमायूं'-प्रदेशः।

नगारोहणकाले तु श्वासः संजायते महान् ।
पादावपि व्यथाकीर्णौ पातकं किमतः परम् ॥ ५५ ॥

नगोत्तमाङ्गे नो वारि मध्ये च प्राप्यते क्वचित् ।
अधस्तात्तु नदी भीमा पातकं किमतः परम् ॥ ५६ ॥

दिनाष्टकं च षड् वापि नान्नं संप्राप्यते क्वचित् ।
सहानीते भारभीतिः पातकं किमतः परम् ॥ ५७ ॥

लभ्यते वाहनं [1]डांडि झंपाणं वापि कण्डिकम् ।
शरीरं ग्रन्थिवद्यत्र पातकं किमतः परम् ॥ ५८ ॥

तुषारबलतः सूर्यो न तपत्यपि तादृशः ।
जलस्पर्शाच्छून्यदेहः पातकं किमतः परम् ॥ ५९ ॥

महापातकहन्त्री तु गङ्गा न स्पृश्यते क्वचित् ।
शीतबाहुल्यभीत्या च पातकं किमतः परम् ॥ ६० ॥

मार्गोऽप्येकजनस्यैव संकीर्णस्तु नगोपरि ।
अधःपाते महामृत्युः पातकं किमतः परम् ॥ ६१ ॥

तुषारबलतश्चापि नदी नैव प्रदृश्यते ।
[१]भ्रान्त्याध्वनो[२]मध्यपातः पातकं किमतः परम् ॥ ६२ ॥

हिमाधिक्यान्मार्गदण्डी दृश्यते नैव कुत्रचित् ।
सुज्ञश्चेत् प्राप्यते मार्गः पातकं किमतः परम् ॥ ६३ ॥

अथ केवलं मार्गे स्वानुभूतमाह—

सार्थः समागतः शीघ्रं चूतारामे मनोरमे ।
चण्डाशुगात्[2] पाकहानिः पातकं किमतः परम् ॥ ६४ ॥

वायुः स्थास्यति संध्यायां[३] दिने निश्चित्य संस्थितम् ।
तथा[४] निश्युपवासोऽभूत् पातकं किमतः परम् ॥ ६५ ॥

१. तत्रेति शेषः । २. नद्यामिति भावः । ३. इति इति शेषः । ४. वायुरेव ।

1. 'डांडी, झंपाण, कण्डी' इति त्रयो देशीशब्दाः पर्वतमार्गेषु मनुष्यैर्वोढव्येषु शिबिकासदृशेषु वाहनेषु प्रयुज्यन्ते ।

2. आशुगः पवनः ।

न शीघ्रं पच्यते पात्रे मृज्जे क्षुत् प्रबला पुनः ।
आगत्य पतितं चौरैः पातकं किमतः परम् ॥ ६६ ॥

पातिते[१] चौरवर्ये तु [1]क्रोष्टपालोऽपि दुःखदः[२] ।
अयं किं[३] मारितः साधुः पातकं किमतः परम् ॥ ६७ ॥

एकाकिना ज्वरार्तेन मार्गे तस्करसंकुले ।
स्थितं द्रव्यान्तिकस्थेन पातकं किमतः परम् ॥ ६८ ॥

कूर्माचलमार्गे—

सार्थः समागतोऽरण्ये दृष्ट्वा व्याघ्रं पलायिताः ।
नीतो धीरः[४] पुस्तकाढ्यः पातकं किमतः परम् ॥ ६९ ॥

गङ्गाधरसहायेन गच्छतो[५] व्याघ्रदर्शनम्[६] ।
मालया[७] [2]व्याघ्रमुक्तस्य[८] पातकं किमतः परम् ॥ ७० ॥

शीतो ज्वरः समुत्पन्नो मार्गे स्थातुं न शक्यते ।
वस्त्रादिकं स्वल्पतरं पातकं किमतः परम् ॥ ७१ ॥

वृक्षास्तूच्चतरा भीमाः पर्वता व्याघ्रसंयुताः ।
नद्यो भूतसमाक्रान्ताः पातकं किमतः परम् ॥ ७२ ॥

सायंकालः समायातो वने व्याघ्रादिसंकुले ।
दिग्भ्रमाद् भ्रान्तमार्गस्य पातकं किमतः परम् ॥ ७३ ॥

भिल्लैरुक्तं मध्यवने वस्त्रं देयं त्वया नर ।
वाक्यं श्रुत्वा कृतं युद्धं[९] पातकं किमतः परम् ॥ ७४ ॥

---

१. मयेति शेषः । २. जात इति शेषः । ३. किमर्थमित्यर्थः ।
४. भृत्यनाम । ५. ममेत्यर्थः । ६. जातमिति शेषः ।
७. गङ्गाधरप्रक्षिप्तया । ८. व्याघ्रसांनिध्यात् । ९. मयेति शेषः ।

1. कोटपालः, कोष्ठपाल इति संस्कृतरूपम्, ग्रामरक्षक इत्यर्थः । 'चौकीदार' इति भाषायाम् ।

2. गङ्गाधरप्रक्षिप्तया मालया व्याघ्रसांनिध्यान्मुक्तिर्जाता । मालाप्रक्षेपमात्रेण व्याघ्रान्मुक्तिर्जातेत्याश्चर्यम् ।

[1]जयनगरपुष्करमार्गे—

परितः सिकताभूमिर्जलच्छायाविवर्जिता ।
शकटस्थौ वृषौ श्रान्तौ[1] पातकं किमतः परम् ॥ ७५ ॥

सधनो मारितो [2]भृत्यस्तस्करैर्गूढजे[3] वने ।
आर्तोऽन्यो[4] रथमध्यस्थः पातकं किमतः परम् ॥ ७६ ॥

पाककर्ता ज्वरार्तः सन् रथमाच्छाद्य संस्थितः ।
पद्भ्यां नीता मया भूमिः पातकं किमतः परम् ॥ ७७ ॥

वाहनं नाप्यते क्वापि दत्ते भाटकसंचये ।
पादौ स्फोटसमाकीर्णौ पातकं किमतः परम् ॥ ७८ ॥

श्रान्तेनापि[5] कृतः पाको भोजिताः सेवकाः पुनः ।
स्वहस्तान्मार्जितं भाण्डं पातकं किमतः परम् ॥ ७९ ॥

गोवर्द्धने ज्वरो जातो मार्गश्रान्त्या ममापि च ।
पक्त्वा संभोजिता भृत्याः पातकं किमतः परम् ॥ ८० ॥

रुधिरं तु समुत्पन्नं हस्तयोर्भाण्डमार्जनात् ।
मृत्पात्रं लभ्यते नापि पातकं किमतः परम् ॥ ८१ ॥

हरिद्वारयात्रायाम्—

मुरलीधरैर्धर्मबुद्ध्या प्रदत्तं शकटं मम ।
दैवादुत्पतनाघातौ पातकं किमतः परम् ॥ ८२ ॥

पतनावसरे पुत्रो रामेश्वरमहात्मनः ।
हृल्लग्नोऽपि रुरोदोच्चैः पातकं किमतः परम् ॥ ८३ ॥

---

१. तत्रेति शेषः । २. चयनाख्यः । ३. ग्रामनामेदम् ।
४. इछाख्यः । ५. मया ।

1. जयनगरं ग्वालियरराज्ये गुनासमीपे 'बजरंगगढ' इति नाम्ना प्रसिद्धम् । अत्र हि पुरा महाराजजयसिंहसमये तेषां टङ्कशाला (टकसाल) आसीत् । द्रष्टव्यम्—'कैटलाग आफ दी कॉइन्स इन दी इंडियन म्यूजियम कलकत्ता', भा० ४, पृ० ३१२-१५ ।

ढोलासारथिना पातः कृतश्चोत्पथगामिना ।
भग्ना प्रच्छादनी घर्मे पातकं किमतः परम् ॥ ८४ ॥

महापातकनाशाय हरिद्वारमुपागतम् ।
प्रबलात् पातकाच्छूलं[१] पातकं किमतः परम् ॥ ८५ ॥

शूलेन वैरिणा त्यक्ता[२] स्नानसंध्यादिकाः क्रियाः ।
[1]दक्षेश्वरादियात्रा च पातकं किमतः परम् ॥ ८६ ॥

तीर्थयात्रा कृता लोकैः पर्णकुट्यां मया स्थितम् ।
तीर्थासक्तेन मनसा पातकं किमतः परम् ॥ ८७ ॥

[2]सुधाकुण्डमिति ज्ञात्वा नगमारुह्य गच्छतः ।
श्रान्त्या मध्येऽगवासोऽभूत् पातकं किमतः परम् ॥ ८८ ॥

भृत्यस्य भूतः संलग्नः प्रातःकाले नदीतटे ।
सार्थः सर्वोऽप्यग्रगतः पातकं किमतः परम् ॥ ८९ ॥

सहायकर्तुर्विप्रस्य[३] संभूता चोदरे व्यथा ।
अन्यस्य[४] पादौ शोफाक्तौ पातकं किमतः परम् ॥ ९० ॥

तस्कराणां महाभीतिः पात्राद्यं[५] भूमिसंस्थितम् ।
नास्ति निर्वाहकः कोऽपि पातकं किमतः परम् ॥ ९१ ॥

पङ्क्त्यामाक्रम्यते पन्थाः शयनं सुन्दरीं विना ।
भोजनं क्रियते स्विन्नं पातकं किमतः परम् ॥ ९२ ॥

---

१. जातमिति शेषः । २. मयेति शेषः ।
३. नन्दलालशुक्लस्य । ४. मनसारामस्य । ५. ग्रन्थीत्यर्थः[3] ।

1. कनखलसमीपे दक्षेश्वरमन्दिरं विद्यते ।

2. हरिद्वारसमीपे दक्षेश्वरबिल्केश्वरयोर्मध्ये 'सूरजकुण्ड' इति तीर्थं प्रसिद्धम् । तदेव सुधाकुण्डमिति नाम्ना पूर्वं परिचितं स्यात् ।

3. ग्रन्थिरित्यर्थ इति भाव्यम् । अथवा 'ग्रन्थि' इति निर्विभक्तिकं पदम् । तस्य प्रयोगश्चात्र 'गठरी' इत्यर्थे कृतो भवेत् । तस्मिन् हि यात्रिणां वस्त्रपात्रघनादिकं सर्वं वस्तुजातं निबद्धं भवति । संचिते धनराशावपि 'गठरी'शब्दस्य लाक्षणिकः प्रयोगो दृश्यते ।

अथ [1]सादतखांनमनसूरअलिखांनसेनायाम्—

बृहदश्वं समारुह्य शस्त्राण्याबध्य गात्रतः[१] ।
युद्धं कृतं महाशूरैः पातकं किमतः परम् ॥ ९३ ॥

दुर्गारोहणकाले[२] तूपरिस्थैः[३] पातितः शुचिः[४] ।
तद्दाहात् पतितं चाधः[५] पातकं किमतः परम् ॥ ९४ ॥

पकरीग्रामपाते तु सम्यग् युद्धं कृतं नरैः[६] ।
चिबुकान्तः[७] शरो लग्नः पातकं किमतः परम् ॥ ९५ ॥

कियन्मया प्रवक्तव्यं युद्धात् संपादिता हयाः ।
शिबिकाप्ता [2]गाजिपूरे[८] पातकं किमतः परम् ॥ ९६ ॥

---

१. सप्तम्यर्थे तसिः, गात्रे इत्यर्थः । २. पाछापुरग्रामे । ३. तु उपरिस्थैः = कोटस्थैर्भटैः । ४. अग्निरित्यर्थः । ५. परिखायाम् । ६. मयेति शेषः । ७. तदा ममेति शेषः । ८. युद्धे यवनदत्तत्वात् ।

1. 'सआदतखां' दिल्लीपतिमुहम्मदशाहसाम्राज्ये अवधप्रान्तस्य शासकः (सूबेदार) आसीत् । एष एव स्वतन्त्रस्यावधराज्यस्य संस्थापकः, यस्य राजधानी 'लखनऊ'-नगरे आसीत् । 'मनसूरअलीखां' च 'अब्दुलमनसूरखां' इति नाम्ना प्रसिद्धः सआदतखांनस्य भागिनेयो जामाता च आसीत् । स हि सआदतखांनस्य मरणानन्तरमवधप्रान्तस्य द्वितीयः शासकः (नवाब), पूर्वं च प्रान्तस्योपाध्यक्ष आसीत् । एतयोर्विस्तृतः परिचयः 'फर्स्ट टू नवाब्स ऑफ अवध'—नामके आशीर्वादीलालश्रीवास्तरचिते ग्रन्थे द्रष्टव्यः ।

2. 'गाजीपुर' पूर्वीयोत्तरप्रदेशस्य प्रसिद्धं मण्डलम् (जिला) अस्ति । अत्र 'पाछापुर, पगरीग्राम, नेवादा'—इत्यादिषु संजातस्य कस्यचन संग्रामस्य वर्णनं दृश्यते । विजयमहोत्सवश्च गाजीपुरे समागत्यायोजितमिति प्रसङ्गादायाति । अस्य युद्धस्य वर्णनम्—'फर्स्ट टू नवाब्स आफ अवध'-नामके ग्रन्थे नोपलभ्यते । पूर्वीयोत्तरप्रदेशविजयवर्णनं तत्र (पृ० ४४-५१) दृश्यते, किन्तु तत्रैषां स्थानानां नामानि नोपलभ्यन्ते । 'नवादा—पकरीवरांव'-नामके स्थाने साम्प्रतं बिहारराज्ये गयामण्डले वर्तेते । तत्र सआदतखांनस्य केन सह कदा युद्धं संजातमिति, गयामण्डले एवैतद्युद्धं जातमन्यत्र वा कुत्रचिदित्यैतिहासिकै-र्विचारणीयम् । 'गाजीपुर'-नामकं पत्तनमेकं फतेहपुरमण्डलेऽपि वर्तते ।

[१]शस्त्रक्षते तु संजाते गतं क्रोशचतुष्टयम्[२]।
मार्गे[३] न स्तो जलच्छाये पातकं किमतः परम् ॥ ९७ ॥

[४]राधाकुण्डात् समुत्थाय [1]कालिकायां[५] समागतम्।
दशयामैश्च [2]युद्धार्थं पातकं किमतः परम् ॥ ९८ ॥

[६]महाराष्ट्रैर्द्विपञ्चाशत्क्रोशक्षमायां[७] गजेन[८] च।
सादतखांनशूरस्य[९] पातकं किमतः परम् ॥ ९९ ॥

त्रिंशत्क्रोशं समागत्य मृतोऽश्वः कृष्णवर्णकः।
गतमन्येन चाश्वेन[१०] पातकं किमतः परम् ॥ १०० ॥

दिनत्रयं तु शस्त्राणि [११]देहाद् दूरीकृतानि न।
न स्नातं च न पीतं च पातकं किमतः परम् ॥ १०१ ॥

तुर्येऽह्नि जलं प्राप्तं [१२]मुद्गाः [3]शेटकपञ्चकम्।
[१३]त्रिंशद्भिरार्द्रा भुक्ताश्च पातकं किमतः परम् ॥ १०२ ॥

---

१. नेवादाग्रामे इति शेषः। २. साश्वेनेत्यर्थः। ३. तत्रेति शेषः। ४. मथुरानिकस्थगोवर्धनपर्वतसमीपस्थात्। ५. दिल्लीमध्यस्थायाम्। ६. पूर्वान्वयः। ७. कालिकायामस्य विशेषणम्। ८. उत्तरान्वयः। ९. अयोध्यालखनोग्रामयोः [4] सूबाकस्य। १०. द्वितीयेनेत्यर्थः। ११. कटिपृष्ठादितः। १२. प्राप्ता इति शेषः। १३. नरैरित्यर्थः।

1. एतत्कालिकामन्दिरमधुनापि पुरानीदिल्लीतो दक्षिणदिशि गव्यूतिद्वयपरिमिते दूरे वर्तते।

2. एतद्युद्धं महाराष्ट्रीयैः पेशवाबाजीरावप्रभृतिभिः सह १७३७ ईशवीये संजातम्।

3. संस्कृतशब्दकोशेषु शेटकशब्दो न दृश्यते। बंगलाविश्वकोशे सेटशब्दः परिमाणविशेषवाचको निर्दिष्टः। अत्र शेटकशब्दस्य प्रयोगः 'सेर' इति लीलावत्यादिषु लोके च प्रसिद्धे परिमाणविशेषे कृतः।

4. 'सूबेदार' इत्यस्मिन्नर्थे 'सूबा'शब्दस्य प्रयोगो भूषणकविनापि भूरिशः कृतः।

इत्यादिभिः कष्टसंघैर्धनमुत्पादितं बहु ।
म्लेच्छाधमानां[1] संगत्या[2] पातकं किमतः परम् ॥ १०३ ॥

नादर्शाहे समायाते दांनतरायेण[3] वै सह ।
नाशितं सकलं[4] तच्च पातकं किमतः परम् ॥ १०४ ॥

[5]इत्यादिकष्टमासाद्य पुनः संपादितं वसु ।
यथेष्टं विद्यया चैव गुरोश्चरणभक्तितः ॥ १०५ ॥

मयाटितं चतुर्दिक्षु दृष्टाश्च विविधा नृपाः ।
देशाश्च गिरयो देवास्तीर्थानि शुभदानि च ॥ १०६ ॥

एवं कष्टं विदेशस्य ज्ञात्वा सम्यग् विचक्षणः ।
स्वदेशे च स्थितिं कुर्याद् भुक्त्वार्धं देवतां स्मरन् ॥ १०७॥

यत्र सन्ति निजाः सर्वे क्रीडन्तश्चापि बालकाः ।
पितरौ बान्धवाः पत्नी तं देशं नैव संत्यजेत् ॥ १०८ ॥

स्वजनाः सन्ति चान्यत्र विदेशेऽपि स्वयं पुनः ।
तत्र चेत् सुखमत्यन्तं न तच्च सुखमुच्यते ॥ १०९ ॥

सर्वोपायः कुटुम्बस्य पालनार्थं प्रकीर्तितः ।
तावल्लब्धे धने गेहमनृणी नैव संत्यजेत् ॥ ११० ॥

---

१. मह्मदलीखांनफैजुल्लाखांनादीनाम्[1] । २. संगतिस्तु बृहद्युद्धे स्वरोदयज्ञानेन तेषां जयादिदानार्थमित्यर्थः । ३. दांनतरायो [2]मत्पितुः शिष्यः, [3]कोरडाजहांनाबादे सादतखांनस्य षट्सहस्राश्ववाहानां सेनापतिर्मदाज्ञाकारी चेति । ४. अश्वादिसर्वधनम् । ५. स्वेन भुक्तमिति शेषः ।

1. मुहम्मदअलीखांनः अब्दुलमनसूरखांनस्य सेनायाः पदाधिकारी (फर्स्ट टू नवाब्स ...., पृ० १४८, १५६, १६०) । फैजुल्लाखांनोऽपि तादृश एव कश्चन सैनिकः स्यात् ।

2. दांनतरायविषयिणी कापि सूचना पूर्वोक्ते ग्रन्थे नोपलभ्यते ।

3. उत्तरप्रदेशीयफतेहपुरमण्डले 'कोरा-जहानाबाद'नामके द्वे स्थाने वर्तेते । विस्तरस्तु, 'इम्पीरियल गजेटियर'नामके ग्रन्थे द्रष्टव्यः । 'फर्स्ट टू .... ', पृ० ४७-५१ अपि द्रष्टव्यम् ।

स्वल्पे लाभे व्ययाधिक्यं न कार्यं श्रेय इच्छता।
यथालब्धेन निर्वाहः कृतश्चेत् सुखभाग् भवेत् ॥ १११ ॥

व्ययस्त्वायतुरीयांशादधिको नैव इष्यते।
[1]असम्यग्व्ययशीलैस्तैरिति दुर्गास्तवे स्फुटम् ॥ ११२ ॥

[1]पञ्चमेऽहनि षष्ठे वा शाकं पचति गेहिनो।
अनृणी चाप्रवासी च स वारिचर मोदते ॥ ११३ ॥

युधिष्ठिरेणापि चोक्तमेतद्वाक्यान्तरं पुनः।
तस्मादृणं न कर्तव्यं व्ययाधिक्ये ऋणं भवेत् ॥ ११४ ॥

मानहानिः पारवश्यं स्वजनेऽसमता पुनः।
सर्वत्र लघुता चैव ऋणिनस्तु भवेदिदम् ॥ ११५ ॥

तस्मादृणं न जायेत धनमुत्पादयेत् तथा।
संपादिते यथेष्टे च धने सम्यग्व्ययी भवेत् ॥ ११६ ॥

तस्मात् सर्वैरुपायैस्तु स्वदेशे धनभाग् भवेत्।
ज्ञातिभिर्बन्धुभिश्चापि यथोक्तं व्ययमाचरेत् ॥ ११७ ॥

गुरवो देवताः शिष्टा दीनाश्च[2] बान्धवाश्च[3] ये।
ते सर्वे धनिकैः पूज्यास्तेनोच्चपदभाग् भवेत् ॥ ११८ ॥

धनहीना ऋणैर्युक्ता लुब्धाश्चातीव ये जनाः।
विदेशः सेव्यते तैस्तु तस्मादेतत् प्रकाशितम् ॥ ११९ ॥

एवं बहुविधं कष्टं विदेशे जायते नृणाम्।
तस्मात् सम्यग् विचार्यादौ कर्तव्यमुचितं नरैः ॥ १२० ॥

---

१. 'आयतुरीयांशाधिकोऽसम्यग्व्ययः' इति तट्टीकायां [2]नागोजीभट्टाः।

२. दीना इति प्राणिमात्रे ज्ञेयम्।

३. बान्धवास्तु दीना अदीना अपि पूज्या एवेति भावः।

1. महाभारतीयवनपर्वणः ३१३ अध्यायादुद्धृतः १५ श्लोकः। 'शाकं पचति स्वे गृहे' इति तत्रत्यः पाठः।

2. "असम्यगिति। तुरीयांशाधिको व्ययः असम्यग्व्ययः" इति टीकापाठः। (सप्तशतीटीका, १।१४)

प्रतिदिग्वर्णनं ज्ञेयमेवमेवानुमानतः ।
स्वल्पं कृतं मया ह्येतद् ग्रन्थगौरवभीतितः ॥ १२१ ॥

श्रीनृसिंहो महादेवो गणेशः कालभैरवः ।
पठतां द्विजमुख्यानां दद्यान्मङ्गलसम्पदम् ॥ १२२ ॥

प्रकाश्य कष्टं सामान्यं स्वानुभूतं विशेषतः ।
श्रीष्टदेवप्रसादेन सुखं प्राप महेश्वरः ॥ १२३ ॥

शके चन्द्रर्षिरसभूमिते ज्येष्ठे सिते दले ।
ग्रन्थः संपूर्णतां प्राप्तः पञ्चम्यां बुधपुष्ययोः ॥ १२४ ॥

श्रीमहेश्वरभट्टेन[1] काशीमुख्यनिवासिना ।
इन्द्रप्रस्थस्थितेनैव[2] कृतं कौतुकमादरात् ॥ १२५ ॥

एषा कृतिः कृतिमतां कुशलाय भूयात्
कारुण्यतः कविवरैरपि काम्यमाना ।
कृष्णार्पितैकमतिना[3] विनिवेदितेयं
भूयो यथा हि भवकाननगो न तु स्याम् ॥ १२६ ॥

इति श्रीमद्धरिकृष्णभट्टात्मजभट्टमहेश्वरकृता पथिकजनपातकचिन्तनस्मृतिः समाप्ता । श्रीशुभमस्तु ग्रन्थकर्तुः श्रीगुरोः ॥

॥ श्रीकृष्णार्पणमस्तु श्रीः ॥

---

१. काश्यां नागरज्ञातीया मन्त्रशास्त्रिणो रामकृष्णभट्टाः प्रसिद्धाः । तदात्मजो देवकृष्णभट्टस्तत्पुत्रो हरिकृष्णभट्टस्तत्सुतो महेश्वर इति ।

२. किञ्चित्कालं धनोपार्जनार्थमिन्द्रप्रस्थे स्थितम्, सर्वदा वासस्तु काश्यामिति भावः ।

३. कृष्णाय कल्पतरवे कलिनाशनायेत्यपि पाठः ।

एतस्याग्रेऽपि पृथिवीपतिसहवासस्तज्जयादिकं च तदन्यत्र काव्यं कृतमस्ति ।

# परिशिष्टानि

## नादिरशाहस्य दिल्लीविजयः

### (ग्रन्थकारेण लिखितः)

नादर्शाहोत्पत्तिमाह। पश्चिमस्यां यवनदेशे विलाइताख्ये टोपीवाला ईरानी इति प्रसिद्धास्तज्जातीयस्तत्रत्यपादशाहोऽतिनिर्दयः शूरः।

तेन सर्वेषां राज्यं गृहीत्वा पाणीपथे आगत्य दिल्लीपतिं महम्मदशाहं युद्धे जित्वा तं निगडे पातयित्वा संवत् १७९५ शके १६६० फागुणशुद्धैकादश्यां दिल्लीमध्यकोटे समागतः (?)। तत्र सर्वं स्वाधीनं कृतम्। ततो द्वितीयेऽहनि द्वादश्यां प्रातःकालमारभ्य यामत्रयं यावत् तद्भटैस्तदाज्ञया मनुष्यपश्वादयः सर्वेऽपि खड्गभुशुण्ड्यादिभिर्मारिताः। तत्र संख्या तु मारितमनुष्याणामियं जाता × ×·× ×। नगरं समग्रं लुण्ठितम्। स्त्रियोऽप्यसंख्याता गृहीताः। धनमसंख्यं गृहीतम्। कतिचन निगडे पातिताः। एवं सर्वेषां बहुदुःखं दत्त्वा मास × × × दिन × × × दिल्लीमध्ये स्थितः। ततः × × × मासि × × × तिथौ पुनर्महम्मदशाहाय दिल्लीराज्यं दत्त्वा स्वयं विलाइतगमनार्थं दिल्लीतो निर्गतः।

## ग्रन्थोद्धृतश्लोकांशमूलस्थानपरिचयः

श्लोकाङ्काः

११२ असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम्।
संचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति॥
(दुर्गासप्तशती, १।१४)

११२ टि० "असम्यगिति। तुरीयांशाधिको व्ययः असम्यग्व्ययः"।
(नागोजीभट्टकृता सप्तशतीटीका, १।१४)

११३ पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे।
अनृणी चाप्रवासी च स वारिचर मोदते॥
(महाभारते वनपर्वणि, ३१३।१५)

## ग्रन्थोद्धृतानि व्यक्तिनामानि



## ग्रन्थोद्धृतानि देशस्थानादीनि

# श्लोकानुक्रमणिका

# मदीया दक्षिणभारतयात्रा

संस्कृतविश्वपरिषदश्चतुर्थमधिवेशनं दक्षिणभारते सुप्रसिद्धायां तीर्थस्थल्यां निरुपतिनगर्यां कार्तिककृष्णद्वादशोशुक्रवासरतः कार्तिककृष्णचतुर्दशीरविवासरपर्यन्तं (११-१३ नवम्बर, १९५५ ई०) महता समारोहेण समजायत। अस्यास्तृतीयमधिवेशनं १९५४ ई० वर्षे नागपुरनगरे संजातमासीत्। मुम्बापुरीतः प्रकाशितायां १९५५ ई० वर्षस्य जुलाई-अगस्तमासीयायां २५-२६ संख्याङ्कितायां भारतीयविद्याभवनपत्रिकायां परिपत्रमेकं प्रकाशितमभूत्। तेन च परिज्ञातमस्मिन् वर्षेऽधिवेशनमान्ध्रप्रदेशे तिरुपतिक्षेत्रे नवम्बरमासस्य ११-१२ दिनाङ्कयोर्भवितेति। एतदर्थमान्ध्रप्रशासनेन स्वागतसमितिरेका निर्मिता, यस्याः प्रधान आन्ध्रप्रान्तराजस्वमन्त्री श्रीके०चन्द्रमौलिशर्मा, मन्त्री च तिरुमलैतिरुपतिदेवस्थानसमितेः प्रबन्धकः श्रीसी०अण्णारावमहोदयो निर्वाचितः। २९ संख्याङ्कितायामक्टूबरमासीयायां भवनपत्रिकायां विश्वपरिषदः प्रधानमन्त्रिणः श्रीज०ह०दवेमहोदयस्य निबन्ध एकः प्रकाशितः, यत्र हि तिरुपतितीर्थस्य परिचय इतिहासश्चासीत्। तत्रोत्तरप्रदेशीयप्रशासनेन ज्ञानपुरतः काशीराजमहाविद्यालयसंस्कृतविभागाध्यक्षो डॉ० जे० के० बलवीरमहोदयः, वाराणसीतश्चोत्तरप्रदेशीयसंस्कृतपाठशालानां निरीक्षकमहोदयः श्रीरामनरेशमिश्रः, अस्य विवरणस्य लेखकश्चास्मिन्नधिवेशने स्वप्रतिनिधित्वेन प्रेषिताः।

अस्मिन्नधिवेशने भारतस्य सर्वेभ्यः प्रदेशेभ्यः सार्द्धैकसहस्रं प्रतिनिधय उपस्थिता आसन्। आन्ध्र-मद्रास-मैसूरराज्येभ्य आगतानां प्रतिनिधीनां संख्या तत्र बहुलाऽऽसीत्। विगतेष्वधिवेशनेषु प्रतिनिधीनां संख्या पञ्चशतीं नातिक्रान्ता। अचिन्तितस्याभूतपूर्वस्यास्य जनसंमर्दस्यावासभोजनयोर्व्यवस्थां विधाय स्वागतसमित्या नूनमतुलनीय उत्साहः, स्वकीया प्रबन्धचातुरी च प्रदर्शिता। तिरुपतिविश्वविद्यालयभवनेषु तच्छात्रावासभवनेषु च दक्षिणभारतीयानामुत्तरभारतीयानां चावासभोजनयोः पृथक् पृथगायोजनमासीत्। दक्षिणभारतीयानामुत्तरभारतीयानां च भोजने परिदृश्यमानमतीव वैभिन्न्यमवलोक्यैव तदायोजनमक्रियत, भाषा तु तत्रोपस्थितानां सर्वेषां संस्कृतमेवासीत्। अत्र प्राचीनविद्याविद्वांसः प्राचीनभूषाभूषिताः

सन्त आधुनिकवेषभूषाभूषितैरर्वाचीनैः संस्कृतप्रणयिभिः सममिलन्निति महद्वैशिष्ट्यं नाम संस्कृतविश्वपरिषदः ।

अधिवेशनस्य द्वितीये दिने (१२-११-५५) पूर्वाह्णे न कोऽपि कार्यक्रम आसीत् । उत्तरभारते 'बालाजी' इति नाम्ना प्रसिद्धस्य भगवतो श्रीवेङ्कटेश्वरस्य मन्दिरं तिरुपतिनगरतः क्रोशषट्कं यावद् दूरस्थिते तिरुमलैस्थाने वर्तते । अस्यामवकाशवेलायां देवदर्शनार्थं गन्तव्यमित्यस्माभिरन्यैश्च बहुभिः प्रतिनिधिभिर्निश्चितम् । तदनुसृत्य श्रीरामनरेशमिश्रमहोदयाः, विन्ध्यप्रदेशे संस्कृतविश्वपरिषत्प्राध्यापकाः श्रीप्रभाकरमिश्रमहोदयाः, अहं च प्रतिनिध्यावासतस्तैलयानमधिरुह्य तिरुमलैतिरुपतिदेवस्वसंस्थया संचालितं तैलयानस्थानमागतवन्तः । अत्र दृष्टाः परश्शतं यात्रिणो देवदर्शनाभिलाषिणः । अनेकैः प्रतिनिधिभिर्विभिन्नप्रान्तीयैर्वार्तालापः संजातः, दृष्टाश्च तत्रैव मद्रपुरीविश्वविद्यालयसंस्कृतविभागाध्यक्षा डॉ० राघवमहोदयाः । एते महानुभावाः संस्कृतविश्वपरिषदो वाराणसेयाधिवेशने संमिलिताः, अत एवास्माकं परिचिता आसन् । एभ्यो मयैतेषां मद्रपुरीनिवाससङ्केतस्तत्र गृहीतः । तत्रैव दृष्टा अस्माभिर्लक्ष्मणपुरविश्वविद्यालयकलाविभागाध्तक्षाः श्रीको०अ०सुब्रह्मण्य-अय्यरमहोदयाः।ततो वयं सर्वे संभूय तिरुमलैदेवस्थानं प्रति प्रस्थितास्तैलयानेन । क्रोशषट्कपरिमितो मार्गः प्रायः शैलारोहणक्रमेणैव प्रवर्तते । ततोऽवरुह्य तैलयानतो नैवेद्यादिकं गृहीत्वा दृष्टमस्माभिर्देवमन्दिरस्य प्रथमं गोपुरम्[1] । ततः प्रविश्य मन्दिरं मन्दिरवीथिकासु शान्तभावेन तिष्ठन्तं मुहुर्मुहुर्वेङ्कटेश्वरं स्मरन्तं दर्शकगणमपश्याम । दक्षिणभारतीयेषु मन्दिरेषु दर्शकानां शान्तचित्तता, पङ्क्तिबद्धता, अनुशासनप्रियता चानुकरणीयाः सन्ति । मन्दिरस्याभ्यन्तरेषु भागेषु गर्भगृहादिषु चैक एव मार्गो रज्जुभिर्द्विधा विभक्तो दर्शकानां गमनागमनसौविध्यं करोति स्म । अन्ततो भगवतो श्रीवेङ्कटाचलनाथस्य शङ्खचक्राद्यङ्कितं विग्रहं दृष्ट्वा कृतार्थीकृते चक्षुषी ।

---

१. उत्तरभारतीयेषु मन्दिरेषु शिखराणि, येषामधस्ताद्धि देवविग्रहः स्थाप्यते, वास्तुकलामण्डितान्युच्चानि च भवन्ति । तद्विपरीतं द्रविडमन्दिरेषु गोपुरमेव वास्तुकलामण्डितमुच्छ्रितं च भवति । देवविग्रहस्योपरि तत्र शिखराणि न स्थाप्यन्ते । तंजोरनगरस्थशिवमन्दिरमेव मयाऽस्य नियमस्यापवादरूपत्वेनावलोकितम् । तत्र गोपुरापेक्षया शिखरमेवातीव सुरम्यमत्युच्छ्रायसमन्वितं चावलोक्यते ।

अधिवेशनस्य तृतीयदिवसस्य पूर्वार्द्धः संस्कृतपत्रिकासंपादकैरन्यैश्च प्रतिनिधिभिः परिचयापादनमुखेन यापितः । वेङ्कटेश्वरशोधसंस्थानस्य दर्शनं तु तत्रत्याधिकारिणां समेषामधिवेशने व्यापृतत्वान्नैव संपन्नम् । भूयांस उत्तरभारतीया विशेषत आसामप्रान्तीयाः प्रतिनिधियोऽत्रागत्य रामेश्वरादितीर्थानां यात्रामविधाय पुनरुत्तरभारते न गन्तव्यमिति विचारमाविष्कुर्वन्तोऽवालोक्यन्त । हैदराबादविश्वविद्यालयसंस्कृतविभागाध्यक्षाः[१] श्रीआर्येन्द्रशर्माणोऽप्यत्रागत्य दक्षिणभारतस्य प्रसिद्धानां स्थानानामवश्यमेव यात्रा विधेयेति स्वीयाभिप्रायं प्राकटयन् । माननीयानां श्रीरामनरेशमिश्रमहोदयानामपि विचारसरणिस्तमेव पन्थानमनुधावन्ती दृष्टा । अतो मया च तैश्च तिरुपतितो रामेश्वराय प्रस्थातव्यमिति निश्चितम् । तिरुपतिबाष्पयानस्थानकमागत्य मद्रपुरीगामिबाष्पयानस्यागमने विलम्बमधिगम्य मयि तन्निकट एव स्थितस्य श्रीगोविन्दराजमन्दिरदर्शनस्य मनीषा समुत्पन्ना, दृष्टं च तन्मन्दिरं द्रविडशैलीमुखरायमाणम् । तत्र वर्तते पाषाणनिर्मित एको मण्डपः, यो हि स्वरूपतस्ताड्यमाने सति शब्दतश्च लौहनिर्मितिभ्रान्तिमुत्पादयति ।

अथाऽऽवामागता उपकण्ठं महोदधेः । तत्र पूजकानां स्नानसंकल्पवाक्ये—"रत्नाकरमहोदधिसंगमे" इति श्रुतम् । वस्तुतस्तु रत्नाकरमहोदधिसंगमः कन्याकुमारीतीर्थ एव, अत्र तु तस्य प्रयोग औपचारिकः । यत्र धनुष्कोटितीर्थं रामेश्वरतीर्थं च विद्येते तद् द्वीपं भारतभूमितः पृथगेव वर्तते । तत्परितो महोदधिः स्ववेलाभिः पावयंस्तत्तटाननारतमवतिष्ठते । बाष्पयानगमनागमनसाधनः सेतुरेव संयोजयति तद्भारतभुवा । तस्यैतस्य द्वीपस्यैकतो धनुष्कोटितीर्थमपरतश्च विद्यते रामेश्वरतीर्थम् । पंबनबाष्पयानस्थानकमागत्य धनुष्कोटित आवां रामेश्वरतीर्थं प्रति प्रस्थितौ । तत्र मर्यादापुरुषोत्तमेन रामभद्रेणाऽऽराधितपूर्वो भगवान् रामेश्वरः संस्तुत आवाभ्यां महिम्नस्तवेन ।

---

१. एभिर्महानुभावैर्विचित्रः संयोग आसीन्मम । प्रतिनिध्यावासस्य यस्यां शालायामेते निवसन्ति स्म, तत्रैव ममापि रात्रौ ११ वादनसमये व्यवस्थापकैर्वासः कल्पितः । उत्तरप्रदेशीयवदायूंमण्डलनिवासिनामेतेषां कनिष्ठभ्रातरः श्रीद्विजेन्द्रनाथशर्माणो वाराणसेयराजकीयसंस्कृतमहाविद्यालये साहित्याध्यापकाः सन्ति ।

तत आवां प्रस्थितौ प्राचीनानां पाण्ड्यपार्थिवानां प्रथितां राजधानीं मदुरां प्रति। तत्र हि मीनाक्षीदेव्या मन्दिरमतिभव्यं विराजते। विशालानि चत्वारि गोपुराण्यन्यानि च लघूनि द्रविडस्थापत्यकलाप्रतीकभूतानि प्रद्योतयन्ति मन्दिरशोभाम्, विस्तारयन्ति पाण्ड्यनृपतीनां कलाप्रेम यशश्च, अमरीकुर्वन्ति च तन्निर्मातॄन् सूत्रधारान्। उत्तरभारते मन्दिर-विहार-चैत्याभ्यन्तरं स्थाने स्थाने स्थापिता मूर्तयो भग्नत्वात्तेषां साम्प्रत-मद्भुतालयेष्वेव संरक्षितास्तिष्ठन्ति, अत्र तु नटराजशिवस्य, तद्गणाना-मन्येषां च देवतानां मूर्तयो यथास्थानं भित्तिषु स्तम्भेष्वन्यत्र च खचिता अनिर्वचनीयां कामपि रामणीयकतां तस्य पोषयन्ति। मन्दिरस्य पश्चिमगोपुरं समया सप्तसप्तसंख्याकानां स्तम्भानां सन्ति संघाः। तेषु प्रत्येकं ताड्यमानेषु भवति सप्तस्वराणामभिव्यक्तिरिति श्रुतं तत्र, तन्निदर्शनरूपं चावलोकितं तेषु केषाञ्चिदुपलताडनजातकार्श्यं कलेवरम्। साम्प्रतं तु तत्रत्याधिकारिभिः प्रतिषेधितं तत्ताडनम्, नियुक्तश्च तत्र रक्षापुरुषः। मदुरा साम्प्रतमपि स्वीयां सौन्दर्याभिरुचिपरम्परां रिक्षति, यतो हि मद्रासप्रान्तीयाः प्रथिततमाः शाट्योऽत्रैवोयन्ते।

इत आवां त्रिचनापल्लीं प्रति प्रस्थितौ। रमणीयस्यास्य नगरस्य नातिदूरे कावेरीं निकषा वर्तते वैष्णवानां महनीयं तीर्थं श्रीरङ्गं नाम। यत्र हि वर्तते श्रीरङ्गनायकस्यातिभव्यं मन्दिरम्। दक्षिणभारतस्य पवित्र-तमायां कावेरीसरिति स्नात्वा कृतमावाभ्यां श्रीरङ्गनायकस्य, शेषशायिनः श्रीविष्णोश्च पावनस्य विग्रहस्य दर्शनम्। इतः श्रीरामनरेशमिश्रमहो-दयाश्चेन्नपुरीं (मद्रास) प्रस्थिताः, अहं चागमं तंजोरनगरीम्।

नगरी हीयं विद्याकलारसिकानां महाराष्ट्रीयमहीभुजां तुलजाजी-प्रभृतीनामासीत् क्रीडास्थली। वर्ततेऽत्र संस्कृतहस्तलिखितग्रन्थानां विशालो ग्रन्थागारः। द्रष्टव्योऽयं मयेति धिया तत्र गतवानहम्। अव-लोकितश्च कार्त्स्न्येन सः। अनेकेषु भागेषु विवरणात्मिका सूची ग्रन्था-लयस्यास्य प्रकाशिता विद्यते, प्रकाश्यते च शोधपत्रिकैका ग्रन्थमाला च। अत्रत्यग्रन्थपालानां श्रीनिवासाचार्यमहोदयानां तत्सहायकानां श्रीसुन्दरशर्ममहोदयानां च सौहार्देन मयाऽनेके विशिष्टा ग्रन्थास्तत्रा-वलोकिताः। तेषु चित्रमय ऋग्वेदः, प्रतितालपत्रं त्रिंशत्पङ्क्तिमयं वाल्मीकिरामायणपुस्तकं चातीवाश्चर्यकरमवलोकितम्। ग्रन्थानां कीटा-दिभ्यः सुरक्षार्थमत्र ग्रन्थाधारेषु किञ्चिद् सुगन्धिद्रव्यमायुर्वेदपद्धत्या

निर्मितं प्रदीयते। परीक्षणोऽयं वर्तते प्रयोगोऽन्यैरपि ग्रन्थसंरक्षकैः। अस्ति पुस्तकालयस्य समीप एवैकोऽद्भुतालयः। तत्र प्रतिद्वारमन्येषु च बहुषु स्थलेषु—यत्र हि बहुमूल्या रमणीयतमा च सामग्री स्थापिता, यां दृष्ट्वैव च मनसि कोऽपि विकारो जनिं लभेत, तं तत्रैव शमयितुमिव—कृत्रिम-रक्षापुरुषा वास्तविकान् तिरस्कुर्वन्त इव स्थापिता आसन्। अद्भुता-लयस्यैकाऽपरा विशेषता मया [1]नागपुरस्थितेऽद्भुतालये दृष्टा। तत्र मृताः पशुपक्षिणस्तथा स्थापिताः सन्ति, यथा तेषां वन्यं जीवनं पुरतः स्फुरेद् दर्श-कस्य। कथं हि नामाऽजगरो वृक्षारूढः स्वभक्ष्यमाक्रामति पाशैर्बध्नाति च, क्षीरभोजने कथं नाम श्रृगालो मित्रं सारसं वञ्चति, लोमाशेन गानप्रशंसां विधाय काकः खलु कथं प्रतार्यत इत्यादिचित्रणमद्भुतालयेषु किमपि नावीन्यमनुभावयति।

तंजोरनगरीतश्चिदम्बरतीर्थमागत्य "जटाकटाहसंभ्रमभ्रमन्निलिम्प-निर्झरी" इत्यादितालानुसारिणा ताण्डवेन त्रैलोक्यं मोहयतो नटराजस्य विग्रहं चिदम्बररहस्यं चावलोक्य कृतार्थीकृते चक्षुषी आत्मनः। अत्रैव अन्नमलाईविश्वविद्यालयो वर्तते, यत्र दिसम्बरमासस्य २६-२८ दिनाङ्केष्वखिलभारतीयप्राच्यविद्यापरिषदोऽष्टादशतममधिवेशनं संपन्नम्।

ततो नवम्बरमासस्य १८ दिनाङ्के प्रात आगममहं चेन्नपुरीम्। डॉ॰ वे॰ राघवमहोदयस्य गृहेऽस्थीयत मया तत्र। स्नानादिकं नित्यकर्म संपाद्य प्रथमं गतवानहं कुप्पूस्वामिशास्त्रिशोधसंस्थानं तत्रैव स्थितं संस्कृतमहा-विद्यालयं च द्रष्टुम्। कुप्पूस्वामिशास्त्रिशोधसंस्थाया मन्त्रिणः स्वयं डा॰वे॰राघवमहोदया एव सन्ति। तेषां सहायकाः श्रीटी॰आर॰सुब्रह्मण्य-महोदयास्तत्र प्रथमं दृष्टा मया। तैः सह पुस्तकालयभवनम्, महाविद्यालये संस्कृतपाठनप्रणाली, कुप्पूस्वामिशास्त्रिशोधसंस्थाने च बालानां संस्कृता-ध्यापनप्रणाली नूतनाऽवलोकिता। ततो गतवानहमड्यारसरित्सरितांपति-संगमस्थले स्थितमड्यारपुस्तकालयमवलोकयितुम्। साम्प्रतमस्य संचा-

१. वाराणसीत आगमनवेलायामचिन्तितकारणवशादावाभ्यां नागपुरे स्थितम्। तत्र नागपुरविश्वविद्यालयसंस्कृतविभागाध्यक्षमहोदयानां श्रीसरस्वती-प्रसादचतुर्वेदमहोदयानां गृहे गतमावाभ्याम्। तदैव दृष्टोऽयमद्भुतालयः। नागपुरविश्वविद्यालयस्य संस्कृतहस्तलिखितग्रन्थालयस्तु द्रष्टुं नापार्यत, तत्रावकाशवशात्।

लकाः पूर्वं वाराणसीमधिवसन्तो भारतीयसंगीतमर्मज्ञाः फ्रांसदेशीयाः श्रीडेनियेलुमहोदयाः सन्ति, यैः 'शिवशरण' इति काश्यां स्वीयं नामाङ्की-कृतमासीत्। प्रथममेते महानुभावास्तत्र दृष्टा मया। ततश्च दृष्टो मया संपूर्णो ग्रन्थालयः। अत्र हस्तलेखानां सुरक्षार्थं वातावरोधिग्रन्थाधाराणां बहुव्ययसाध्यानां व्यवस्था विद्यते। दक्षिणभारतपुस्तकालयेषु सर्वत्र तालपत्रीयग्रन्थानां सुरक्षार्थं विशिष्टा व्यवस्था दरीदृश्यते।

अड्यारपुस्तकालयतोऽगममहं मद्रासविश्वविद्यालयभवनम्, यत्र हि डा०वे०राघवमहोदया आसन्। तत्र दृष्टो मया स कार्यालयः यत्र हि राघवमहोदयानां निरीक्षणे नूतनस्य हस्तलेखानां महासूचीपत्रस्य (न्यू कैटलागस कैटलागरम्) कार्यमग्रे सरति। दृष्टश्च मया विश्वविद्यालयस्य विशालतमो ग्रन्थालयः। विश्वविद्यालयभवन एवैकस्मिन् पार्श्वे वर्तते राजकीयहस्तलिखितग्रन्थालयोऽपि।

अपराह्णे ४ वादनसमये कलाशालायामेकस्यामासीत् प्रान्तीया संस्कृतभाषणप्रतियोगिता। यस्यां मद्रासप्रान्तीया दशाधिकाश्छात्रवक्तारः संमिलिता आसन्, येषु तिस्र आसन् महिलाः। अस्याः प्रतियोगितायाः संयोजका निर्णायकेष्वेकतमाश्चासन् राघवमहोदयाः। मामपि तत्र नीतवन्त एते महानुभावाः। प्रतियोगितायाः विषय आसीद् हिन्दीभाषाया राष्ट्रभाषात्वम्। एकया छात्रयाऽन्यैश्च कैश्चिद् वक्तृभिर्वाग्मिता स्वीया साधु प्रकटिता। अत्र राजकीयहस्तलिखितग्रन्थालयस्य संरक्षकमहोदया अप्युपस्थिता आसन्। डॉ० राघवमहोदयेन तेषां परिचयः कारितः।

रात्रौ डॉ० राघवमहोदयानामध्ययनकक्षं मयाऽवलोकितम्। तत्र नैकविधवाद्यानामुपस्थितिस्तेषां संगीतप्रेम प्रकाशयति स्म। मद्रपुरी-संगीतसभाया मन्त्रिपदं समलङ्कुर्वन्त एते महानुभावाः काञ्चीपीठा-धीशैर्जगद्गुरुभिः श्रीशङ्कराचार्यैः 'कविकोकिल' इति विरुदप्रदानेन सत्कृता दिल्लीनगर्यां 'साहित्य एकेडमी' इति ख्यातायां संस्थायां संस्कृतविभागस्य संयोजकाः सन्ति। एभिर्महानुभावैः प्रतिरविवासरं मद्रास-आकाशवाणीकेन्द्रतः संस्कृतकार्यक्रमः प्रसार्यते। महामहिम्नामेतेषां मय्येष कृपाभरः स्नेहश्च कृतज्ञताप्रकटनाय मां हठात् प्रेरयति॥

---

# मदीया प्रथमा अध्ययनयात्रा

'विगते पुरुषोत्तममासे मया जयपुर-अहमदाबाद-वटोदर-मुम्बापुरी-पुण्यपत्तन-नगराणाम् , नासिक-त्र्यम्बक-घुष्णेश्वरतीर्थानाम्, हाथीगुफा-(एलीफेण्टा)-एलोरा-अजन्तागुहामन्दिराणां च मनोमोददायिनी ज्ञानवर्धिका च यात्रा संपादिता। मुख्यत इयमासीन्मदीया अध्ययनयात्रा। वामकेश्वरतन्त्रं नित्याषोडशिकार्णवस्यैवापर नामधेयम्, योगिनीहृदयं तु पृथक् तन्त्रमिति मया योगिनीहृदयस्य द्वितीयसंस्करणस्यानुप्रास्ताविके सप्रमाणमुपपादितम्। तत्रैव नित्याषोडशिकार्णवस्य प्राचीने द्वे टीके उपलभ्येते इत्यपि सूचितम्। प्राचीनयोरनयोष्टीकयोः संपादनं प्रकाशनं च विधेयमिति गुरुवर्याणां महामहोपाध्यायश्रीगोपीनाथकविराजमहोदयानामादेशमुपलभ्य सरस्वतीभवनग्रन्थमालायामनयोः प्रकाशनं भविष्यतीति संमाननीयैर्वाराणसेयसंस्कृतविश्वविद्यालयस्यानुसन्धानसञ्चलाकैरुपकुलपतिभिश्च प्रोत्साहितोऽहमत्र प्रवृत्तः। अनयोष्टीकयोः संपादनप्रसङ्गे भगवत्यास्त्रिपुरसुन्दर्या आन्तरयजनसम्बन्धिनो ग्रन्था अन्वेषणीया इत्येषा मनीषा आसीत् प्रेरयित्री यात्राया अस्याः।

केनचित् प्रसङ्गेन श्रीरङ्गपत्तनस्थ-वाणीविलास-मुद्रणालयतो मुद्रितश्चिद्विलासस्तवो मया दृष्टः। स्तवकर्तुर्नाम तत्र न दृश्यते। अत्रत्या केचन श्लोका योगिनीहृदयदीपिकायां पुण्यानन्दशिष्यामृतानन्दविरचितायां स्वगुरूक्तिरूपत्वेनोद्धृता अवलोक्यन्ते। एष स्तवोऽमृतानन्दयोगिनो गुरोः कामकलाविलासकारस्य पुण्यानन्दस्य भवेदिति मया सञ्चालकमहोदयाः श्रीक्षेत्रेशचन्द्रचट्टोपाध्याया निवेदिताः। अस्मिन् प्रसङ्गे तेषां वार्ता हिन्दूविश्वविद्यालयस्थसंस्कृतमहाविद्यालयस्याध्यक्षैः श्रीरामचन्द्रशास्त्रिभिः संवृत्ता। तेषां सविधेऽप्यासीत् कन्नडलिप्यां मुद्रितश्चिद्विलासः। तत्र च अमृतानन्दकृतित्वेनैष स्तवः प्रदर्शितः। संस्कृतविश्वविद्यालयस्यानुसन्धानपण्डितानामस्मन्मित्राणां श्रीकालिकाप्रसादशुक्लमहोदयानामुद्यमेन वटोदरनगरस्थ-गायकवाड़-शोधसंस्थायां स्थितायाश्चिद्विलासस्तवमातृकायाः प्रतिलिपिरुपलब्धा। तत्र च स्तवकर्तुर्नाम पुण्यानन्द इत्येवासीत्। योगिनीहृदयदीपिका पुनरवलोकिता। तस्याश्चान्यस्यां मातृकायाम् 'अस्मदुक्तरीत्या'

इति पाठ आसीत् 'अस्मद्गुरूक्तरीत्या' इत्यस्य पाठस्य स्थाने। अस्या विशयपरम्परायाः कुत्राप्यवसानमावश्यकम्। नानापुस्तकालयेषु स्थितानां मातृकाणामवलोकनेनैव एतत्संपद्येतेति धियापि निष्पादितोऽयं यात्राकार्यक्रमः।

यात्रायाः प्रथमा विश्रामस्थली आसीद् जयपुरनगरी। महामान्या वाराणसेयाः श्रीसम्पूर्णानन्दमहोदयास्तत्र मयाऽवलोकिता राजस्थानराज्यपालपदवीमधितिष्ठन्तः। जयपुरनगर्यां ब्रह्मपुर्यां होलिकोत्सवप्रसङ्गे चत्वारि जननाट्यानि संपाद्यन्ते स्मेति तत्र श्रुतं मया। चतुर्षु द्वे शृङ्गारप्रधाने, द्वे च योगप्रधाने। योगप्रधानयोर्नाट्ययोर्वीरयोगिनीसंवादो होलिकादाहदिने गोपीचन्दभरथरीनाट्यं च वैक्रमनूतनवर्षारम्भदिने भवति। एतदन्तिमं नाट्यं जयपुरराज्यस्य प्राचीनायां राजधान्याम् 'आमेर' इत्याख्यायां दृष्टं मया। अत्र वङ्गदेशीयस्य राज्ञो गोपीचन्द्रस्य राज्यं विहाय योगमार्गे प्रवृत्तिः प्रदर्शिता। गोपीचन्द्रस्य माता मयनावती जालन्धरनाथस्य शिष्या आसीत्। तया योगबलेन ज्ञातं यन्मदीयस्य पुत्रस्य विंशतिवर्षवयस्कस्यायुर्द्वित्रेष्वेव दिनेषु क्षीणा भविष्यतीति। पुत्र! त्वया भोगमार्गं विहाय योगमार्गोऽवलम्बनीयः, कालविजयश्च संपादनीय' इत्युपदिदेश सा तम्। "कथं कालविजयः संभवी? भवत्या क्वचिदेतद् दृष्टं श्रुतं वा" इति पृष्टा माता "त्वन्मातुलो भर्तृहरिरुज्जयिनीनृपतिर्गोरक्षनाथेन कृतोपदेशो मृत्युविजयं प्राप्तवान्" इत्याह। "तादृशो गुरुः कथमासाद्येत" इति पुनः पृष्टा माता स्वकीयं गुरुं जालन्धरनाथं सस्मार, मदीयः पुत्रो योगविधिना मृत्युमुखान्मोचनीय इति च प्रार्थयामास। उपदिष्टयोगमार्गस्य दीक्षितस्य च शिष्यस्य परीक्षार्थं जालन्धरनाथो गोपीचन्द्रं मातुर्भगिन्याः पत्न्याश्च सकाशं भिक्षार्थं प्रेषयति। राजवेषं विहाय मुण्डितमस्तकं भिक्षापात्रमादाय भिक्षयन्तं स्वभ्रातरं दृष्ट्वा भगिनी प्राणांस्तत्याज। गुरुप्रसादेन जालन्धरनाथो गोपीचन्द्रभगिनीं पुनरुज्जीवयामास, गोपीचन्द्रं च कालपाशाद् मोचयामास।

यत्र नाट्यपद्धत्याऽधुनापि योगवार्ता जनेषु प्रचार्यते, तत्र राज्ये कदाचनास्य योगमार्गस्य बाहुल्येन प्रचारो भवेत्। पार्वत्येषु प्रदेशेष्वधुनापि गृहस्था योगिनश्च नाथमार्गानुयायिनो वसन्ति तत्र, तेषां मठमन्दिराणि च सन्ति। तत्र प्राचीना ग्रन्थाः परम्पराश्च सुरक्षिताः

स्युरद्यापि। प्राच्यविद्यारसिकेन राज्यपालेनात्र विषये विशेषतोऽवधातव्य-मिति प्रार्थ्यते सविनयम्।

अहमदाबादनगरं नातिप्राचीनम्। अत्र मुगलकालिकी स्थापत्यकला जैनमन्दिराणि च दर्शनार्हाणि सन्ति। साबरमतीसरिदुपकण्ठं महात्मनो गान्धिन आश्रम आधुनिकं तीर्थम्। सविनय-अवज्ञा-आन्दोलनस्य सूत्र-पातोऽत्रैव संजातः। ऐतिहासिको दांडीयात्रा इत एव प्रारब्धा। कांकरियासरो नगरस्य रमणीयतमं स्थानम्। अत्र पशुपक्षिणां संग्रहा-लयोऽवलोकनार्हः, कृत्रिमा वनवीथिश्च। महात्मना गान्धिना स्थापितो गुजरातविद्यापीठोऽधुना विश्वविद्यालयरूपेण विराजते।

वटोदरपत्तने श्रीमतां विद्यासुधानिधीनां बदरीनाथकाशीनाथशास्त्रिणां नरसिंहवीथिस्थे मन्दिरे स्वगृहनिर्विशेषं न्यवसमहं चत्वारि दिनानि यावत्। शास्त्रिणामेषामुद्यमेन तत्र संस्कृतविदुषामेका संस्कृतविद्वत्सभाख्या परिषत् प्रतिमासं विशिष्टेष्ववसरेषु च संमिलति, प्रकाशयति च संस्कृतसौरभं नाम पत्रम्। श्रीमतां शास्त्रिणां तेषां कुटुम्बिजनस्य च स्नेहभृतेन व्यवहारेण सभाजितोऽहं नाज्ञासिषं स्वस्मिन् प्रवासित्वम्।

अत्र मया सर्वप्रथमं गायकवाड़शोधसंस्थानमवलोकितम्। एतद्धि महत्त्वपूर्णानां संस्कृतग्रन्थानां प्रकाशनाय, प्राचीनानां मातृकाणां संग्रहाय च प्रथिततमम्। अधुनाऽत्र वाल्मीकीयरामायणस्य विशिष्टं संस्करणं संपाद्यते। काण्डद्वयं मुद्रितमपि। कया पद्धत्याऽस्य ग्रन्थस्य सम्पादनं क्रियत इति मया सावधानं तत्र दृष्टम्। गायकवाड़-शोधसंस्थानस्य संचालकानां श्रीमतां जी०बी०सांडेसरामहोदयानाम्, उपसंचालकानां श्रीमताम् उमाकान्तपी०शाहमहोदयानाम्, मातृकासंरक्षकाणां श्रीमतां जयन्तप्रे०ठाकरमहोदयानां च विशिष्टेनानन्यभावेन मया द्वित्रदिनेष्वेव शताधिका मातृकाः परीक्षिताः। अत्रैव तत्रत्यैर्विद्वद्भिः श्री जे०एस०पदे-शास्त्रिभिर्वार्तालापस्य शुभावसरोऽपि लब्धः। अत्र वामकेश्वरतन्त्रस्य (नित्याषोडशिकार्णवस्य) उपलब्धासु मातृकासु प्राचीनतमा १५९३ वैक्रमवत्सरे लिखिता मातृका दृष्टा। योगिनीहृदयदीपिकायामुद्धृता ज्ञानदीपविमर्शिनी, भास्कररायविरचिता बाह्यवरिवस्याविधिः, कैवल्या-नन्दस्य परशिवमहिम्नस्तवटीका, अन्ये च बहवो विशिष्टा ग्रन्था उप-लब्धाः। अत्रत्यो हंसामेहतापुस्तकालयः खल्वलोकनार्हः। तस्मिन्

सहस्राधिकं वाचकानामेकपद एव ग्रन्थावलोकनस्य सुव्यवस्थितमायोजनं दृश्यते। वाचकेन पञ्चक्षणाभ्यन्तर एव पुस्तकादिकमधिगम्यते। तत्रत्या अधिकारिणो वाचकाय सर्वंविधं साहाय्यं कर्तुं सज्जास्तिष्ठन्ति। अत्रत्यो मुम्बापुरीस्थश्च संग्रहालयो नानाकालिकानामाश्चर्यजनकानां वस्तूनां संग्रहं प्रदर्शयन् दर्शकानां ज्ञानवृद्धौ महत् साहाय्यमाचरति। कतिपयासु पङ्क्तिषु तस्य वर्णनं कर्तुं न पार्यते।

मुम्बापुर्यां मया 'एशियाटिक-सोसाइटी' इत्याख्याया विश्वविश्रुतायाः संस्थायास्तत्रत्या शाखाऽवलोकिता। तत्रापि हस्तलिखितग्रन्थानां संग्रहस्तेषां विवरणात्मिका सूची च विद्यते। एवमेव मुम्बापुरीविश्वविद्यालय-पुस्तकालयेऽपि मातृकाणां संग्रहस्तेषां विवरणात्मिका सूची च वर्तते। अपरचिताऽपि व्यक्तिः कथं नाम सर्वविधसौविध्यप्रदानेन सन्तोष्टव्येति दृष्टं मया सर्वत्रास्यां यात्रायाम्। पुस्तकालस्थग्रन्थानां मातृकाणां चोपयोगः सर्वसाधारणाय भवति, नहि तत्र निधानरक्षकनागफणाफूत्कारेण पाठका भीषयन्ते।

अध्ययनयात्राया अन्तिमा विश्रामस्थली आसीत् पुण्यपत्तननगरी। संस्कृतवाङ्मयगवेषणाकार्यप्रस्तावे काशीतः किमपि वैशिष्ट्यं विराजतेतरामस्या नगर्याः। अत्रत्यानां भाण्डारकरशोधसंस्थान-वैदिकसंशोधन-मण्डल-भारतीयेतिहाससंशोधनमण्डल-डेक्कनमहाविद्यालयप्रभृतीनां संस्थानानां स्वस्वक्षेत्रेषु वर्तते किमपि महनीयं वैशिष्ट्यम्। अत्राहं संस्कृतप्रचारसभायाः संचालकानां संस्कृतप्रचारकार्येऽहर्निशं दत्तावधानानां सौजन्यमूर्तीनां श्रीमतां गणेशशास्त्रिशेंडेमहोदयानां गृहे न्यवसम्। स्वगृहनिर्विशेषं वसता मया तत्र सत्यताऽनुभूता संस्कृतप्रचारायार्पितजीवनानां श्रीवासुदेवद्विवेदिनामेतस्य पद्यस्य—

> वासो राजपथे, गृहस्य पुरतो यानानि, रात्रौ कथा
> शय्याभोजनपानसौख्यमखिलं स्वेच्छानुकूलं सदा।
> स्नानं चोष्णजलेन चायमुभयोरुष्णं तथा सन्ध्ययो-
> र्विद्वद्वर्यगणेशशास्त्रिसदने किं किं न लब्धं सुखम्॥
>
> (दक्षिणदर्शने, पृ० ४७)

श्रीमतां शेंडेशास्त्रिणां गृहस्य समीप एव निवसन्ति वैदिकसंशोधन-मण्डलस्य मन्त्रिणो डॉ० चि०ग०काशीकरमहोदयाः। वार्तालापप्रसङ्गे

तैर्भारतीयेतिहाससंशोधनमण्डलस्य परिचयस्तस्य समीप एव स्थितिश्चेति सूचितम्। तत्र गच्छता मया दशसहस्राधिका मातृकास्तत्र दृष्टाः। एका ग्रन्थसूची मुद्रिता, अपरा च मुद्रणोन्मुखी। वर्तते तत्राद्यावधि कुत्राप्यनुपलब्धस्य शिवानन्दमुनिविरचितस्य सौभाग्यहृदयस्तवस्य मातृका। एतदुपलब्ध्यर्थमहं श्रीमतां काशीकरशास्त्रिणाम्, इतिहाससंशोधनमण्डलस्य मन्त्रिणां श्री जी०एच० खरेमहोदयानां च चिरमनुगृहीतोऽस्मि। अनया संस्थयाऽधुनावधि इतिहासपुरातत्त्वविषयका द्विशताधिका ग्रन्था मुद्रिताः। अत्रेतिहाससम्बन्धिनीनां विविधानां सामग्रीणां महनीयः संग्रहो विद्यते। अनुसन्धित्सुभ्यः सर्वापि सामग्री सर्वथा सुलभाऽस्ति। अस्याः संस्थापकाः सन्ति प्रसिद्धा इतिहासज्ञाः श्री वी०के०राजवाडेमहोदयाः।

भाण्डारकारशोधसंस्थानमस्ति विश्वविदितं संस्कृतशोधसंस्थानम्। अत्र महाभारतस्य ऐतिहासिकं संस्करणं भवतीति विदितचरमेव विद्वद्वर्गस्य। महाभारतस्य प्रकाशनं संपन्नम्। अधुना हरिवंशस्य कार्यं प्रचलदस्ति।

अत्रत्येन वैदिकसंशोधनमण्डलेन सायणभाष्यसहित ऋग्वेदश्चतुर्षु भागेषु मुद्रित इति जानन्ति विद्वांसः। श्रौतकोशोऽथ चाष्टादशोपनिषदोऽपि दृष्टा भवेयुर्विद्वद्भिः। अत्रत्ये उपनिषत्प्रकाशने वैशिष्ट्यमिदं विशेषतोऽवधातव्यं विद्वद्भिर्यदत्र समानाभिप्रायकाणि वचांसि पाश्चात्त्येभ्यः पौरस्त्येभ्यश्च प्राचीनशास्त्रेभ्यः उद्धृत्य प्रदर्शितानीति। अनयैव संस्थया पारसीकानां प्राचीनतमस्य धार्मिकस्य 'अवेस्ता'नाम्नो ग्रन्थस्य देवनागरीसंस्करणं प्रकाश्यते। अस्य भागद्वयं प्रकाशितमपि। अवेस्ताग्रन्थस्य ऋग्वेदस्य च भाषासाम्यं जानन्त्येव भाषावैज्ञानिका विद्वांसः। भास्करभट्टस्य सायणाचार्यस्य च भाष्येण सह तैत्तिरीयसंहितासंस्करणं संस्क्रियते साम्प्रतम्। पञ्चषाणामेव विदुषां सततोद्यमशीलानां परिश्रमः कियत् साफल्यं भजत इति साक्षादत्र द्रष्टुं शक्यते। अस्याः संस्थाया जीवातुभूतौ मन्त्रिणौ श्रीमन्तौ एन०एस०सोनटक्के-चिं०ग०काशीकरमहोदयौ नूनमभिनन्दनार्हौ वैदिकवाङ्मयानुशीलनरुचीनाम्। कतिपयेभ्यो वर्षेभ्यः पूर्वमस्या एव संस्थाया उद्यमेनास्यां नगर्यां वाजपेययागः सविधिः सम्पन्न आसीत्। साम्प्रतमस्यास्तिलकविद्यापीठनगरे स्वकीयं नूतनं भव्यं भवनं निर्मितमास्ते। अत्र च प्राचीनानां वैदिकानां पारसीकानां च यज्ञपात्राणां प्रतिकृतयः संगृह्यन्ते।

डेक्कनमहाविद्यालयोऽस्ति व्याकरणस्य भाषाविज्ञानस्य कोशसम्ब-न्धिनश्चानुसन्धानकार्यस्य महत्केन्द्रम्। अत्र चत्वारिंशद्वर्षेभ्यः पूर्वं विशालतमस्य संस्कृतवाङ्मयकोशस्य निर्माणकार्यं प्रारब्धम्। तत्कार्यं केन्द्रीयप्रशासनसाहाय्येनाद्य त्वरया प्रचलति। अस्य विशालतमस्य कोशस्य १९७१ ई० वर्षतः प्रकाशनमारभ्येतेति धिया तत्र कार्ये व्यापृताः सन्ति विद्वांसः। कया पद्धत्या तत्र कार्यं प्रचलतीति विषये विस्तरेण प्रदर्शितं कोशविभागाधिकारिभिः श्री ई०डी० कुलकर्णीमहोदयैः।

पुण्यपत्तनतः 'शारदा' अथ च 'भारतवाणी' इति पाक्षिकं संस्कृत-पत्रद्वयं प्रकाश्यते। 'आनन्दाश्रमग्रन्थमाला' अथ च 'ओरियण्टल बुक एजेंसी' इति वर्तते संस्थानद्वयं संस्कृतग्रन्थानां प्रकाशनाय। नमो नमो महद्भ्यो विद्वद्भ्यः पुण्यपत्तनस्थेभ्यः।

सम्पूर्णे भारते १२०० परिमितानि गुहामन्दिराणि सन्ति। तानि वर्गत्रये विभक्तुं शक्यन्ते—प्रथमो वर्गः प्राचीनानां ईशापूर्वद्वितीयशता-ब्दीत ईशवीयद्वितीयशताब्दीपर्यन्तमुत्कीर्णानाम् द्वितीयो वर्ग ईशवीय-पञ्चमशताब्दीतः सप्तमशताब्दीपर्यन्तं कृत्तानाम्, तृतीयो वर्गश्च अष्टम-शताब्दीतो दशमशताब्दीपर्यन्तं टङ्कितानाम्। गुहामन्दिराणां बाहुल्येन स्थितिश्च वर्तमाने महाराष्ट्रराज्ये दृश्यते। सम्राडशोकेन तत्पौत्रेण दशरथेन च रचितानि सप्त गुहामन्दिराणि प्राचीनतमानि (२७३-२३२ ई० पू०) सन्ति। एषां स्थितिर्बिहारराज्ये गयामण्डले बाराबाराख्ये गिरौ वर्तते। एषां गुहामन्दिराणां भित्तिस्तथैव चिक्कणा दृश्यते, यथा सम्राडशोकेन निर्मापितानां स्तम्भादीनाम्। एतानि सर्वाणि गुहामन्दिराणि न प्रकृत्या निर्मितासु दरीषु दृश्यन्ते, अपि तु महता मानवश्रमेण, बुद्धि-कौशलेन, शिल्पनैपुण्येन च रचितासु गिरिपाषाणान् खण्डयित्वा उत्कीर्णासु गुहासु विराजन्ते। अत्रत्या मूर्तयो मन्दिराणि स्तम्भादीनि च न पृथग् निर्माय तत्र स्थापितानि, किन्तु गिर्युदरविदारणवेलायामेव तथा तथा उत्कीर्य रचितानि। शताब्दीर्यावदनवरतं हृदयविदारकेण कठोरेण श्रमेण निर्मितान्येतानि गुहामन्दिराणि दृष्ट्वा कस्य नाम सचेतसो न भवति श्रद्धा-वनतं चेतः?

मुम्बापुरीसमुद्रतटस्थितात् 'अपोलो'इत्याख्यात् पत्तनात् (बन्दरगाह), यस्य हि कूले एकतो भारतप्रवेशद्वारम् (गेट वे ऑफ इण्डिया), अपरतश्च

'ताजमहल होटल' इत्याख्यया प्रसिद्धतरं भवनं वर्तते, प्रतिदिनम् 'एलिफेण्टा'-द्वीपं प्रति 'मोटर लंच'-यानं प्रचलति प्रातर्नववादनवेलायाम्, एकवादनवेलायां च पुनः परावर्तते। अस्य भाटकं दशरूप्यकपरिमितं वर्तते। शनैश्चर-रविवासरयोस्तु 'स्टीमर'यानं गच्छति। तस्य भाटकं सार्धत्रयरूप्यकपरिमितमेव। यात्रिभ्य ऐतिहासिकदृश्यव्याख्यानार्थं प्रशासनेन नियुक्तो निर्देशकस्तत्र सहैव गच्छति यात्रिणां निःशुल्कसाहाय्यार्थम्। मुम्बापुर्यां 'ट्राम्बे' इत्याख्ये स्थाने 'अप्सरा' इत्याख्यम् अणुविद्युन्निर्माणसंयन्त्रं विद्यते। तस्य स्थानस्य समीपत एव 'मोटर लंच'-यानं गच्छति। 'एलिफेण्टा'-द्वीपश्च मुम्बापुरीतः क्रोशत्रयपरिमिते दूरे वर्तते। 'एलिफेण्ट' इत्याङ्ग्लभाषायाः शब्दो गजपर्यायो वर्तते। अत्रत्याया मुख्याया गुहाया मुखद्वारे पाषाणखचिता सुन्दरतमा गजप्रतिकृतिरासीत्। एषा प्रतिकृतिरधुना मुम्बापुरीस्थे 'विक्टोरिया'-संग्रहालये स्थापिता दृश्यते। अस्मिन् द्वीपे स्थितासु गुहास्वेकस्यामेव 'गणेश-गुफा' इत्याख्यायां गुहायामुत्कीर्णा मूर्तयो दृश्यन्ते नान्यासु। अत्र भगवतो भूतभावनस्य शिवस्यैव सर्वा मूर्तयः सन्ति। अर्धनारीश्वरशिवस्य, त्रिमूर्तिशिवस्य, अन्धकासुरमर्दकस्य शिवस्य, ताण्डवं नृत्यतः शिवस्य, द्यूतासक्तस्य शिवस्य, कैलासोत्पाटनक्षणे रावणमानमर्दकस्य शिवस्य, वरयात्राव्यापृतस्य शिवस्य, शिवपार्वतीविवाहमहोत्सवस्य च मनोहराः प्रतिकृतयोऽत्र दृश्यन्ते। एषामुत्कीर्णनकाल ईशवीयाऽष्टमी शताब्दीत्यैतिहासिकाः कथयन्ति। अस्यामेव गुहायां सुस्वादुशीतलस्वच्छपेयजलपूर्णः खातोऽपि वर्तते, यत्र पर्वतशिखरेषु वृष्टस्य देवस्य जलं संगृहीतं तिष्ठति, यात्रिणां च घर्मपिपासापीडितानां खेदं परिहरति।

पुण्यपत्तनतो 'बस'-यानेन यात्रां विधाय मया नासिकक्षेत्रमधिगतमासीत्। ततश्च त्र्यम्बकक्षेत्रस्य ब्रह्मगिरेश्च यात्रां समाप्य बाष्पयानेन 'औरंगाबाद'-नगरं प्रति प्रास्थायि अजन्ता-एलोरागुहामन्दिराणि द्रष्टुम्। 'मनमाड़'स्थानकतः (स्टेशन) 'औरंगाबाद'नगरं प्रति प्रस्थीयते। औरंगाबादत एलोरागुहामन्दिराणि सप्तक्रोशमिते दूरे, अजन्तागुहामन्दिराणि च ३२ क्रोशमिते दूरे वर्तन्ते। अजन्तागुहामन्दिरसमीप एव 'जलगाँव'स्थानकं वर्तते। औरंगाबाद-स्थानकतः प्रत्यहं प्रातः सप्तवादनवेलायाम् एलोरागुहामन्दिराणि, अजन्तागुहामन्दिराणि चोद्दिश्य विशिष्टं यात्रिक-बस-यानं प्रचलति। मया पूर्वम् एलोरागुहा-

मन्दिराणां यात्रा कृता । विशिष्टं यात्रिकवस-यानम् एलोरागुहामन्दिराणाम्, द्वादशज्योतिर्लिङ्गेष्वेकतमस्य घुश्मेश्वरज्योतिर्लिङ्गमन्दिरस्य, 'औरंगजेब' इत्याख्यस्य मुगलसम्राजस्तस्य गुरोश्च समाधिस्थलस्य, देवगिरि(दौलताबाद) दुर्गस्य, 'बीबी का मकबरा' इति, 'पनचक्की' इत्याख्यस्य च स्थानस्य यात्रां कारयित्वा सायं पञ्चवादनवेलायां पुनस्तत्रैवायाति । भाटकं च तेन सार्धत्रयरूप्यकमात्रमेव गृह्यते । प्रशासनेन नियुक्तो निर्देशकश्चात्रापि यात्रिणां निःशुल्कसाहाय्यार्थं सहैव गच्छति ।

'बस'यानं प्रथमम् एलोरागुहामन्दिराणि निकषा तिष्ठति । यद्यपि मध्येमार्गं देवगिरिदुर्गं वर्तते, तथापि तत्र तत् परावर्तनवेलायां तिष्ठति, न गमनसमये । एलोरागुहामन्दिरेषु १२ बौद्धानाम्, ५ जैनानाम्, १७ पौराणिकानां गुहा सन्ति । बौद्धानां गुहा महायानसम्प्रदायस्य । तासामुत्कीर्णनसमयश्च ४५० तः ६४२ ई० मध्ये वर्तते । पौराणिकगुहानामुत्कीर्णनकालः सप्तमाष्टमशताब्दौ, जैनानां च ततोऽपि परवर्तीति कथयन्त्यैतहासिकाः । बौद्धगुहासु पञ्चमसंख्याका द्वादशतमसंख्याका च गुहा विशालतमे, एकादश-द्वादशतमसंख्याके गृहे च त्रिभूमिके स्तः । त्रिभूमिका गुहा अत्यल्पा एव दृश्यन्ते । पौराणिकीषु गुहासु चतुर्दशतमसंख्याका रावणगुहा किमपि वैशिष्ट्यं धत्ते बौद्धगुहाभ्यः । अत्रैकस्मिन् पार्श्वे 'एलीफेण्टा'गुहास्थितानां सर्वासामपि शिवमूर्तीनाम्, अपरस्मिंश्च पार्श्वे विष्णोर्विभिन्नानामवताराणां मूर्तय उत्कीर्णा दर्शकानां दृष्टीराश्चर्येण परिपूरयन्ति । सप्तमातृकाणामपि मूर्तयोऽत्र दृश्यन्ते । पञ्चदशतमसंख्याकायां गुहायां दशावताराणां मूर्तयः सन्ति ।

अत्रत्यं कैलासमन्दिरं स्थापत्यकलायाश्चूडान्तमुत्कर्षं प्रकटयति । तत्रत्यो ध्वजस्तम्भो द्विभूमिकः प्रासादश्च पूर्वजानामविरामशीलस्य अध्यवसायस्य, मधुरतमायाः कल्पनाशक्तेः, शिल्पनैपुण्यस्य, बुद्धिकौशलस्य च परां काष्ठां प्रमाणयतः । एकस्मादेव शिलाखण्डादुत्कीर्णं बृहत्तममेतद् गुहामन्दिरमस्मिन् भूमण्डले । शतं वर्षाणि यावदनवरतं व्यापृतेन मानवश्रमेण, शिल्पनिपुणेन आयोजनकुशलेन च मस्तिष्केण सम्पादितमेतद् भारतीयप्रतिभाया अद्भुततमं निदर्शनम् । बौद्धानां पौराणिकानां च गुहामन्दिराणां कियति दूरे वर्तन्ते जैनानां गुहाः । अत्र च इन्द्रसभागुहा जगन्नाथसभागुहा च मनोहरतमे । शिल्पनैपुण्येन सहात्र वर्तते वैशिष्ट्यं

बुद्धिकौशलस्यापि। सर्वा गुहा वर्षाजलैरसुरक्षितास्तिष्ठन्ति। अवरोधकाभावाद् वर्षाजलैरनेका गुहा विकृतीकृताः। अत्र च गिर्युत्खननवेलायामेव किमपि वैशिष्ट्यमापादितम्, येन वर्षाजलं गुहाभ्यन्तरं न पतति।

देवगिरिदुर्गस्य साम्प्रतं 'दौलताबाद' इति नाम्ना ख्यातस्य प्राचीन इतिहासो न सुष्ठु ज्ञायते। भारतीयेषु दुर्गेषु वर्तते किमपि वैशिष्ट्यमस्य। शत्रूणामेष दुर्गमो भवतीति क्रियते दुर्गसंज्ञा। अत्र च दुर्गमतासाधनानि बहून्युत्पादितानि। पर्वतस्यैकस्मिन् उन्नते शिखरे निर्मितमेतद् दुर्गं प्रथमं प्राकारेण परित आवृतं सुदृढैर्द्वारैश्च पिनद्धं वर्तते। मुख्यं द्वारं सुदीर्घतीक्ष्णलोहकीलकैराततम्। तस्य तिसृषु दिक्षु च निलीय स्थितानां सैनिकानां भुशुण्ड्यादिभिरायुधैराक्रमणार्थमद्भुता व्यवस्थाऽक्रियत। मुख्य दुर्गं च परित आयताभिः परिखाभिर्मेखलीकृतम्। तत्रत्यो मार्गो दुर्गाधिपतेरिच्छानुसारं प्रसारसंकोचशीलः। मुख्यदुर्गप्रवेशसमकालमेव तत्रत्यः प्रकाशपूर्णो मार्गः पिधीयते, अन्धतमसावृतो मार्गश्चोद्घाट्यते। एष च मार्गो लोहकण्टकाकीर्णः क्रियते शत्रोरागमनसमये तत्क्षणमेव। अस्मिन्नेव मार्गे कियति दूरे प्रकाशकिरणा दृश्यन्ते। स च मार्गो वालुकाभिराततो निम्नताभिमुखश्च। अत्रापि सैनिकानां निलीयावस्थानाय लघ्व्यो गुहा निर्मिता अन्धतमसावृता एव। यदा शत्रुस्तत्रागच्छति, तदा तत्र निलीनाः सैनिकाः पृष्ठत आगत्य शत्रुसैनिकान् निम्नताप्रवणे वालुकामये मार्गे पातयन्ति। ते च सैनिका वालुकाप्रवाहेण सहैव दुर्गं परितः खातायां परिखायां पतन्ति। दुर्गस्योपर्युपरि स्थितायां भूमिकायां च लोहमयं बृहत्तमं पिष्टपचनाकारं द्वारं स्थापितम्। तच्च शत्रुभये उपस्थिते पिधीयते, प्रज्ज्वालितैः काष्ठैश्चाच्छिद्यते। तदभितश्च वालुका विकीर्यन्ते। तप्ताभिर्वालुकाभिर्व्याप्तं लोहमयमेतद् द्वारं तप्ताङ्गारसमं केन नाम साहसिकेन शत्रुणा शक्यप्रवेशम्? अद्भुततमाऽस्य दुर्गस्य रचना। दुर्गशब्दोऽत्र नूनं स्वकीयं नामधेयमन्वर्थयति।

दुर्गस्य उपरितने पर्वतशिखरे स्थितायां गुहायां वर्तते जनार्दनस्वामिनां समाधिस्थानम्। ये हि एकनाथ-नामदेव-ज्ञानदेवादीनां गुरव आसन्। 'मुहम्मद तुगलक' इत्याख्येन तुरुष्कनृपतिना दिल्लीनगरीं विहाय अस्मिन्नेव दुर्गे स्वकीया राजधानी स्थापिता, 'दौलताबाद' इति च तस्याख्या प्रख्यापिता। महान्ति कष्टानि सोढ्वा दिल्लीनगरीया जनाः शतयोजनं मार्गं चत्वारिंशद्दिनेष्वतीत्य अत्रागताः, इतः पुनर्दिल्लीनगरीं प्रति परा-

वृत्ताश्च । अस्थिरमतिनापि तेन नृपतिना इतिहासे स्वकीयं किमपि वैशिष्ट्यं ख्यापितमेव ।

अपरस्मिन् दिने मया 'अजन्ता'स्थानं प्रति प्रस्थितम् । 'एलोरा'-गुहामन्दिराणि इतस्ततो विस्तृतानि, तत्र तदानीन्तनानां प्रमुखानां बौद्ध-हिन्दू-जैनधर्माणां मन्दिराणि सन्ति । अत्र तु सर्वा गुहा एकत्रैव धनुष आकारं बिभ्रत्यः स्थिताः, ताश्च सर्वा बौद्धानामेव । 'एलोरा'-मन्दिरेषु उत्कीर्णानां मूर्तीनां मन्दिराणामेव च दर्शनीयं शिल्पनैपुण्यम्, अत्र तु प्राचीनतमानां भित्तिचित्राणामपि लोचनानन्ददायकं वैशिष्ट्यमवलोक्यते। पाषाणभित्तीः केनचिल्लेपेनाऽऽलिप्य तत्र विविधै रागैराश्चर्यंजनकं तूलिका-नैपुण्यं प्रदर्शितं चित्रकारैः । अत्रत्यानि चित्राणि चिरप्राचीनान्यपि चिर-नूतनानि विराजन्ते । एषां चित्राणां रचनाकालः २०० ई० पूर्वतः ६५० ई० पर्यन्तं विद्यते । हीनयानगुहानां १३, १२, १०, ८ संख्याकानां निर्माणकालः क्रमशः १५० ई० पूर्वतः १०० ई० पर्यन्तम्, महायानगुहानां ११, १४, १५, १६, १७, १८, १९, २०, ६, ७, संख्याकानां निर्माणकालः ५८० ई० पर्यन्तम्, १, ५, २१, २९ संख्याकानां समयश्च ५००, ६५० ई० वर्तते । अत्र सन्ति त्रिंशद् गुहामन्दिराणि । सज्यधनुषाकरेण स्थितायां पर्वतमालायां चेमानि उत्कीर्णानि मन्दिराणि कामपि हृदयहारिणीं सुषमामावहन्ति। 'अजन्ता'गुहामन्दिराणां वर्णनं चीनदेशीयेन यात्रिणा 'हुएन-त्सांग'-नाम्ना 'फाहयान'-नाम्ना च स्वकीये यात्रावर्णने कृतमिति ज्ञातव्यम्। अत्रत्याः सर्वा गुहा न चित्रिताः, अपि तु कतिपया एव । बोधिसत्त्वस्य, यशोधराया राहुलस्य च, राजकन्यानाम्, विविधानां जातककथानां च सुन्दरतमानि चित्राण्येव नात्र मनोहारीणि, अपि तु विज्ञानयुगेऽस्मिन् निर्मीयमाणानां नानाविधानां देशीयानां विदेशीयानां च वस्त्राणां प्रान्त(बार्डर)निर्मितिरपि अजन्ताचित्रशैलीमनुकुर्वाणा तस्याः किमपि विशिष्टं गौरवं प्रख्यापयति । पवनान्दोलितानां वितानानां या नाम जललहरीसमाना स्थितिर्जायते, साऽत्र किल महनीययशसां चित्रकाराणां तूलिकया चित्रिता कामप्यपूर्वामद्भुतरसभावनामुद्भावयति भावुकानां चेतस्सु । अत्रत्यान्यनेकानि चित्राणि ध्वान्तपरीतास्वपि गुहासु वर्णमाहात्म्येन विशिष्टानि प्रकाशन्ते । साक्षात्कारं विहाय नान्यो मार्गः एषां याथार्थ्याभिज्ञानाय । ये तत्र गन्तुं न प्रभवन्ति, तैरेषां मुद्रिताः प्रतिकृतयोऽवश्यमेव द्रष्टव्याः । प्राचीनानां प्रतिकृतिपुस्तकानां दौर्लभ्य-

मालक्ष्य नूतनाः प्रतिकृतयः प्रकाशिताः 'यूनेस्को' इत्याख्यया विश्वशिक्षण-संस्थया। अजन्तागुहामन्दिराणां सविधे 'जालगांव'-स्थानकं विद्यते इत्युक्तपूर्वं मया। तेनैव पथा मया वाराणसीं प्रति प्रस्थितं यात्रान्ते।

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम्।
उज्जयिन्यां महाकालमोङ्कारे परमेश्वरम्॥
केदारं हिमवत्पृष्ठे डाकिन्यां भीमशङ्करम्।
वाराणस्यां च विश्वेशं त्र्यम्बकं गौतमीतटे॥
वैद्यनाथं चिताभूमौ नागेशं दारुकावने।
सेतुबन्धे तु रामेशं घुश्मेशं च शिवालये॥

(शिव० ४।१।२१–२३)

शिवपुराण इत्येवं प्रथमं संक्षेपेण तदनु च १४–३३ अध्यायेषु विस्तरेण द्वादशज्योतिर्लिङ्गानां नामधेयानि माहात्म्यं च वर्णितं चतुर्थ्यां कोटिरुद्र-संहितायाम्। एषु सोमनाथ-महाकाल-केदारनाथ-विश्वेश्वर-त्र्यम्बकेश्वर-वैद्यनाथ-रामेश्वरज्योतिर्लिङ्गानि तेषां स्थानानि च प्रसिद्धतराणि। मल्लिकार्जुनस्य दक्षिणभारते कृष्णामण्डलान्तर्गतश्रीशैलपर्वते, भीमशङ्करस्य मुम्बापुरीसमीपस्थभीमानदीतटे, नागेशस्य द्वारिकानगरीसमीपे, ओङ्कारनाथस्य खण्डवा-समीपे नर्मदातटे स्थितिर्ज्ञेया। द्वादशस्य घुश्मेशस्य ज्योतिर्लिङ्गस्य च स्थितिः 'एलोरा'-गुहामन्दिरेभ्यो नातिदूरं तत्रैव वर्तते। द्वादशज्योतिर्लिङ्गानां विस्तृतपरिचयार्थं पाठकैः 'कल्याण'-मासिकपत्रस्य शिवाङ्कस्य ५४७–५६१ पृष्ठेषु मुद्रितः 'द्वादश ज्योतिर्लिङ्ग' इति शीर्षको निबन्धो द्रष्टव्यः।

नासिकपुण्यक्षेत्रस्य त्र्यम्बकेश्वरज्योतिर्लिङ्गस्य च दर्शनार्थं मया पुण्यपत्तनतो बस-यानेन नासिकक्षेत्रं प्रति प्रास्थायीति पूर्वमुक्तम्। तत्र पवित्रतमासु सप्तनदीष्वेकतमाया गोदावर्या दक्षिणे तटे पञ्चवटीविभागे स्थिते घटीयन्त्रचिह्निते मठे स्थितं मया। तत्रत्या अधिपतयो महन्त-श्रीदीनबन्धुदासमहाराजाः चतुःसम्प्रदायसद्धर्मसंस्थापनाचार्यास्तदा तत्र नासन्, तथापि तत्रत्यैरधिकारिभिः सेवकैश्च निवासादीनां साधु व्यवस्थाऽक्रियत। नासिकक्षेत्रतः त्र्यम्बकेश्वरज्योतिर्लिङ्गस्थानं योजनद्वय-परिमिते पूरे वर्तते। तत्र 'बस'-यानद्वारा 'कार'-यानद्वारा वा गम्यते। गोदावरीप्रादुर्भावस्थलस्य ब्रह्मगिरेरुपत्यकायां वर्तत एतत् स्थानम्। पवित्रतमैर्गोदावरीजलैः पूरिते कुण्डे स्नात्वा गम्यते ज्योतिर्लिङ्ग-

दर्शनार्थम्। ततः प्रस्थीयते सोपानपथा गोदावर्यवतरणगुहाया दर्शनार्थम्, यत्र पर्वतशिखरेषु निलीनाया गोदावर्याः प्रथमः प्रादुर्भावो भवति। अत्रैव वर्तते अहल्योद्धारस्थल्याः, तत्स्थापितानामष्टोत्तरशत-शिवलिङ्गानाम्, नाथपादुकायाः, नवनाथानां तपश्शिलायाश्च स्थितिः।

औरंगाबाद-स्थानकत एलोरा-मन्दिराणां यात्रार्थं यद् बस-यानं प्रचलति। तद् गुहामन्दिराणि दर्शयित्वा मध्याह्ने घुश्मेश्वरमन्दिरतलेषु सार्धहोरापर्यन्तं विश्राम्यति। अत्र ज्योतिर्लिङ्गस्य दर्शनं विधाय यात्रिणो भोजनादिकं कुर्वन्ति। नास्त्यत्र पक्वस्यापक्वस्य वा भोजनद्रव्यस्य सौलभ्यम्। अतो यात्रिभिर्भोजनसामग्री औरंगाबादनगरत एवार्जयितव्या। विश्वेश्वरस्य नगर्यां वाराणस्यां वयं निवसामः। एकस्यां यात्रायां महाकालौङ्कारनाथयोः, अपरस्यां रामेश्वरस्य, अस्यां च त्र्यम्बकेश्वर-घुश्मेश्वरयोः पावनं दर्शनं जातम्। शिष्टानां ज्योतिर्लिङ्गानामपि दर्शनं विश्वेशकृपाकटाक्षेण संजायेतेति आशंसमानेन मया विरम्यते ॥

---

## मदीया द्वितीया अध्ययनयात्रा

'सारस्वत्याः सुषमायाः' तदात्वे वाराणसेयसंस्कृतमहाविद्यालयमुख-पत्रिकायाः सप्तमवर्षस्य प्रथमेऽङ्केऽस्माभिः 'पथिकजनपातकचिन्तनस्मृति'-नामा लघुग्रन्थो महेश्वरभट्टकृतिः सम्पाद्य प्रकाशितः। तत एव प्ररूढा यात्रावाञ्छालता समये समये पुष्पिता फलिता च। यात्रावसरे पापपुञ्जो घनीभूय प्रकटितो भवतीत्याशयको वारं वारं प्रायः प्रतिश्लोकान्तं संयोजितः 'पातकं किमतः परम्' इति तस्य वचस्त्वनर्थकमेव साम्प्रतिके सर्वविधयात्रासौविध्यसम्पन्ने काल इति प्रतिभायान्नः। किन्त्वस्यां यात्रायां तत्र सत्यांशः कोऽपि विद्यत एवेत्यनुभूतम्।

न केवलमियमासीद् अध्ययनयात्रा, धार्मिकी सांस्कृतिकी चेयं यात्रा अध्ययनयात्राभूमिष्ठेति वक्तुमिच्छामो वयम्। अस्या आरम्भो धार्मिक्या यात्रयैव सञ्जातः। प्रथमेऽध्ययनयात्राविवरणे 'सूर्योदय' पत्र एव प्रकाशिते द्वादशसु ज्योतिर्लिङ्गेषु षण्णां यात्रा समपाद्यत तावदस्माभिरित्युक्तम्। एषाऽध्ययनयात्रा कलिकाता-तिरुपति-मद्रपुरी-तञ्जापुरी-त्रिवेन्द्रम्-महीसूरस्थितानां पुस्तकालयानामनुसन्धानकेन्द्राणां च निश्चिताऽऽसीत्। मध्येमार्गं वर्तमानानि धार्मिकाणि सांस्कृतिकानि च स्थलान्यवश्यं यथावसरं द्रष्टव्यानीत्यभिलाषो भगवदिच्छया कियताऽप्यंशेनास्यां यात्रायामपि फलित एव।

कलिकातामार्गे वैद्यनाथधामकृतवसतेः ज्योतिर्लिङ्गेष्वेकतमस्य वैद्यनाथभगवतो दर्शनेच्छया मईमासस्य द्वाविंश्यां तारिकायां रात्रौ अष्टवादनवेलायां वाराणस्या 'वाराणसी-हावडा एक्सप्रेस' इत्याख्येन लौहयानेन प्रस्थाय द्वितीये दिवसे प्रातः सार्धसप्तवादनवेलायां जसीडीह-स्थानकमधिगतम्। इतो वैद्यनाथधाम देवघरनगरकं वा नातिदूरमवस्थितं लौहयानेन तैलयानेन वा पञ्चविंशतिपणकमात्रभाटकव्ययेन अधिगम्यते। सन्ति बह्व्यः श्रेष्ठिभिर्धार्मिकैर्निर्मिता धर्मशालास्तत्र। उत्तर-भारते प्रसिद्धं वैद्यनाथज्योतिर्लिङ्गमत्रैव विराजते। दक्षिणभारतीयास्तु नैतदङ्गीकुर्वते। ते हि हैदराबादनगरं निकषा स्थितं परलीवैद्यनाथ-स्थानकं वैद्यनाथज्योतिर्लिङ्गवसतिरिति प्रत्यभिजानन्ति। "परल्यां

वैद्यनाथं च" इति विद्वद्गोष्ठीषु प्रथितं वचोऽपि तदनुप्राणकमेव प्रतिभाति। शिवपुराणे तु "वैद्यनाथं चिताभूमौ" (४।१।२३) इति पाठो दृश्यते। अत्र चिताभूमिपदेन वैद्यनाथधाम्नो ग्रहणं भवति न वेत्यवधातव्यं धर्मगुरुभिर्विद्वद्भिश्च। एवमेव "नागेशं दारुकावने" इति नागेशाख्यज्योतिर्लिङ्गवसतिविषयकोऽपि विवादस्तावज्जागर्तितराम्। केचन दारुकावनं द्वारावतीं निकषाऽङ्गीकुर्वन्ति, अपरे च परलीवैजनाथसमीप एव तदामनन्ति। प्रथितानां द्वादशज्योतिर्लिङ्गानां वसतिविषयके विशये जागरूके सत्येकपञ्चाशत्संख्याकानामितो न्यूनानामधिकानां वा शक्तिपीठानां स्थाननिर्णयो दुश्शक एव प्रतिभाति नः।

वैद्यनाथधामस्थितायामेकस्यां धर्मशालायां विश्रम्य स्नानादिकं नित्यकृत्यं सम्पाद्य, ज्योतिर्लिङ्गदर्शनार्चनादिकं च विधाय, प्रसादादिकं च गृहीत्वा पुनः 'जसीडीह'-स्थानकमागत्य तत्र 'तूफान एक्सप्रेस'-यानेन मध्याह्ने द्वादशवादनवेलायां कलिकातानगरीं प्रति प्रास्थायि, सायं सप्तवादनवेलायां चाधिगता सा नगरी। मध्येमार्गं गगने नानावर्णमयं धूमपुञ्जं लौहनिर्माणशालाकुप्येभ्यो विसृजल्लोहनगरं दुर्गापुरम्, वर्दवान-विश्वविद्यालयस्थलं वर्दवाननगरं च साम्प्रतिकयोः उद्योग-शिक्षा-क्षेत्रयोः प्रातिनिध्यमिव कुर्वाणे समवालोक्येताम्। हावड़ास्थानकेऽवरुह्य लौहयानात् कलिकातामहानगरीप्रवेशाय वर्तते 'हावड़ा-ब्रिज' इत्याख्यः सेतुर्भगवत्या भागीरथ्या एकस्याः शाखाया हुबलीनामधेयाया उत्तरणाय। साम्प्रतिकनद्युत्तारकसेतुषु विराजते किमपि वैशिष्ट्यमस्य। प्रायः सर्वे सेतव ईदृशा नदीमध्यनिखातेषु स्तम्भेषु स्थापिता भवन्ति। अस्य च सेतोरवस्थितिः नदीतटयोरारोपितयोः विशालयोराधारयोः साहाय्येन वर्तते, न नदीमध्ये वर्तते कोऽप्याधारस्तम्भोऽपरः। आयामभूमावपि साम्प्रतं भारते वर्षे वर्तमानान् सर्वान् सेतूनतिशाययत्येषः।

कलिकातानगर्यां तिष्ठता मया 'एशियाटिक सोसाइटी'-संस्थायाः, संस्कृतमहाविद्यालयस्य, कलिकाताविश्वविद्यालयस्य च पुस्तकालयेषु तन्त्रशास्त्रविषयका नैकशो हस्तलेखा दृष्टाः। कलिकाताविश्वविद्यालयेऽपि संस्कृतविभागीयो वर्तते हस्तलेखानां संग्रहोऽनुसन्धानविभागान्तर्गतः। कलिकातानगर्यामेव वर्तते राष्ट्रियः पुस्तकालयः, यत्र भारते राष्ट्रे प्रकाशितानां सर्वेषां ग्रन्थानां प्रेषणं राजाज्ञयाऽनिवार्यतया उद्घोषितम्। डॉ० प्रबोधचन्द्रबागचीसंपादितो दोहाकोशः, प्रो० तुच्चीप्रकाशितः 'इण्डो-

तिबेटिका' इत्याख्यो ग्रन्थश्च वाराणस्यां नोपलब्धः। तदवलोकनार्थं दिनद्वयं मया तत्रापि गतं ग्रन्थद्वयमेतदधीतं च।

सन्त्यस्यां महानगर्यां भूयांसि स्थलानि दर्शनार्हाणि। ग्रन्थावलोकने व्यापृतेन मया न तानि सर्वाणि द्रष्टुमशक्यन्त। तथापि मित्रप्रवराणां बन्धूनां च श्रीमताममरनाथद्विवेदमहोदयानां साहाय्येन प्रत्यहमवकाशवेलायां रविवासरे च प्रथिततमानि कानिचन स्थलानि समवलोकितानि। तानि च 'विक्टोरिया मेमोरियल'(स्मारक)-'कलकत्ता म्यूजियम' (संग्रहालय)-'वोटेनिकल गार्डन' (वनस्पत्युद्यान)-'वेलूरमठ'-'ज्युओलोजिकल गार्डन'-(पशुपक्ष्युद्यान)-'पार्श्वनाथजैनमन्दिराणि'। एशियाटिकसोसाइटी-पुस्तकालयस्य संस्कृतमहाविद्यालयपुस्तकालयस्य च कार्यसमयो मध्याह्ने द्वादशवादनतः सायं षड्वादनं यावदासीत्। अनेनापि प्रातःकालिके नगरभ्रमणे किमपि सौविध्यमासादितम्। कलिकातानगराधिष्ठातृदेवताया भगवत्याः काल्या दर्शनसमय एव ततो नातिदूरं निवसतां श्रीमतां चिन्ताहरणचक्रवर्तिमहोदयानां तन्त्रशास्त्रे कृतभूरिपरिश्रमाणां दर्शनसौभाग्यमप्यधिगतम्। न्यायवैशेषिकबौद्धादिदर्शनानां पारदृश्वानः श्रीमदनन्तलालठक्कुरमहोदया अपि तत्रैव सङ्गता इत्यासीत् शुभ एष क्षणो यात्रायाः।

अभिनवगुप्तप्रभृतिभिः प्राचीनैरागमाचार्यैः स्मृतानां ग्रन्थानां परिचय एवास्या यात्राया मुख्यं प्रयोजनमासीत्। तत्र एशियाटिक-सोसाइटी-पुस्तकालये कुब्जिकामतस्य प्राचीनतमा मातृका गुप्तलिपिलिखिताऽस्माभिरवलोकिता। अन्येऽपि केचन मतसंप्रदायीया मतोत्तरप्रभृतयः प्राचीना ग्रन्थास्तत्र विद्यन्ते। कुब्जिकामतमेतद् विश्वभारतीविश्वविद्यालयेन प्रकाशयितुमुपक्रान्तमिति तत्रैव श्रुतमस्माभिः। मद्रपुर्यां च मद्रपुरीविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्यः 'न्यू कैटलागस् कैटलागरम्' इत्याख्यायाः संस्कृतहस्तलेखानां बृहत्सूच्याः संपादकेभ्यो डॉक्टर श्री वी० राघवमहोदयेभ्यः श्रुतं यत् कुब्जिकामतमेतद् बौद्धकृतिना धर्मकीर्तिना स्वकीये 'वादन्याये' समुद्धृतमिति। शाक्तागमेषु प्राचीनतमोऽयं ग्रन्थः शीघ्रमेव प्रकाशितो भवेदित्याशास्महे वयम्।

कलिकातातस्तिरुपतिक्षेत्रं प्रस्थितैरस्माभिः मध्येमार्गमापतताम् उत्कलराज्यवर्तिनां भुवनेश्वर-जगन्नाथपुरी-कोणार्कसदृशानां धार्मिकाणा-

मैतिहासिकानां सांस्कृतिकानां च स्थलानां दर्शनलोभो नैव रोद्धुमपारि। मद्रपुरीं प्रति प्रस्थितं यानं भुवनेश्वर एव परित्यक्तमस्माभिः। पूर्वं प्राचीने भुवनेश्वरनगरे वर्तमानानि लिङ्गराजप्रभृतीनि मन्दिराणि, तदनु च भुवनेश्वरतो नातिदूरं वर्तमानानि उदयगिरि-खण्डगिरिवर्तीनि गुहामन्दिराणि दृष्टानि। अत्रैव उत्कलनृपतेः खारवेलस्य प्रथितः शिलालेखो गुहाद्वारस्य उपरितने भागे उत्कीर्णोऽवालोकि। भुवनेश्वरनगरमधितिष्ठत्सु परःशतेषु शैवमन्दिरेषु लिङ्गराज-राजाराणी-मुक्तेश्वर-परशुरामेश्वरमन्दिराणि मध्यकालिकाया भारतीय-स्थापत्यकलाया निदर्शनभूतानीति वक्तुं शक्यते। एतानि मन्दिराणि सप्तमशताब्दीतो द्वादशशताब्दीपर्यन्तं निर्मितानि।

भारतराष्ट्रस्य एकत्वबोधकानि सन्ति 'चारधाम-सप्तपुरी' इति नामभ्यां प्रसिद्धानि मुख्यानि तीर्थानि। धामसु जगन्नाथपुर्याः किमपि वैशिष्ट्यं विराजते। प्रतिवर्षमत्र प्रवर्तमाने रथयात्रामहोत्सवे भारतराष्ट्रस्यैक्यं सर्वैरवलोक्यते। भगवताऽऽद्येन शङ्कराचार्येण स्थापितेषु पीठेषु गोवर्धनाख्यं पीठमत्रैव स्थापितम्। साम्प्रतमत्र स्वनामधन्याः श्रीमन्तो निरञ्जनदेव-तीर्थपादाः शङ्कराचार्यपदमलङ्कुर्वन्तीति ते गोरक्षायै समर्पितायुषः परिचिता भारतराष्ट्रस्य। गोवर्धनमठस्य मुख्ये द्वारे स्थापिता गोप्रतिमा प्रेरणादात्री आसीत् गोरक्षायै कृतस्य तेषामनशनव्रतस्येति वयं संभावयामः। जगन्नाथपुर्यामस्माभिर्दिनद्वयं यावदत्रैव स्थितम्, यद्यपि शङ्कराचार्यपादास्तदा तत्र नासन्। पूर्वोदधिपरिसर एव मठोऽयमवस्थितः। भगवतो जगन्नाथस्य मन्दिरं चापि नातिदूरं विराजते। अत्रैव स्थित्वा भगवतो जगन्नाथस्य दर्शनमुदधिस्नानं चास्माभिः सम्पादितम्। स्नान-वेलायां यादृशो हि समुद्रलहरीणामानन्दोऽत्रानुभूतः, नैतादृशः कन्याकुमारी-परिसरे गोकर्णतीर्थे वेत्यनुभव एवात्र प्रमाणम्।

कोणार्कस्थितं सूर्यमन्दिरं न केवलमुत्कलप्रदेशस्य, अपि तु संपूर्णस्यापि भारतराष्ट्रस्य स्थापत्यकलाया विशेषतो मन्दिरनिर्माणवैशिष्ट्यस्य उत्कृष्टतमेषु स्थलेष्वेकम्। निर्मितिरेषा ईशवीयायास्त्रयोदशतमशताब्द्याः। भारतीयस्थापत्यकलायाश्चूडान्त उत्कर्षोऽत्र घनीभूत इव राजते। भारतीयस्थापत्यकलाया एषाऽन्तिमा कृतिरिति वक्तुं शक्यते। १२०० संख्याकैः स्थपतिभिरनारतं द्वादशवर्षाणि यावदुपास्य कलादेवीं तस्याः सर्वाङ्गसुन्दरेयं प्रतिभाऽऽखचिता। भारते राष्ट्रेऽल्पीयांस्येव सूर्यमन्दि-

राण्यवशिष्टानि साम्प्रतम् । कदाचन भारते गणपति-सूर्यप्रभृतीनां देवतानां तान्त्रिकी पूजापद्धतिः प्रचलिताऽऽसीत् । तदा सूर्यो भगवान् प्रातःकाले कोणार्कप्रदेशे, मध्याह्ने कालपीनगरं निकषा, सायाह्ने च साम्प्रतं पश्चिम-पाकिस्तानस्थिते 'मुलतान'नगरेऽर्च्यते स्म । अहो कालविपर्ययः ! साम्प्रतं शिवपञ्चायतनादिषु यथाकथञ्चिदुपास्यते स भगवान् । कोणार्कमन्दिरस्य स्थापत्यकलायां मन्दिरान्तरापेक्षया कापि विशिष्टा कल्पना विलसति-तराम् । एतद्धि मन्दिरं भगवतो रवेः रथाकारेण निर्मितम् । सप्ताश्वा रथमिमं परिकर्षन्ति । वर्तते च रथस्योभयोः पार्श्वयोर्द्वादश चक्राणि वर्षस्य पक्ष-माससूचकानि । प्रतिचक्रमष्टौ अरा दिवसस्याष्टानां प्रहराणां सूचकाः । रथाकारेण स्थितमेतत् सम्पूर्णं मन्दिरमापादमस्तकं विविधाभिः देव-नर-किन्नर-यक्ष-यक्षिणी-पशु-पक्षिप्रभृतीनां प्रतिकृतिभिस्तथैवाति-सौष्ठवेन उत्कीर्णाभिरलङ्कृतमतिरमणीयं भव्यं च स्वविशालतया सुरप्रासादानतिशाययद् दृष्ट्वा सहसा मतिश्चकितचकितेव विभ्रमभरिता प्रशंसति तान् शिल्पिनः, येषां द्वादशवार्षिक्या तपस्यया व्यक्ततामाप तत्सौन्दर्यनिधानम् । नमस्तेभ्यो विश्वकर्मपरम्परामुकुटमणिभ्यः शिल्पिभ्यः । साम्प्रतमेषा शिल्पिपरम्परा भारतवर्षे लुप्यत इति मनसि दोदूयमानेऽपि कस्तस्याः परम्पराया विकासाय चेष्टते ।

उत्कलप्रदेशीयेषु सर्वेष्वेवानुपदं चर्चितेषु मन्दिरेषु कामकलायाः प्रतीकभूताः काश्चन प्रतिकृतय उत्कीर्णा दरीदृश्यन्ते, यथा हि दृश्यन्ते उत्तरभारतस्थेषु खजुराहोमन्दिरेषु, यथा वा वाराणस्यां ललिताघट्टं निकषा स्थिते नेपालकलाप्रतीकभूते मन्दिरे । बौद्धानां शैवानां शाक्तानां च तदा प्रचलितानां तन्त्राणामेष प्रभाव इत्यैतिहासिका जल्पन्ति । जराजर्जरशरीराणां नराणां नारीणां चापि प्रतिमा बाहुल्येन दृश्यन्ते खजुराहोमन्दिरेषु तत्रत्ये संग्रहालये च । परिणामतस्तासां वैराग्योत्पादनाय विनियोगमाहुः साम्प्रदायिकाः ।

यात्रिणां सौविध्यार्थं पुर्यां जगन्नाथस्य भगवतो मन्दिरस्य समीपत एव प्रत्यहं साक्षिगोपाल-भुवनेश्वर-कोणार्क-प्रभृतिस्थानेषु मृत्तर( बस )यानं प्रचलति । तेनैकस्मिन्नेव दिने सर्वेषामेवैषां स्थानानां यात्रा सम्पद्यते ।

पुरीतो दक्षिणभारतस्य यात्रायै पुरीस्थानकगमनाय यावद् वयं समुद्युञ्जेमहि, तावदेवास्माकं मीमांसादर्शनगुरवः सुगृहीतनामधेया मीमांसाशास्त्रपारदृश्वानः श्रीमन्तः पट्टाभिरामशास्त्रिणस्तत्रैव शाङ्करे मठे

समागताः। दक्षिणभारते प्रायः सर्वेष्वेव नगरेषु शाङ्करमठाः सन्तीति तत्र यात्राविरामे किमपि सौकर्यं स्यादिति तेषामुपदेशमङ्गीकृतवद्भिरस्माभिर् आन्ध्रप्रदेशस्य बेजवाड़ानगरे तत्रत्ये शाङ्करमठ एव रात्रावुषितम्। तदाऽस्माकमाकृत्या पूर्वपरिचिता वाराणस्यां स्थिते शृङ्गेरीमठे कृतनिवासाः स्वामिनस्तत्रैवासन्। ब्रह्मवेलायामेभिः सह पावनायां कृष्णायां नद्यां स्नातम्। इतो नातिदूरमेव दर्शनीयमासीत् 'कृष्णा बराज' नामकं नूतनं तीर्थम्, यतः सस्यसमृद्धयर्थं क्षेत्राणां पिपासाशान्तये कृषकाणां हर्षवर्धनाः कुल्याः शतशाखं प्रसृता अभूवन् आन्ध्रप्रदेशे। इतः परं शाङ्करमठं निकषाऽवस्थिते मन्दिरे कनकदुर्गादेव्या दर्शनलाभोऽर्जितः। शाङ्करे मठे वेदाध्यापकाः श्रीमन्तः सेतुमाधवशर्माणः सुतनिर्विशेषं शिष्यानत्र पालयन्ति वेदमध्यापयन्ति च।

पुरी-बेजवाड़ामध्येमार्गं बुक्कनृपतेः सायणमन्त्रिणो राज्यस्य राजधानी विजयनगरम्, जलपोतनिर्माणस्थलं विशाखापत्तनम्, आन्ध्रविश्वविद्यालयस्थलं वाल्टेयरनगरम्, सिंहाचलं नाम वैष्णवानां दिव्यदेशः, आन्ध्रेतिहासशोधसंस्थानस्थली राजमहेन्द्री च समापतन्ति। सिंहाचलतीर्थं विशाखापत्तनतो वाल्टेयरस्थानकतश्च नातिदूरं विराजते। अत्र हि भगवान् नरसिंहः पर्वतशिखरे राजमानः समर्च्यते सश्रद्धं भावुकैर्भक्तैः। सर्वाणीमानि स्थलानि साम्प्रतमान्ध्रराज्यान्तर्गतानि सन्ति।

बेजवाड़ातो श्रीमल्लिकार्जुनस्य भगवतो दर्शनाय श्रीशैलं प्रति गमनार्थं प्रातरेवास्माभिः 'गुण्टूर'नगरं प्रति प्रस्थितं मृत्तैलयानेन। गुण्टूरनगरतः प्रातर्नववादनवेलायां रात्रौ चापि नववादनवेलायामेव श्रीशैलं प्रति मृत्तैलयानं प्रचलति। एतच्च पूर्वं नैव परिज्ञातमासीदस्माकम्। अस्माभिर्गुण्टूरनगरं दशवादनवेलायामधिगतम्। रात्रौ नववादन यावत् किं कर्तव्यमिति विचारपरा वयं समीप एव स्थितस्य अमरावतीस्तूपस्याऽवलोकननिश्चयमकुर्म। पूर्वं 'धान्यकटक'नाम्ना प्रसिद्धायामस्याम् अमरावत्यां सुन्दरतमो बौद्धस्तूप आसीन्निर्मितः। तत्स्थलमद्यापि विलोकयितुं शक्यते, यत्र हि स्तूप एषोऽवस्थित आसीत्। मृत्तिकानिचयमात्रं तत्रावलोक्यते साम्प्रतम्। कीदृश आसीदत्रत्यस्य स्तूपस्याऽऽकारः, कथं च स प्रस्तरेषु उत्कीर्णया मूर्तिकलया स्थापत्यकलया चालङ्कृत आसीदिति सर्वमेतदत्रैव संग्रहालये स्थापितेषु भग्नावशेषेषु साधु द्रष्टुं शक्यते। तत्रत्या स्थापत्यकला विशेषतो मूर्तिकला 'नागार्जुन-कोण्डा'-स्थिता च कला प्रायः

समानजातीयैव भूरि-भूरि प्रशंसिता कलामर्मज्ञैः। बौद्धसंस्कृतेः प्रसिद्धं 'नागार्जुनकोण्डा'-नामकं स्थलं प्रसिद्धस्याचार्यस्य नागार्जुनस्य तपस्यया पूतं साम्प्रतं कृष्णाया नद्याः परिसरेषु निर्मितस्य नागार्जुनसागरस्य उदरे विलीनम्। अत्रत्याः सर्वे कलावशेषाः संग्रहालये संरक्षिताः। समयसङ्कोचात् तत्रास्माभिर्गन्तुं नापारि। अमरावत्यां कृष्णाया नद्या दक्षिणे तटे अमरेशस्य भगवतो मन्दिरं राजते। अत्र हि शिवरात्रिपर्वणि महानुत्सवो जनसंमर्दश्च भवति। नागार्जुनकोण्डा-अमरावतीपरिसरेषु कदाचन बौद्धधर्मस्य, संस्कृतेः, कलायाश्च महान् प्रचार आसीदिति स्थलानामेषां यात्रया स्फुटं परिज्ञायते। अमरावती पुरा सातवाहनवंश्यानां नृपतीनां राजधानी आसीत्। अत्रैव कश्चन प्राचीनो विश्वविद्यालयश्चासीत्। साम्प्रतं स्थलमेतदुपेक्षितमिव दृश्यते।

अमरावतीतः पुनरेव गुण्टूरनगरं परावृत्य रात्रौ नववादनवेलायां मृत्तैलयानमारुह्य प्रातश्चतुर्वादनवेलायां श्रीशैलमधिगतम्। रात्रावपि मृत्तैलयानानि प्रचलन्तीति वैशिष्ट्यमेतद् अवलोकितमान्ध्रप्रदेशस्य। अत्रापि मल्लिकार्जुनस्य भगवतो मन्दिरं निकषाऽवस्थिते शाङ्करे मठ एव स्थितमस्माभिः। अत्रत्या व्यवस्थापकाः श्रीमन्तो वेङ्कटेश्वर-अय्यंरमहाभागा अतीव सरलस्वभावा अतिथिसत्कारप्रवणाश्चावलोकिताः। आवश्यककृत्यानि निर्वर्त्य पातालगङ्गायां स्नातम्। इतः सार्धैकक्रोशदूरं प्रायः सहस्रपरिमितानि सोपानान्यवरुह्यासाद्यते पातालगङ्गेति नाम्ना प्रसिद्धं तीर्थम्। अत्रापि प्रवहति दक्षिणभारतस्य पवित्रतमा कृष्णा नाम नदी पर्वतोदरेषु, अत एव पातालगङ्गेति नाम्ना परिचीयते। कृष्णायाः पावने स्वच्छे च जले स्नात्वा जलं च गृहीत्वा द्वादशज्योतिर्लिङ्गेषु द्वितीयस्य मल्लिकार्जुनस्य भगवतो दर्शनार्थं तन्मन्दिरं समासादि। जनसंमर्दो मा भूदिति मनीषया एकान्तदर्शनार्थं निश्चितं सपादैकरूप्यकमितं शुल्कमर्पयित्वा देवाराधनार्थं गर्भमन्दिरं प्रावेशि, कृतार्थीकृते च चर्मचक्षुषी इमे।

आन्ध्रप्रदेशे विशेषतो विजयवाड़ा-तिरुपति-प्रभृतिषु स्थानेषु ग्रीष्मर्तौ भगवान् सूर्यस्तथैव तपति, यथा हि उत्तरे भारते। यात्रामार्गे सर्वत्रैव पञ्चपणकमात्रव्ययेन 'सोडा वाटर'-सीसककुतुपाः ( बोतल ) लभ्यन्ते। अनेन जलाभावः क्वापि नैवानुभूयते। भोजनानन्तरमुच्छिष्टहस्तमुखादिप्रक्षालनमप्यनेनैव कुर्वन्तो जना दृश्येरंस्तत्र तत्र। आन्ध्रप्रदेशस्य पार्वतेषु

स्थलेषु प्रायो मृत्तैलयानान्येव बाहुल्येन प्रचलन्ति। श्रीशैलतस्तिरुपतितीर्थं प्रति यानमेकमेव प्रवर्तते प्रातश्चतुर्वादनवेलायाम्। तच्च द्वितीये दिने एवाधिगन्तुं शक्यत इति कालविलम्बमसहमानैरस्माभिर्भोजनादिकं विधाय मृत्तैलयानमारुह्य नन्द्यालस्थानकं प्रति प्रस्थितम्, अधिगतं च तत् सायं पञ्चवादनवेलायाम्। किन्तु 'पातकं किमतः परम्' इति महेश्वरभट्टवचः प्रमाणयन्निव रात्रौ द्वादशवादनं यावदस्माभिर्नैव लौहयानं नापि च मृत्तैलयानं किमप्यधिगतम्। हैदराबाद-नगरतः प्रस्थाय तिरुपतितीर्थं प्रति प्रवर्तमानान्यनेकानि मृत्तैलयानानि तत्रागतानि, नैकस्मिन्नपि रिक्तमासीत् स्थानम्। शीघ्रमेव तिरुपतिगामि यानमुपलभ्येतेति धिया नैवावलोकितमितो नातिदूरं वर्तमानं महानन्दितीर्थमपि, यत्र हि गोमुखतोऽहर्निशं स्फटिकनिर्मलं जलं प्रवहति, पुरुषदघ्ने च तत्रत्ये जले पतितं सूचीसदृशं सूक्ष्ममपि वस्तु स्पष्टमवलोक्यते। अन्ततो रात्रौ द्वादशवादनवेलायां नन्द्यालस्थानकत एव तिरुपतिनगरं प्रति प्रस्थीयमाने मृत्तैलयाने कथं कथमपि स्थानमधिगत्य प्रातः सप्तवादनवेलायां वेङ्कटेशभगवतो नगरी समासादिता। तिरुपतितीर्थमागत्य रात्रिद्वयं यावन्मृत्तैलयानयात्रायां निद्राया अलाभाद् जागरणेन क्लान्तेऽपि शरीरे मनः प्रसादपूर्णमासीत्।

इयमासीदस्माकं तिरुपतितीर्थस्य द्वितीया यात्रा। प्रथमा यात्रा १९५५ तमे ईशवीये वर्षे संस्कृतविश्वपरिषदश्चतुर्थाधिवेशनावसरे संपन्ना, यस्या हि विवरणं 'सारस्वती सुषमा'-पत्रिकाया दशमवर्षीयाङ्के २११-२२४ तमपृष्ठेषु प्रकाशितमत्रापि वर्तते। पूर्वपरिचितायां देवस्थानधर्मशालायां विश्रम्य स्नानादिकं नित्यकृत्यं च विधाय केन्द्रीयसंस्कृतविद्यापीठभवनं प्रति प्रास्थायि। अत्र ग्रन्थाध्यक्षपदे पूर्वपरिचितो वाराणसेयसंस्कृतविश्वविद्यालयस्थ-सरस्वतीभवनपुस्तकालये कृतसेवः सुहृत् श्रीमान् डॉ० सत्यनारायणशास्त्रिमहोदयो विराजते। विद्यापीठस्य सञ्चालका डा० वी० आर० शर्माणस्तदा तत्र नासन्। डॉ० सत्यनारायणशास्त्रिणः कार्यालयस्य च सहयोगेन समीपस्थे तत्रत्ये छात्रावासे ग्रीष्मावकाशतया सावकाशे निवासादीनां समजायत शोभना व्यवस्था। छात्रावासप्रतिपालका बिहारराज्यवास्तव्या डॉ० राघवप्रसादचौधरीमहोदयाः सारल्यमूर्तयोऽतिथिसत्कारप्रवणास्तत्र सर्वविधसौविध्यप्रदानादिना अहरन् मनोऽस्मदीयम्। संस्कृतवाङ्मयसेवानिरतासु संस्थासु नवीनतम एष केन्द्रीयसंस्कृत-

विद्यापीठः साम्प्रतं वैष्णवानामागमानां कोशनिर्माणकार्ये व्यापृतो वर्तते। पञ्चषेष्वेव वर्षेष्वत्र वैष्णवागमानां विशेषतः पाञ्चरात्रागमस्य शताधिकानां संहितानां मातृकाः संगृहीताः। पाञ्चरात्रागमसंग्रहदृष्ट्या सर्वान् पुस्तकालयानतिशेते एष विद्यापीठपुस्तकालय इति निःसङ्कोचं वयं वच्मः। अत्रास्माभिः कोशनिर्माणकार्ये व्यापृताः श्रीमन्त एम० डी० बालसुब्रह्मण्यशास्त्रि-वी० स्वामीनाथन्-आसुरिश्रीनिवास-आयङ्गारप्रभृतयो विद्वांसो दृष्टाः, तैः सह सुहृत्संबन्धश्च स्थापितः। अनिरुद्धसंहितादि-पाञ्चरात्रसंहिताग्रन्थानां संपादका आसुरि-श्रीनिवासआयङ्गारमहोदयाः पाञ्चरात्रागमस्य मर्मज्ञा विद्वांसः। अधुनावधि ३५० संख्यापरिमितानां पाञ्चरात्रसंहिताग्रन्थानां नामान्येभिः सगृहीतानि। एतेषां सहयोगेन मद्रपुरीतो रोमन-तमिललिपिमयो ग्रन्थ एकः प्रकाशितः 'पेनोरमा आफ पाञ्चरात्र लिटरेचर' इत्याख्यः, यत्र बह्वीनां पाञ्चरात्रसंहितानां परिचयो वर्तते। सत्वरमेभिरपि कश्चन ग्रन्थः प्रकाशयिष्यते, यत्र विस्तरेण पाञ्चरात्रसंहितानां परिचयो भविष्यति। सव्याख्या ईश्वरसंहिता नारद-संहिता च तत्र द्वाभ्यां विद्वद्भ्यां संपाद्येते। आशास्यते शीघ्रमेवानयोः प्रकाशनं भविष्यति। अत्र दिनत्रयं यावदस्माभिर्ग्रन्थावलोकनादिकमाचरितम्।

प्रातः सप्तवादनतो मध्याह्ने द्वादशवादनपर्यन्तमासीद् विद्यापीठस्य कार्यसमयः। प्रथमे दिने मध्याह्नोत्तरं पूर्वमस्माभिः डॉ० सत्यनारायणशास्त्रिणां गृहे गतम्, तदनु च तैः सह वाराणस्यामेव गृहीतविद्यानां बिहारवास्तव्यानां श्रीहरिहरझाशर्मणाम्। एतेऽपि विद्यापीठ एव व्याख्यातृपदमलङ्कुर्वन्ति। रात्रौ गोविन्दराजभगवतो दर्शनं विधाय तत्रैव निवसतां वेङ्कटेश्वरशोधसंस्थानसंरक्षकाणां क्यूटर-पदभाजां श्रीमताम् एन० सुब्रह्मण्यशास्त्रिणां गृहे गतम्। एते हि महानुभावाः स्वर्गीयाणां महामहोपाध्यायानामनन्तकृष्णशास्त्रिणां जामातरः सन्ति।

द्वितीयस्मिन् दिने प्रातःकाले विद्यापीठपुस्तकालये मध्याह्ने च वेङ्कटेश्वर-शोधसंस्थान-पुस्तकालये स्थित्वा ग्रन्थावलोकनादिकं विहितम्। अत्रापि वैष्णवागमानां शैवागमानां च नैका मातृका दृष्टाः। वेङ्कटेश्वर-शोधसंस्थानं वैखानसागमानां प्रकाशनविधाने प्रथितमिति जानन्ति विद्वांसः। तिरुपतिनगरतो नातिदूरं पर्वतशिखरे तिरुमलै-स्थाने कृतनिवासो भगवान् वेङ्कटेश्वरो वैखानसागमपद्धत्यैवार्च्यते। वेङ्कटेश्वर-

शोधसंस्थानं साम्प्रतं वेङ्कटेश्वरविश्वविद्यालयपुस्तकालयभवनस्य एकदेशेऽवस्थितम्। वेङ्कटेश्वरविश्वविद्यालय एव विशिष्टाद्वैतकोशादि-ग्रन्थानां निर्मातारो विशिष्टाद्वैतदर्शनस्य मूर्धन्या विद्वांसः श्रीमन्त-स्ताताचार्यमहोदया दृष्टाः। एते हि महानुभावाः साम्प्रतं तत्र दर्शन-शास्त्राणां पारिभाषिक-शब्दकोण-निर्माणे व्यापृताः।

अपराह्णेऽस्माभिः कालहस्ति-तीर्थस्य यात्रा मृत्तैलयानेन समाचरिता। शिवस्य भगवतो द्वादशज्योतिर्लिङ्गान्यस्माभिः पूर्वं चर्चितानि। दक्षिणे भारते पञ्चभूतलिङ्गानि प्रसिद्धानि। तद्यथा—

> मृल्लिङ्गरूपमभवत् शिव आम्रनाथः
> अब्लिङ्गरूपमभवत् खलु जम्बुकेशः।
> लिङ्गं च तैजसमभूत् त्वरुणाचलेशः
> श्रीकालहस्त्यधिपतिः खलु वायुलिङ्गम्॥
> आकाशलिङ्गमभवत् स चिदम्बरेशः

(कालहस्तीश्वर-सुप्रभातम्, १८-१९)

अत्र आम्रनाथः कृतकाञ्चीनिवासः। जम्बुकेशश्च त्रिचनापल्ली-समीपवर्ती शिवः। कालहस्तिमन्दिरं तिरुपतितो नातिदूरं स्वर्णमुखीनदीतटेऽवस्थि-तम्। तत्र भगवतोऽर्चनादिकं विधाय पुनरपि तिरुपतिनगरमेवागत्य रात्रौ तत्रैव उषित्वा प्रातर्नववादनवेलायाम् आम्रनाथस्य भगवतो दिदृक्षया श्रीकाञ्चीपुरं प्रति प्रस्थितम्। तिरुपतितः प्रस्थानात् पूर्वं प्रातः सप्तवादने केन्द्रीयसंस्कृतविद्यापीठे प्रवाचकानां श्रीमताम् एस० डी० बालसुब्रह्मण्यशास्त्रिणां गृहे तैः सह वार्तालापादिप्रसङ्ग-श्चिरस्मरणीय आसीत्।

मध्याह्ने एवास्माभिः सप्तसु पुरीषु प्रथिता काञ्चीपुरी समधिगता। अत्रास्माभिः कियत्कालं यावद्विश्रम्य काञ्चीकाम-कोटिपीठे देवदर्शनादिकं चतुर्वादनानन्तरमेव भवितेति ज्ञात्वा विद्वत्समागमाभिलाषेण विष्णुकाञ्च्यां निवसतां श्रीमतामण्णङ्गराचार्य-महोदयानां गृहं समासादि, दृष्टाश्च ते तत्र अशीत्युत्तरायुषोऽपि मध्याह्ने विश्रामवेलायामपि कार्यव्यापृताः। महताऽऽयासेन धनव्ययेन चैभिः 'वैदिकमनोहरा'नाम्नी मासपत्रिका प्रकाश्यते। वैदिकमनोहरायामेभि-स्तमिलभाषामयः सम्पूर्ण आलवाराणां दिव्यप्रबन्धः संस्कृतगिराऽनूद्य

प्रकाशितः। प्रायः षट्शताधिका ग्रन्था एभिर्विरचिता अनूदिताः संपादिताश्च। इतः परमप्यनवरतं कार्यव्यापृता एते वैष्णवेषु टैङ्गलैमतानुयायिनस्तमिलभाषामग्नानुपदेशान् संस्कृतवाण्या प्रचिचारयिषवो यूनोऽतिशेरते समुद्यमेन स्वेन। शास्त्रेषु कृतभूरिपरिश्रमाणां कृतीनामीदृशानां दर्शनेन जन्मसाफल्यं मन्वानेन मया तान् नमस्कृत्य वरदभगवतो दर्शनाय वरदराजमन्दिरं नातिदूरमवस्थितं प्रावेशि। प्रवेशानुकालमेव समजायत महती वृष्टिः प्रायो होरैककालव्यापिनी। गोपुरे एव गृहीतशरणोऽहं दृष्टवान् प्रभूतजलाप्लुतं मन्दिरप्राङ्गणं गोपुरं च। कथं कथमपि सञ्जाते वृष्ट्यवसाने जलाप्लुतेनैव पथा गर्भगृहं प्रावेशि, दृष्ट्वा च वरदभगवतो मनोरमां प्रतिमां कृतार्थीकृते चक्षुषी, अधिगतं च साफल्यं मनुष्यजनुषः।

श्रीकाञ्चीपुरी साम्प्रतं 'कांजीवरम्' इति नाम्ना प्रथिता शिवकाञ्ची, विष्णुकाञ्चीति नामभ्यां द्विधा विभक्ताऽभूत् कदाचन, अद्यापि च तथैव परिचीयते। शिवकाञ्च्यां शिवस्य शक्तेश्च, विष्णुकाञ्च्यां च विष्णोः परश्शतानि मन्दिराणि विद्यन्ते। अस्माभिर्विष्णुकाञ्च्यां केवलं वरदराजमन्दिरम्, शिवकाञ्च्यां च एकाम्रेश्वरमन्दिरं कामाक्षीमन्दिरं चावालोकि। एतदेव स्थानं शक्तिपीठेषु एकाम्रनाम्ना प्रख्यातम्। भगवत एकाम्रनाथस्य, भगवत्याः कामाक्ष्याश्च दर्शनेनात्मानं पावयित्वा रात्रौ काञ्चीकामकोटिशाङ्करमठे विश्रम्य प्रातर्मद्रपुरीं प्रति प्रस्थितम्, दशवादनं यावदधिगता च सा नगरी। प्रथमायां दक्षिणभारतयात्रायामस्माभिर्धनुष्कोटि-रामेश्वर-मदुरा-श्रीरङ्गम्-तञ्जोर-चिदम्बर-मद्रपुरीस्थितानां तीर्थानां यात्राऽक्रियत। एवं पञ्चसु भूतलिङ्गेषु मृदबाकाशप्रतिनिधीनाम् आम्रनाथ-कालहस्ति-चिदम्बरतीर्थानां यात्रा सम्पन्ना। प्रथमायां मद्रपुरीयात्रायां डॉ॰ वी॰ राघवमहोदयानां गृहम्, कुप्पूस्वामिशास्त्रिशोधसंस्थानम्, तत्रैव स्थितो मैलापुर-संस्कृतमहाविद्यालयः, अड्यार-पुस्तकालयः, मद्रपुरीविश्वविद्यालयश्च दृष्टा आसन्। स्थानस्य परिचितत्वात् संस्कृतमहाविद्यालय एव स्थितमस्माभिः। इतो नातिदूरमासीद् डॉ॰ वी॰ राघवमहोदयानाम्, पण्डितवर्यश्रीरामचन्द्रदीक्षितमहोदयानां साम्प्रतं स्वर्गीयाणां च गृहम्, अड्यारपुस्तकालयभवनं च।

नित्यकृत्यादिकं सम्पाद्य वयं सर्वप्रथमम् अड्यारपुस्तकालयमगच्छाम। यत्र यत्रास्यां यात्रायां गन्तव्यमासीत् तत्र तत्र पूर्वमेवास्माकं विभागाध्यक्षैः पत्राणि प्रेषितानि, तेषामुत्तरं चाधिगतम्। अड्यारपुस्तकालये तत्पत्रे-

प्रदर्शिते नातिविलम्बमावश्यकनियमानुकूलं सदस्यतापत्रादिकं प्रपूर्य तत्कक्षे प्रवेशोऽलम्भि, यत्रानुसन्धातारः स्वकार्यमेकान्ते शान्ते च स्थले स्थित्वा सम्पादयन्ति। एशियाटिक-सोसाइटी-पुस्तकालये यथा सर्वप्रथममस्माभिः काशीनाथभट्टरचितायाः शिवाद्वैतप्रकाशिकायाः पाठसङ्कलनमाचरितम्, तथैवात्र सर्वप्रथमं वयमादिनाथसिद्धरचितायाः परापञ्चाशिकाया देवनागरलिपिमय्याः पाठसङ्कलनमकुर्म। ग्रन्थ एषः 'अनुत्तरबोधपञ्चाशिका'-नाम्ना काश्मीरग्रन्थमालायां मुद्रितोऽप्यशुद्धिभूयिष्ठस्त्रुटितश्च विद्यते। अस्य ग्रन्थस्यान्या अपि तिस्रो मातृकास्तेलुगुलिपिमय्य आसंस्तत्र संगृहीताः। यदाऽहं परापञ्चाशिकापाठसङ्कलने व्यापृत आसम्, तदैव सहसा पृष्ठभागतो मामाह्वयतः कर्णाटदेशलब्धजनुषोऽपि साम्प्रतं वाराणसीवास्तव्यान् श्रीमतो हेब्बारशास्त्रिणो दृष्टवान्। बहुश्रुताः शास्त्रार्थपारङ्गता एते महानुभावा नानालिपिज्ञानवन्त इति पूर्वमेव परिचिता आसन्। बडोदास्थगायकवाड़शोधसंस्थानतः समागतायाः ग्रन्थलिपिमय्याः सात्वतसंहितायाः पाठसङ्कलने साहाय्यमाचरितं पूर्वमेभिर्महानुभावैः। एतेषां दर्शनेन न केवलं परापञ्चाशिकातेलुगुमातृकापाठसङ्कलनसमस्या समाहिता, अपि तु भोजनपानादीनामपि शोभना व्यवस्था समजायत। एते हि महानुभावास्तत्र भास्कररायमखिनो मीमांसासूत्रपरिशिष्टभूतस्य सङ्कर्षणकाण्डस्य व्याख्यायाश्चन्द्रिकायाः सम्पादनाय पाठसङ्कलनकर्मणि व्यापृताः सन्तोऽपि मामप्यन्वगृह्णन्निति सादरं हार्दं कार्तज्ञं प्रकाशयामि तेभ्यः।

प्रातरष्टवादनतः सायं पञ्चवादनं यावदासीद् अड्यारपुस्तकालयस्य कार्यसमयः। अड्यारपुस्तकालयो वर्तते 'थियासोफिकल सोसाइटी' इत्याख्यायाः संस्थाया अड्यारनद्यास्तटे विस्तृतस्य उद्यानस्य नारिकेलाम्रादिनानाविधैः स्वादुफलैः परिपूर्णस्य मध्यभागे। अष्टवादनतः पञ्चवादनं यावत् फलानि भक्षयित्वैव वयं शरीरस्थितिं निरवर्तामहि। स्फूर्तिदायकं स्वादु नारिकेलजलं प्रत्यहं श्रीहेब्बारशास्त्रिभिरस्माभिश्च पीयते स्म। श्रीहेब्बारशास्त्रिभिर्दात्रेण नारिकेलं विच्छिद्य निष्कासितं नवनीतकोमलं गाढतामापन्नारिकेलजलसारं दुग्धसार( मलाई )माधुर्यमप्यतिशेते स्म।

'परापञ्चाशिका'देवनागरमातृकायामेव आसीदन्ते 'पादसूत्र'-नामा ग्रन्थः। महेश्वरानन्देन 'महार्थमञ्जरीपरिमले' समुद्धृतात् चरणसूत्रादभिन्नः स्यादेष ग्रन्थ इति धिया तत्रत्याधिकारिणामनुज्ञया प्रति-

